अर्हम् । ग्रन्थाङ्कः ॥ १३ ॥

श्रीमज्जिनेश्वरसूरिशिष्यजिनचन्द्रसूरिविरचिता

# संवेगरङ्गशाला ।

नवाङ्गीवृत्तिकारकश्रीमदभयदेवसूरिशिष्येण श्रीजिनवल्लभसूरिणा संशोधिता ।

रेहइ जेसिं पयनहपरंपरा उग्गमन्तरविरुचिरा । नमिरसुरमउडसंघट्टखुडिय-वररयण-राइ व्व ॥ १ ॥ अहव सिवपहपलोयणमणजणहत्थप्पईवपंति व्व । तिहुयणमहिए ते उसभप्पमुहतित्थाहिवे नमह ॥ २ ॥ अज्ज-वि य कुतित्थियहत्थिसत्थमच्चत्थमोत्थरइ जस्स । दुग्गनयवग्गनहनिवहभीसणो तित्थमयनाहो ॥ ३ ॥

---

राजते येषां पदनखपरम्परा उद्गमदूरविरुचिरा । नमितसुरमुकुटसंघट्टखण्डितवररत्नराजिरिव ॥ १ ॥ अथवा शिवपथप्रलोकनमनोजनहस्तप्रदीपपंक्तिरिव । त्रिभुवनमहितान् तानृषभप्रमुखतीर्थाधिपान् नमत ॥ २ ॥ अद्यापि च कुतीर्थिकहस्तिसार्थमत्यर्थमाक्रमते यस्य । द्व्यनयवर्गनखनिवहभीषणस्तीर्थमृगनाथः ॥ ३ ॥

तं नमह महावीरं अणंतरायं पि परिहरियरायं। सुगयं पि सिवं सोमं पि चत्तदोसोदयारंभं ॥४॥ जे निव्वाणगया वि हु नेहदसावज्जिया वि दिप्पन्ति। ते अपुव्वपईवा जयन्ति सिद्धा जयपसिद्धा ॥ ५ ॥ अइसयसहस्ससुन्दरमयरंदुद्दामसुयसरोयस्स। जिणमुहसरप्पसूयस्स मूलनालाइयं जेहिं ॥ ६ ॥ पालिन्तपरूविन्ते निच्चं पञ्चप्पयारमायारं। गुणगणहरे गणहरे ते गोयमपभिइणो वंदे ॥ ७ ॥ अणवरयसुत्तदाणाणंदियमुणिभमरनियरपरियरिए। निच्चं चरणपहाणे करिणो व्व थुणामि उवज्झाए ॥ ८ ॥ कारुण्णपुन्नहियए धम्मुज्जयजन्तुजणियसाहेज्जे। दुज्जयनिज्जियमयणे मुणिणो पणमामि तवनिहिणो ॥ ९ ॥ गुणरायरायहाणिं नमामि सवन्नुणो महावाणिं। भीमभवागडनिवडंतजंतुनिरवज्जरज्जुं व ॥ १० ॥

---

तं नमत महावीरमनन्तराज्यमपि परिहृतरागम्। सुगतमपि शिवं सोममपि त्यक्तदोषोदयारम्भम् ॥ ४ ॥ ये निर्वाणगता अपि हु स्नेहदशावर्जिता अपि दीप्यन्ते। तेऽपूर्वप्रदीपा जयन्ति सिद्धा जगत्प्रसिद्धाः ॥ ५ ॥ अतिशयसहस्रसुन्दरमकरन्दोद्दामश्रुतसरोजस्य। जिनमुखसरःप्रसूतस्य मूलनालायितं यैः ॥६॥ पालयतः प्ररूपयतो नित्यं पञ्चप्रकारमाचारम्। गुणगणधरान् गणधरान् तान् गौतमप्रभृतीन् वन्दे ॥७॥ अनवरतसूत्रदानानन्दितमुनिभ्रमरनिकरपरिकरिकान्। नित्यं चरणप्रधानान् करिण इव स्तौम्युपाध्यायान् ॥ ८ ॥ कारुण्यपूर्णहृदयान धर्मोद्यतजन्तुजनितसहायान्। दुर्जयनिर्जितमदनान् मुनीन् प्रणमामि तपोनिधीन् ॥९॥ गुणराजराजधानीं नमामि सर्वज्ञस्य महावाणीम्। भीमभवागडनिपतज्जन्तोर्निरवद्यरज्जुमिव ॥ १० ॥

तं जयइ पवयणं पवयणं व सारं जमंगिणो दट्ठुं । वसह व्व उप्पहं पत्थिया वि लग्गन्ति मग्गम्मि ॥ ११ ॥ चिन्तारघट्टसंजोयणेण सुहज्झाणवसहसेणीए । जे भवकूवादायड्ढिऊणमुड्ढं पराणिन्ति ॥ १२ ॥ आराहणाघडीमालियाए आराहगंगिवग्गुदयं । निज्जामगे गुरू ते मुणिणो य नमामि सविसेसं ॥ १३ ॥ सुगइगममूलपयवी चउखंधाराहणा इमा जेहिं । संपत्ता ते वंदे मुणिणो गिहिणो य अभिणंदे ॥ १४ ॥ आराहणा भगवई जयउ जए जं दढं समारूढा । नावं व भव्वभविणो तरन्ति रुद्दं भवसमुद्दं ॥ १५ ॥ सा जयइ य सुयदेवी जीए पसाएण मंदमइणो वि । कइणो भवंति नियइच्छियत्थनित्थारणसमत्था ॥ १६ ॥ सयलजणसलहणिज्जं पयविं जेसिं पयप्पभावेण । पत्तो म्हि विबुहपणए ते नियगुरुणो पणिवयामि ॥ १७ ॥

---

तज्जयति प्रवचनं प्रवदनमिव सारं यदङ्गिनो दृष्ट्वा । वृषभा इवोत्पथं प्रस्थिता अपि लगन्ति मार्गे ॥ ११ ॥ चितारघट्टसंयोजनेन शुभध्यानवृषभश्रेण्या । ये भवकूपादकर्षयित्वोर्ध्वं परानयन्ति ॥ १२ ॥ आराधनाघटीमालिकयाऽऽराधकाङ्गिवर्गोदकम् । निर्यामकान् गुरून् तान् मुनीन् च नमामि सविशेषम् ॥ १३ ॥ सुगतिगममूलपदवी चतुःस्कन्धाऽऽराधनेयम् यैः । संप्राप्ता तान् वन्दे मुनीन् गृहिणश्चाभिनन्दे ॥ १४ ॥ आराधना भगवती जयतु जगति यां दृढं समारूढाः । नावमिव भव्यभविनस्तरन्ति रौद्रं भवसमुद्रम् ॥ १५ ॥ सा जयति च श्रुतदेवी यस्याः प्रसादेन मन्दमतयोऽपि । कवयो भवन्ति निजेच्छितार्थनिस्तारणसमर्थाः ॥ १६ ॥ सकलजनश्लाघनीयां पदवीं येषां पदप्रभावेन । प्राप्तोऽस्मि विबुधप्रणतान तान् निजगुरून् प्रणिपद्ये ॥ १७ ॥

इत्थं समत्थथोयव्वसत्थविसयाए पत्थुयत्थुईए। करडिघडाए सुहडो व्व दलियपच्चूहपडिवक्खो ॥१८॥ मंदमई वि सयमहं महंतगुणगणगुरूण सुगुरूण। चरणपसाएणं भव्वहियकए किंपि जंपेमि ॥ १९ ॥ इह हि वियंभन्तकयन्तसीहहम्मत्तजंतुमिगनिवहे । विलसिरदुद्दंतिंदियसावय उप्पंकलल्लक्के ॥ २० ॥ विक्कन्तकसायविलासपसंकुले मयणवणदवरउद्दे । दुव्वासणाविसप्पिर गिरिसरियापूरदुयम्मि ॥२१॥ निविडदुहविडविकिण्णे वियडंमि भवाडवीकडिल्लंमि। दीहद्धमद्धगेहिं व संचरन्तेहिं सत्तेहिं ॥ २२ ॥ गंभीरनीरनीरहिनिहित्तमुत्ताहलं व मणुयत्तं। जुगसमिलानाएणं लद्धूणं कह वि दुल्लभं ॥ २३ ॥ तत्थ वि कहिं पि सविसेसदुहं ऊसरे व वरसस्सं। मरुभूमीए कप्पद्दुमं व सुकुलाइं लद्धूणं ॥ २४ ॥

---

इत्थं समस्तस्तोतव्यशास्त्रविषयया प्रस्तुतस्तुत्या। करटिघटया सुभट इव दलितप्रत्यूहप्रतिपक्षः ॥ १८ ॥ मन्दमतिरपि स्वयमहं महागुणगणगुरूणां सुगुरूणाम्। चरणप्रसादेन भव्यहितकृते किमपि जल्पामि ॥ १९ ॥ इह हि ॥ विजृम्भत्कृतान्तसिंहधर्मात्तजन्तुमृगनिवहे। विलासिदुर्दान्तेन्द्रियस्वापदोत्पंकलल्यके ॥ २० ॥ विक्रान्तकषायविलासप्रसंकुले मदनवनदवरौद्रे। दुर्वासनाविसर्पिगिरिशरित्पूरद्रुते ॥२१॥ निविडदुःखविटपिकीर्ण्णे विकटे भवाटविकटिल्ले। दीर्घाध्वमध्यगैरिव संचरद्भिः सत्त्वैः ॥ २२ ॥ गम्भीरनीरनीरधिनिहितमुक्ताफलमिव मनुजत्वम्। युगसमिलान्यायेन लब्ध्वा कथमपि दुर्लभम् ॥ २३ ॥ तत्रापि कथमपि सविशेषदुहमूषर इव वरसस्यम्। मरुभूम्यां कल्पद्रुममिव सुकुलानि लब्ध्वा ॥ २४ ॥

तत्थ वि य भाविभद्दत्तणेण सेसत्तणेण य भवस्स । अबलत्तणेण दुज्जयतरदंसणमोहणिज्जस्स ॥२५॥ सुगुरूवदेससवणा सयं पि वा कम्मगंठिभेएणं । तडितडपालंवं पिव गुरुगिरिसरिहीरमाणेहिं ॥ २६ ॥ रोरेहिं व निहाणं सुवेज्जमिव विविहवाहिविहुरेहिं । अवडंतोपडिएहिं समत्थहत्थावलंवं व ॥ २७ ॥ सविसेसपुन्नपयरिसलब्भं सवन्नुधम्ममकलंकं । निज्जियचिन्तामणिकप्पपायवं पाविउं परमं ॥ २८ ॥ हियमेव गवेसेयव्वमप्पणो तं च जं न अहिएण । वाहिज्जइ नियमेणं कहिं पि कत्तो वि कइया वि ॥ २९ ॥ तं च तहाविहमणुवममच्चंतेगंतियं परं मोक्खे । मोक्खो य कम्मखयाओ कम्मखओ पुण विसुद्धाए ॥ ३० ॥ आराहणाए आराहियाए तातीए । सइ हियत्थीहिं जइयव्वमुवेयमुवायविरहओ होति नो जेण ॥ ३१ ॥

---

तत्रापि च भाविभद्रत्वेन शेषत्वेन च भवस्य । अवलत्वेन दुर्जयतरदर्शनमोहनीयस्य ॥ २५ ॥ सुगुरूपदेशश्रवणात् स्वयमपि वा कर्मग्रन्थिभेदेन । तटितटपापाणमिव गुरुगिरिशरिद् ह्रियमाणैः ॥ २६ ॥ दरिद्रैर्निधानमिव सुवैद्यमिव विविधव्याधिविधुरैः । अवटान्तः पतितैः समर्थहस्तावलम्बमिव ॥ २७ ॥ सविशेषपुण्यप्रकर्षलभ्यं सर्वज्ञधर्ममकलङ्कम् । निर्जितचिन्तामणिकल्पपादपं प्राप्य परमम् ॥ २८ ॥ हितमेव गवेपयितव्यमात्मनस्तच्च यन्नाहितेन । वाध्यते नियमेन कस्मिन्नपि कुतोऽपि कदाचिदपि ॥ २९ ॥ तच्च तथाविधमनुपममत्यन्तैकान्तिकं परं मोक्षे । मोक्षश्च कर्मक्षयात् कर्मक्षयः पुनर्विशुद्धायाः ॥३०॥ आराधनाया आराधितायास्तस्मात् तस्यां सदा । हितार्थिभिः यतितव्यमुपेयमुपायविरहात् भवति न येन ॥ ३१ ॥

एक्केक्कं पि इमेसिं लोगदुगावायबीयमनिरुद्धं । किं पुण तस्समवाओ जएज्ज ता तन्निरोहकए ॥ ३९ ॥ सो पुण पसत्थगंथत्थचिन्तणाविरयणाइणा चेव । सम्मं पारद्धेणं संजायइ नन्नहा जम्हा ॥ ४० ॥ अत्थेहाए तस्सेव मणसं भासणेण पुण वयणं । होइ चिय सुनिरुद्धं तल्लिहणाईहिं पुण काओ ॥ ४१ ॥ एवं च कम्मबन्धेक्कहेउपडिरुद्धजोगपसरस्स । होही महप्पणो चिय उवयारो पत्थुयपबन्धो ॥ ४२ ॥ इह तन्निरोहजणिओ एसुवयारो परोणुभवसिद्धो । संवेगवन्नणे पुण पए पए समसुहलाभो ॥ ४३ ॥ तह संवेग सनिव्वेयपमुहपरमत्थवित्थरो जत्थ । दुल्लंभो सुमिणम्मि वि वण्णिज्जइ तं परं सत्थं ॥ ४४ ॥ जत्थ पुणाणाइभवब्भासवसेणं सयं पि संसिद्धा । तह सुकर चिय गोपालबालविलयाइयाणं पि ॥ ४५ ॥

---

एकैकमप्येषां लोकद्वयापायबीजमनिरुद्धम् । किं पुनस्तत्समापातो यतेत तस्मात्तन्निरोधकृते ॥ ३९ ॥ स पुनः प्रशस्तग्रन्थार्थचिन्तनाविरचनादिना चैव । सम्यक् प्रारब्धेन संजायते नान्यथा यस्मात् ॥ ४० ॥ अर्थेहया तस्यैव मानसं भाषणेन पुनर्वचनम् । भवत्येव सुनिरुद्धं तल्लेखनादिभिः पुनः कायः ॥ ४१ ॥ एवं च कर्मबन्धैकहेतुप्रतिरुद्धयोगप्रसरस्य । भविष्यति महात्मन एवोपकारः प्रस्तुतप्रबन्धः ॥ ४२ ॥ इह तन्निरोधजनित एष उपकारः परोऽनुभवसिद्धः । संवेगवर्णने पुनः पदे पदे शमसुखलाभः ॥ ४३ ॥ तथा संवेगसहनिर्वेदप्रमुखपरमार्थविस्तरो यत्र । दुर्लभः स्वप्नेऽपि वर्ण्यते तत्परं शास्त्रम् ॥ ४४ ॥ यत्र पुनरनादिभवाभ्यासवशेन स्वयमपि संसिद्धाः । तथा सुकरा एव गोपालबालविलयादिकानामपि ॥ ४५ ॥

सा पुण काउं मणेहिं वि तदत्थ पयडण समत्थ सत्थाणि । मोत्तुं अन्नेहिं वि नाउं तीरइ न जं सम्मं ॥ ३२ ॥ तम्हा राहणसत्थं सुपसत्थमहत्थहेउपरिकिण्णं । गिहिसाहूभयविसयं बोच्छमहं तुच्छबुद्धी वि ॥३३॥ आराहणमिच्छन्तो य तिगरणं पढममेव रुंभेज्जा । अनिरुद्धं जेण इमं किं असुहं तं न जं कुणइ ॥ ३४ ॥ तथाहि ॥ असमंजसं भमन्तो निरंकुसं विविहविसयरण्णम्मि । अरइरइकुमइकारिणी कसायकलभोरुजूहजुओ ॥ ॥ ३५ ॥ कयबहुगुणतरुभंगो पमायमयमत्तमणकरी एस । अवगुंठइ अप्पाणं पए पए बहुविहरणेण ॥ ३६ ॥ अत्थनिरवेक्खवित्ती पइक्खणन्नन्नवन्नकयघडणा । असइ व विलसमाणी वाणी वि अणत्थपत्थारी ॥ ३७ ॥ असमंजसवावारो सव्वत्थ समंतओ वि अनिरुद्धो । तत्तायगोलकप्पो कायो वि न होइ कुसलकरो ॥ ३८ ॥

---

सा पुनः कर्तुमनोभिरपि तदर्थप्रकटनसमर्थशास्त्राणि । मुक्त्वाऽन्यैरपि ज्ञातुं शक्नोति न यत् सम्यक् ॥ ३२ ॥ तस्मादाराधनाशास्त्रं सुप्रशस्तमहार्थहेतुपरिकीर्णम् । गृहिसाधूभयविषयं वक्ष्याम्यहं तुच्छबुद्धिरपि ॥ ३३ ॥ आराधनामिच्छंश्च त्रिकरणं प्रथममेव रुन्ध्यात् । अनिरुद्धं येनेदं किमशुभं तन्न यत्करोति ॥ ३४ ॥ तथाहि ॥ असमंजसं भ्रमन् निरंकुशं विविधविषयारण्ये । अरतिरतिकुमतिकारिणी कषायकलभोरुयूथयुतः ॥ ३५ ॥ कृतबहुगुणतरुभङ्गः प्रमादमदमत्तमनःकरीषः । उद्धूलयत्यात्मानं पदे पदे बहुविहरणेन ( बहुविधरणेन ) ॥ ॥ ३६ ॥ अर्थनिरपेक्षवृत्तिः प्रतिक्षणमन्यान्यवर्णकृतघटना । असतीव विलसमाना वाण्यप्यनर्थप्रस्तारी ॥ ३७ ॥ असमंजसव्यापारः सर्वत्र समन्ततोऽप्यनिरुद्धः । तप्तायगोलकल्पः कायोऽपि न भवति कुशलकरः ॥ ३८ ॥

कामत्थज्जणविसया निवनीई गोयरा तह उवाया। देसिज्जंती बहुहा सत्थत्तमणत्थयं मन्ने ॥४६॥ इय संवेगाइहितत्थदेसगस्सेव एत्थ सत्थस्स। सवणपरिभावणेसु निच्चं पि बुहेहिं जइयव्वं ॥४७॥ संवेगगब्भसुपसत्थसत्थसवणं हि होइ धण्णाणं। सवणे वि धण्णतरगाणं चेव तस्समरसापत्ती ॥ ४८ ॥ अवि य ॥ जह जह संवेगरसो वण्णिज्जइ तह तहेव भव्वाणं। भिज्जन्ति खित्तजलमिम्मयामकुंभ व्व हिययाइं ॥ ४९ ॥ सारो पि य एसो चिय दीहरकालं पि चिण्णचरणस्स। जम्हा तं चिय कंडं जं विंधइ लक्खमज्झे वि ॥ ५० ॥ सुचिरं वि तवो तवियं चिण्णं चरणं सुयं पि बहुपढियं। जइ नो संवेगरसो ता तं तुसखण्डणं सव्वं ॥ ५१ ॥ तह संवेगरसो जइ खणं पि न समुच्छलेज्ज दिवसंतो। ता विहलेण किमिमिणा बज्झाणुट्ठाणकट्ठेण ॥ ५२ ॥

---

कामार्थोर्जनविषया नृपनीतिगोचरास्तथोपायाः। देशयन्ति बहुधा शास्त्रत्वमनर्थकं मन्ये ॥ ४६ ॥ इति संवेगादिहितार्थदेशकस्यैवात्र शास्त्रस्य। श्रवणपरिभावनेषु नित्यमपि बुद्धैर्यतितव्यम् ॥ ४७॥ संवेगगर्भसुप्रशस्तश्रवणं हि भवति धन्यानाम्। श्रवणेऽपि धन्यतरकाणां चैव तच्छमरसाप्राप्तिः ॥ ४८ ॥ अपि च ॥ यथा यथा संवेगरसो वर्ण्यते तथा तथैव भव्यानाम्। भिद्यन्ति क्षिप्तजलमृन्मयामकुम्भा इव हृदयानि ॥ ४९ ॥ सारोऽपि चैप एव दीर्घकालमपि चीर्णचरणस्य। यस्मात् तदेव काण्डं यद् विन्ध्यति लक्ष्मध्येऽपि ॥ ५० ॥ सुचिरमपि तपस्तप्तं चीर्णं चरणं श्रुतमपि वहुपठितम्। यदि नो संवेगरसस्तदा तत्तुषखण्डनं सर्वम् ॥ ५१ ॥ तथा संवेगरसो यदि क्षणमपि न समुच्छलेद् दिवसान्ते। तदा विफलेन किमनेन वंध्यानुष्टानकष्टेन ॥ ५२ ॥

पक्खन्तो मासन्तो छम्मासंतो व वच्छरंतो वा । जस्स न स होइ तं जाण दूरभवं अभवं वा ॥ ५३ ॥ रूवे चक्खू मिहुणे हियालिया रसवईए जह लवणं । तह परलोगविहीए सारो संवेगरसफासो ॥ ५४ ॥ एसो पुण संवेगो संवेगपरायणेहिं परिकहिओ । परमं भवभीरुत्तं अहवा मोक्खभिकंखित्तं ॥ ५५ ॥ ता तव्वुड्ढिकए चिय न केवलं कम्मवाहिविहुराणं । भवियाणमप्पणो चिय चिरगुरुविज्जोवएसाओ ॥ ५६ ॥ मेलिउ वयणदव्वे भावारोगेक्कहेतुमारद्धं । आराहणा रसायणमेयं अजरामरत्तकरं ॥५७॥ किंच ॥ परिगलइ पावसलिलं ठियस्स आराहणाससिपहाए । जीवससिकन्तमणिणो पइक्खणं दिव्वजोइस्स ॥ ५८ ॥ संवेगसारमेसा वायन्तमुणन्त भावमाणाणं । काही कलुसं पि मणं विमलं कयगफलं व जलं ॥ ५९ ॥

---

पक्षांतो मासान्तः षण्मासान्तो वा वत्सरान्तो वा । यस्य स न भवति तं जानीहि दूरभव्यमभव्यं वा ॥ ५३ ॥ रूपे चक्षुर्मिथुने हितालिका रसवत्यां यथा लवणम् । तथा परलोकविधौ सारः संवेगरसस्पर्शः ॥ ५४ ॥ एष पुनः सवेगः संवेगपरायणैः परिकथितः । परमं भवभीरुत्वमथवा मोक्षाभिकांक्षित्वम् ॥ ५५ ॥ तदा तद्वृद्धिकृत एव न केवलं कर्मव्याधिविधुराणाम् । भविकानामात्मन एव चिरगुरुवैद्योपदेशात् ॥ ५६ ॥ मेलयित्वा वचनद्रव्याणि भावारोगैकहेतुमारब्धम् । आराधनारसायणमेतदजरामरत्वकरम् ॥ ५७ ॥ किञ्च ॥ परिगलति पापसलिलं स्थितस्याराधनाशशिप्रभया । जीवशशिकान्तमणेः प्रतिक्षणं दिव्यज्योतिषः ॥ ५८ ॥ संवेगसारमेषा वदतां श्रृण्वतां भाव्यमानानाम् । अकार्षीत् कलुषमपि मनो विमलं कनकफलमिव जलम् ॥ ५९ ॥

इत्तो च्चिय ललियपया अकुडिलकोमलसुहत्थकलिया य । अक्खंडलक्खणवरा सुवण्णरयणुज्जलसरीरा ॥६०॥ सुइसुहयभद्दसद्दा विविहालंकार कलियसव्वंगा । उल्लासियसन्तरसा पगिट्ठपरलोयविसयकरा ॥ ६१ ॥ बहुभावविरयणाउ उप्पायन्ती परं पराणंदं । परिहरियअसग्गाहा अणत्थबहुला य न कहिं पि ॥ ६२ ॥ बहु एहिंतो उवजीवियत्थसारा महाभुजिस्सेव । करणविहीए वि हु कयपरिस्समा मूलकालाओ ॥ ६३ ॥ अप्पसमरइपराणं निच्चं पि हु विहियमोहणासाणं । नाणाभोगरयाणं उदग्गवयसंगयाणं च ॥ ६४ ॥ समणवियड्ढविलासीण काणमणहरणकारणं न इमा । नयणसुहदाइणी भूवणिज्जवयणा य नो होही ॥ ६५ ॥ एवं चिय दूरुज्झियनिययपरिग्गहपसंगवंछाणं । सुगिहत्थाण वि नेव्वुइ निमित्तमेसा कह न होही ॥ ६६ ॥

---

अत एव ललितपदाऽकुटिलकोमलशुभार्थकलिता च । अखण्डलक्षणवरा सुवर्णरत्नोज्वलशरीरा ॥ ६० ॥ शुचिशुभगभद्रशब्दा विविधालंकारकलितसर्वाङ्गा । उल्लासितशान्तरसा प्रकृष्टपरलोकविषयकरा ॥ ६१ ॥ बहुभावविरचनयोत्पादयन्ती परम्परानन्दम् । परिहरितासद्गाथाऽनर्थवहुला च न कुत्रापि ॥६२॥ बहव एभ्य उपजीवितार्थसारा महाभूपस्येव । करणविधिनापि हु कृतपरिश्रमा मूलकालात् ॥६३॥ आत्मशमरतिपराणां नित्यमपि हु विहितमोहनाशानाम् । ज्ञानाभोगरतानामुदग्रव्रतसंगतानां च ॥ ६४ ॥ श्रमणविदग्धविलासिनां कर्णमनोहरणकारणं नेमा । नयनसुखदायिनी भ्रूवर्णीयवदना च न भवति ॥ ६५ ॥ एवमेव दूरोज्झितनिजकपरिग्रहप्रसंगवांच्छानाम् । सुगृहस्थानामपि निवृत्तिनिमित्तमेपा कथं न भविष्यति ॥ ६६ ॥

किंच ॥ जह यणन्तरजायंपि किंपि कट्ठिट्ठगोवलाइदलं । साडणसन्धणविहिणा काऊणं अवचिओवचियं ॥ ६७ ॥ आयारन्तरविहिणा ठवेइ सुविसिट्ठमंदिरत्तेण । अइनिपुणसुत्तहारो तहेव अहयं पि उवउत्तो ॥ ६८ ॥ सुयदिट्ठचिरपमेयं किंपि पारद्धगंथपाउग्गं । गाहासिलोगगाहद्धकुलगपमुहं परकयं पि ॥ ६९ ॥ अवणयणदाणविहिणा कहिं पि काऊण अवचिओवचियं । दाराणुगुणत्तेणं एत्थं कत्थवि ठविस्सामि ॥ ७० ॥ सपबन्धेसु य नियकव्वगब्भं चागच्छमवरकइरइयं । पक्खिवमाणो तक्करणसचित्तजुत्तोवि होइ लहू ॥ ७१ ॥ केवलमुवयारकए परेसिमेसो मह समारंभो । सो य सपरोभयउत्तीहिं जुत्तिजुत्तत्तणमुवेइ ॥७२॥ दीसइ य जेण सविसेसगाहगे आगयम्मि वणिज्जजणो । सपरोभयहट्टपयट्टभंड विच्छड्ड ववहारी ॥ ७३ ॥

---

किंच ॥ यथा चानन्तरजातमपि किमपि काष्ठेष्टगोपालादिदलम् । शाटनसन्धनविधिना कृत्वापचितोपचितम् ॥ ६७ ॥ आकारान्तरविधिना स्थापयति सुविशिष्टमन्दिरत्वेन । अतिनिपुणसूत्रधारस्तथैवाहमप्युपयुक्तः ॥६८॥ श्रुतदृष्टचिरप्रमेयं किमपि प्रारब्धग्रन्थप्रायोग्यम् । गाथाश्लोकगाथार्द्धकुलकप्रमुखं परकृतमपि ॥ ६९ ॥ अवनयनदानविधिना कथमपि कृत्वाऽवचित्तोपचितम् । द्वारानुगुणत्वेनात्र कथमपि स्थापयिष्यामि ॥ ७० ॥ स्वप्रबन्धेषु च निजकाव्यगर्भं ज्ञात्वाऽपरकविरचितम् । प्रक्षिप्यमाणस्तत्करणसचित्तयुक्तोऽपि भवति लघुः ॥७१॥ केवलमुपकारकृते परेषामेष मम समारम्भः । स च स्वपरोभययुक्तिभिर्युक्तियुक्तत्वमुपैति ॥ ७२ ॥ दृश्यते च येन सविशेषग्राहक आगते वणिज्यजनः । स्वपरोभयहट्टप्रवृत्तभाण्डं विस्तृत्य व्यवहारी ॥ ७३ ॥

एसा य पत्थुयाराहणेह संवेगरंगसालत्ति । भणणइ विणिच्छियत्था गुणनिप्फणेण नामेण ॥ ७४ ॥ एसा य जहा रण्णा महसेणेणं नवल्लदिक्खेणं । जह गिहिविसया पुट्ठा सिट्ठा जह गोयमेणं च ॥ ७५ ॥ जह तं सम्मं आराहिऊण सो पाविही य नेव्वाणं । तह एत्थ कहिज्जंतं अवहियचित्ता निसामेह ॥ ७६ ॥ अत्थि धणधण्णपडिपुण्णपउरपुरगामनिवहरमणिज्जो । रमणिज्जरूपलावन्नजुवइरेहन्तदिसिचक्को ॥ ७७ ॥ दिसि चक्कागयनेगमकीरन्तविचित्तभूरिववहारो । ववहारज्जियबहुधणजणकारियपवरसुरभवणो ॥ ७८ ॥ सुरभवणतुंगसिंगग्गधवलधयनिवहभरियनहविवरो । नहविवरठियखेयरपरिभावियरम्मयगुणोहो ॥ ७९ ॥ रम्मयगुणोहरंजियपंथियकीरन्तवासपरिवंछो । कच्छो नाम जणपओ जंबूदीवम्मि भरहद्धे ॥ ८० ॥

---

एषा च प्रस्तुताराधनेह संवेगरंगशालेति । भण्यते विनिश्चितार्था गुणनिष्पन्नेन नाम्ना ॥ ७४ ॥ एषा च यथा राज्ञा महासेनेन नवीनदीक्षितेन । यथा गृहिविषया पृष्टा शिष्टा यथा गौतमेन च ॥७५॥ यथा तां सम्यगाराधयित्वा स प्राप च निर्वाणम् । तथात्र कथ्यमानामवहितचित्ता निशामयत ॥ ७६ ॥ अस्ति धनधान्यपरिपूर्णप्रचुरपुरग्रामनिवहरमणीयः । रमणीयरूपलावण्ययुवतिराजद्दिगूचक्रः ॥ ७७ ॥ दिक्चक्रागतनैगमकुर्वद्विचित्रभूरिव्यवहारः । व्यवहारार्जितबहुधनकारितप्रवरसुरभवनः ॥ ७८ ॥ सुरभवनतुंगश्रृंगाग्रधवलध्वजनिवहभृतनभोविवरः । नभोविवरस्थितखेचरपरिभावितरम्यकगुणौघः ॥ ७९ ॥ रम्यकगुणौघरञ्जितपान्थिककुर्वद्वासपरिवांछः । कच्छो नाम जनपदो जम्बूद्वीपे भरतार्धे ॥ ८० ॥

गोविंदसयाणुगयो बहुहलिओ णेग अज्जुणो जो य । एगहरिहलिय अज्जुणमवमन्नइ भारहं कहं पि ॥८१॥ तत्थ जुवइ व्व सुविया दिणअरमुत्ति व्व पउरपहकलिया । सुविभत्तवन्नसन्ना पच्चक्खा सद्दविज्ज व्व॥८२॥ जा वहइ गरु य परिहा सलिलाउलसालवलयपरिखित्ता । जलनिहि जगइ वेढिय जंबुदीवस्स समसीसिं ॥८३॥ जा निच्चपयट्टविसट्टनट्टकलगेयवड्ढियाणंदा । परचक्कभयविमुक्का कयजुगलीलं विडंवेइ ॥८४॥ अइगरुय रिद्धिवित्थरपरिगयजणदिज्जमाणदाणाए । वेसमणो पि हु मण्णे जीए समणो व्व पडिहाइ ॥ ८५ ॥ सा हिमसेलसमुज्जलमहन्तपसाय रुद्धदिसिपसरा । सिरिमाला नामेणं अहेसि नयरी सुरपुरि व्व ॥ ८६ ॥ पउमाणणाहिं सुपओहराहिं वियसंतकुवलयच्छीहिं । बहिया पुक्खरणीहिं अन्तो नारीहिं जा सहइ ॥ ८७ ॥

---

गोविन्दशतानुगतो बहुहलिकोऽनेकार्जुनो यश्च । एकहरिहलिकार्जुनमवमन्यते भारतं कथमपि ॥ ८१ ॥ तत्र युवतीव सुवृता दिनकरमूर्त्तिरिव प्रचुरपथकलिता । सुविभक्तवर्णसन्ना प्रत्यक्षा शब्दविद्येव ॥ ८२ ॥ या वहति गुरु च परिखाः सलिलाकुलशालवलयपरिक्षिप्ताः । जलनिधिजगति वेढितजम्बूद्वीपस्य समसीमाम् ॥ ८३ ॥ या नित्यप्रवृत्तविशिष्टनाट्यकलगेयवर्द्धितानन्दा । परचक्रभयविमुक्ता कृतयुगलीलां विडम्बयति ॥ ८४ ॥ अतिगुरुकर्द्धिविस्तारपरिगतजनदीयमानदानायाः । वैश्रमणोऽपि मन्ये यस्याः श्रमण इव प्रतिभाति ॥ ८५ ॥ सा हिमशैलसमुज्वलमहाप्रासादरुद्धदिक्प्रसरा । श्रीमाला नाम्नाऽऽसीन्नगरी सुरपुरीव ॥ ८६ ॥ पद्माननाभिः सुपयोधराभिर्विकसत्कुवलयाक्षिभिः । बहिःपुष्करणीभिरन्तर्नारीभिर्या राजते ॥ ८७ ॥

बहुसाहियाओ विस्सुयकइकुलकलियाओ काणणालीओ । वहिया अन्तोपवराउ जीए छज्जन्ति य सहाओ ॥ ॥ ८८ ॥ परमेक्को चिय दोसो तीए पुरीए गुणालिकलियाए । खिप्पंति मग्गणा जं परंमुहा धम्मवन्तेहि ॥ ८९ ॥ निम्मलजसोऽवलंभे अच्छित्तं सगई य साहूसु । रागो सुयम्मि चिन्ता निच्चं चिय धम्मकम्मम्मि ॥ ९० ॥ साहम्मिएसु वच्छल्लया य रक्खा दुहत्तसत्तेसु । सुगुणजणम्मि तण्हा निवासिणो जत्थ लोअस्स ॥९१॥ पालेइ तं च पणमन्तभूवमणि मउडमसिणपयपीढो । अच्चन्तपयंडपयावविजियसारइय दिवसयरो ॥ ९२ ॥ तिक्ख करवालनिद्दयनिद्दारियदसिरयवेरिकरिकुम्भो । पुरपरिहुब्भडभुयडंडचंडिमुहुमरियविपक्खो ॥ ९३ ॥ रूवविणि-ज्जियमयणो ससिवयणो कमलपत्तसमनयणो । अचंतपउरसेणो राया नामेण महसेणो ॥ ९४ ॥

---

बहुसाधिकाः विश्रुतकविकुलकलिकाः काननाल्यः । वहिरन्तः प्रवरा यस्या राजन्ति च सभाः ॥ ८८ ॥ परमेक एव दोषस्तस्यां पुर्या गुणालिकलिकायाम् । क्षिप्यन्ते मार्गणा यत् पराङ्मुखा धर्मवद्भिः ॥ ८९ ॥ निर्मलयशोऽवलम्भेऽर्थित्वं संगतिश्च साधुषु । रागो श्रुते चिन्ता नित्यमेव धर्मकर्मणि ॥ ९० ॥ साधर्मिकेषु वात्सल्यता च रक्षा दुःखार्त्तसत्त्वेषु । सुगुणजने च तृष्णा निवासिनो यत्र लोकस्य ॥ ९१ ॥ पालयति तां च प्रणमद्भूपमणि मुकुटमसृणपादपीठः । अत्यन्तप्रचण्डप्रतापविजितशारदिक दिवसकरः ॥ ९२ ॥ तीक्ष्णकरवा-लनिर्दयनिर्दारितदस्युवैरिकरिकुम्भः । पुरपरिघोद्भटभुजदण्डचण्डान्मुहुर्मर्दितविपक्षः ॥ ९३ ॥ रूपविनिर्जितमदनः शशिवदनः कमल-पत्रसमनयनः । अत्यन्तप्रचुरसेनो राजा नाम्ना महासेनः ॥ ९४ ॥

सोहग्ग चाय विउसत्तणेण एगो वि णेगरूवो व्व । रामामग्गण विवुहाणं हिययगेहेसु जो वुच्छो ॥९५॥ डिंडीरपिण्डपंडुरछत्तछन्नन्तरं दिसाचक्कं । छज्जइ य विजयजत्तासु जस्स विहियट्टहासं च ॥ ९६ ॥ उज्झियपरिग्गहाणं वज्जियविसयाण भिक्खुवित्तीण । सुमुणीण पइव सत्तूणं जो धम्मगुरुत्तणं पत्तो ॥ ९७ ॥ पग्गहियखग्गपसरत्तनीलकंतिछड्डुब्भडो हत्थो । जस्स रणे उग्गयधूमकेउ सोहं समुव्वहइ ॥ ९८ ॥ तं नत्थि जं न जाणइ स महप्पा वुद्धिपगरिसवसेण । किन्तु निदक्खिन्नत्तं खलत्तणं पि हु न जाणेति ॥९९॥ अच्चंतहयगवो वि हु पउर विपत्ती वि जं स नरनाहो । बहुकरिवरपरिकिण्णो सुहिओ वि य तं महच्छरियं ॥१००॥ एक्को चिय से दोसो जं सुगुणड्ढो वि तेण सिट्ठजणो । अकरो चाइयवसणो अनासदंडो कओ सव्वो ॥ १०१ ॥

---

सौभाग्यत्यागविद्वित्त्वेनैकोऽप्यनेकरूप इव । रामामार्गणविबुधानां हृदयगेहेषु यो निवसन् ॥ ९५ ॥ डिण्डीरपीण्डपाण्डुरच्छत्राच्छन्नान्तरं दिशाचक्रम् । राजते च विजययात्रासु यस्य विहिताट्टहास इव ॥ ९६ ॥ उज्झितपरिग्रहाणां वर्जितविषयाणां भिक्षुवृत्तीनाम् । मुनीनां पतिरिव शत्रूणां यो धर्मगुरुत्वं प्राप्तः ॥ ९७ ॥ प्रग्रहीतखड्गप्रसरन्नीलकान्तिच्छटोद्भृतो हस्तः । यस्य रणे उद्गतधूमकेतुशोभां समुद्वहति ॥ ९८ ॥ तन्नास्ति यन्न जानाति स महात्मा बुद्धिप्रकर्षवशेन । किन्तु निर्दाक्षिणत्वं खलत्वमपि न जानाति ॥ ९९ ॥ अत्यन्तहयगजोऽपि हु प्रचुरविपत्तिरपि यत् स नरनाथः । बहुकरिवरपरिकीर्ण्णः सुहितोऽपि च तन्महाश्चर्यम् ॥ १०० ॥ एक एव तस्य दोषो यत् सुगुणार्थोऽपि तेन श्रेष्ठजनः । अकरस्त्याजितव्यसनोऽत्रासदण्डः कृतः सर्वः ॥ १ ॥

तस्स य रन्नो मुहचंद चंदिमाविजियकोमुइमयंका । निम्मेर रूयरायन्त चारुसिंगार ससिरीया ॥ २ ॥ उत्तमकुलसंभूया सुसीलयालंकिया विणयपणया । भत्ता सुगुणसन्ता भज्जा नामेण कणगवई ॥ ३ ॥ नीसेसकलाकोसलकलिओ रूवी गुणालओ सोमो । पडिबिंबो इव रण्णो य अहेसि पुत्तो जयसेणो ॥ ४ ॥ सुविसुद्धबुद्धिपगरिसनिच्छियनीसेस संसयत्थेसु । नयगब्भमहत्थपसत्थसत्थपरिभावणपरेसु ॥ ५ ॥ संधीविग्गह जाणा सणाइ गुणछक्क पणिहियमणेसु । नियसामि कज्जसाहण बहुमण्णियजीवियव्वेसु ॥ ६ ॥ अवरोप्परगाढपरूढपणयपरिवत्तविप्पओगेसु । सुकईसु व अपुव्वत्थचिंतणच्छिन्नवंछेसु ॥ ७ ॥ मंतीसु धणंजय जयसुबंधुपमुहेसु विस्सुयजसेसु । आरोवियरज्जभारो सो य णिवो कीलइ जहित्थं ॥ ८ ॥

---

तस्य च राज्ञो मुखचन्द्र चन्द्रिमाविजितकौमुदीमृगांका । निर्मेयरूपराजन्ती चारुशृंगारा सश्रीका ॥ २ ॥ उत्तमकुलसंभूता सुशीलतालंकृता विनयप्रणता । भक्ता सुगुणशान्ता भार्या नाम्ना कनकवती ॥ ३ ॥ निःशेषकलाकौशल्यकलितो रूपी गुणालयः सौम्यः । प्रतिविम्ब इव राज्ञश्चासीत् पुत्रो जयसेनः ॥ ४ ॥ सुविशुद्धबुद्धिप्रकर्षनिश्चितनिश्शेषसंशयार्थेषु । नयगर्भमहार्थप्रशस्तशास्त्रपरिभावनपरेषु ॥ ॥ ५ ॥ सन्धिविग्रहयानासनादिगुणषट्प्रणिहितमनःसु । निजस्वामिकार्यसाधनबहुमानितजीवितव्येषु ॥ ६ ॥ अपरोपरगाढप्ररूढप्रणयपरित्यक्तविप्रयोगेषु । सुकविष्विवापूर्वार्थचिन्तनच्छिन्नवांछेषु ॥ ७ ॥ मन्त्रिषु धनंजयजयसुबन्धुप्रमुखेषु विश्रुतयशःसु । आरोपितराज्यभारः स च नृपः क्रीडति यथेच्छम् ॥ ८ ॥

तथाहि—कयाइ मंजुगुंजिउब्भडपडंतमेउरं । विसंथुलुच्छलंत तारहारलट्ठकंठियं । अयंगहारनुद्ददीहकंचिदामसुत्तयं । विचित्तयं पलोयए पणंगणणा नट्टयं ॥ ९ ॥ कयाइ गाढरुट्ठदुट्ठमत्तहत्थिकंधरं । समारूहित्तु पाणिपल्लवेण धारिअंकुसो । सलीलमाययप्पहेसु काणणेसु कीलिउं ॥ जणोवरोह कायरो समन्दिरे नियत्तए ॥ १० ॥ कयाइ भूरिचंचरीयपिज्जमाणदाणयं । गयंद मंडलिं सुवेगयं तुरंगवग्गयं । विसिट्ठमट्ठकट्ठसिट्ठयं सुसंदणुक्करं । पगिट्ठलद्धसामए महाभडेय पेच्छए ॥ ११ ॥ कयाइ पुण्णपावबन्धमोक्खजुत्तिजुत्तयं । अणेगभंगसंगयं भवस्स रूवसूयगं । निरंतरं तदत्थदिन्नचित्तउ सविम्हयं असेसदोसनासयं निसामए य आगमं ॥ १२ ॥ इय पुव्वभवज्जियभूरिपुन्नपब्भारपुण्णवंछस्स । वोलेंति वासरा तस्स राइणो विविहकीलाहिं ॥ १३ ॥

---

तथाहि—कदाचिन्मञ्जुगुञ्जितोद्भटपातान्तमेदुरम् । विसंस्थूलोच्छसत्तारहारलष्टकण्ठिकम् अपांगभारनुत्तदीर्घकांचिदामसूत्रकम् । विचित्रकं प्रलोकते पणाङ्गनानां नृत्यकम् ॥ ९ ॥ कदाचिद्गाढरुष्टदुष्टमत्तहस्तिकन्धरम् । समारुह्य पाणिपल्लवेन धारितांकुशः सलील काननेषु क्रीडितुम् । जनावरोधकातरः स्वमन्दिरे निवर्त्तते ॥ १० ॥ कदाचिद् भूरिचञ्चरीकपीयमानदानकम् । गजेन्द्रमण्डलि सुवेगकं तुरंगवर्गकम् । विशिष्टमृष्टकाष्ठश्रेष्ठकं सुस्यन्दनोत्करम् । प्रकृष्टलब्धसामकान् महाभटान् पश्यति ॥११॥ कदाचिद् पुण्यपापबन्धमोक्षयुक्तियुक्तकम् । अनेकभंगसंगकं भवस्य रूपसूचकं निरन्तरं तदर्थदत्तचित्तकः सविस्मयम् । अशेषदोषनाशकं निशामयच्चागमम् ॥ १२ ॥ इति पूर्वभवार्जितभूरिपुण्यप्राक्भारपूर्णवांछस्य । गच्छन्ति दिवसस्तस्य राज्ञो विविधक्रीडाभिः ॥ १३ ॥

अह अन्नया कयाई अच्छाणी मंडवे निसन्नस्स । सव्वेअरतरुणी धुव्वमाणसिय चारुचमरस्स ॥ ११४ ॥ दूरदिसागतसामंतमंडलीपणयचलणकमलस्स । अन्नन्नसेवगजणेसणियं पक्खित्तचक्खुस्स ॥ ११५ ॥ कंपिरतणुणा सियसिररुहेण सक्खाजरा पणिहिण व्वं । कंचुइणा संलत्तं सिग्घं उवसप्पिऊणेवं ॥ ११६ ॥ जयउ जयउ देवो माणमीलन्तरामामुहकुमुयमयंको । सोक्खवल्लीण कंदो कुवलयदलदीहच्छीए ॥ ११७ ॥ लच्छीए लीलालसब्भुयपरिसत्तो सव्वसंपत्तिजुत्तो । विण्णवणिज्जमिमं पहु पडिहयपडिवक्खलक्ख ॥ ११८ ॥ अम्हाणं अन्तेउरट्ठियाणं सव्वत्तो दिन्नदिट्ठीणं । परपुरिसपलोयणवाउलाणं कन्तो वि झत्ति संपत्तो ॥ ११९ ॥ वणवारणो व्व एगो पुरिसो अनिवारणो भीमो । विसोव्व खग्गधण्णूए संगतो गिरिवरो व्व ( गरुयंगो उब्भडभुय दंडुवद्ध वीरबलउ अक्खुद्धमणो )॥ १२० ॥

---

अथान्यदा कदाचिदास्थानी मण्डपे निषण्णस्य । सव्येतरतरुणीधूयमानसितचारुचामरस्य ॥११४॥ दूरदिशागतसामन्तमण्डलीप्रणतचरणकमलस्य । अन्यान्यसेवकजनैपणीय प्रक्षिप्तचक्षुपः ॥ ११५ ॥ कम्पिततनुना सितशिरोरुहेण सख्याजराप्रणिधिनेव । कंचुकिना संलप्तं शीघ्रमुपसर्पयित्वैवम् ॥ ११६ ॥ जयतु जयतु देवो मानमीलद्रामामुखकुमुदमृगाङ्कः । सौख्यवल्लीनां कन्दः कुवलयदलदीर्घाक्ष्याः ॥ ११७ ॥ लक्ष्म्या लीलालसद्भुजपरिसक्तः सर्वसम्पत्तियुक्तः । विज्ञपनीयमिदं प्रभो प्रतिहतप्रतिपक्षलक्षः ॥११८॥ अस्माकमन्तःपुरे स्थितानां सर्वतो दत्तदृष्टीनाम् । परपुरुषप्रलोकनव्याकुलानां कुतोऽपि झटिति संप्राप्तः ॥ ११९ ॥ वनवानरवदेकः पुरुपोऽनिवारणो भीमः । विष्णुरिव खड्गधनुरुपसंगतो गिरिवर इव गुर्वङ्गः उद्भटभुजदण्डोद्बद्धवीरबलोऽक्षुब्धमनाः ॥ १२० ॥

कणगवईए देवीए वासभवणम्मि णियगेहे व । नाहो व सो पविट्ठो अवगन्नियकंचुइ समूहो ॥ २१ ॥
णिसिअग्गखग्गघाया वि तत्थ न कमंति वज्जथंभे व । दप्पुब्भडा वि सुहडा तम्मुहपवणेण निवडन्ति ॥ २२ ॥
करुणाए च्चिय मन्ने न पहरियं तेण अम्हपुरिसाणं । अन्नह कयन्तकप्पस्स तस्स कत्तो भवे खलणा ॥ २३ ॥
अस्सुयमदिट्ठपुव्वं इय एरिस कज्जमिन्हिमापडियं । एत्तो उवरिं देवो आइसइ जयं तयं कुणिमो ॥ २४ ॥
इय सोच्चा कोवभरुब्भवन्तभालयलभिउडिभीमेण । पुणरुत्त फुरुफुरन्ताहरेण तंडविय भुमुहेण ॥ २५ ॥
सामंतसुहडसेणावईसु निव्वडिय पुरिसयारेसु । नवकुवलयदलदीहा चक्खूखित्तामहीवइणा ॥ २६ ॥ अह तं
कयंतजणणिं व भीसणं पेच्छिऊण सामंता । संखोहवसा जाया चित्तालिहिय व सव्वे वि ॥ २७ ॥

---

कनकवत्या देव्या वासभवने निजकगेह इव ॥ नाथ इव सः प्रविष्टोऽवगणितकञ्चुकिसमूहः ॥ २१ ॥ निशिताग्रखड्गघाता अपि न तत्र क्रामन्ति वज्रस्तम्भ इव । दर्पोद्भटा अपि सुभटास्तन्मुखपवनेन निपतन्ति ॥२२॥ करुणयैव मन्ये न प्रहृतं तेनास्मत्पुरुषेषु । अन्यथा कृतान्तकल्पस्य तस्य कुतो भवेत् स्खलना ॥ २३ ॥ अश्रुतमदृष्टपूर्वमितीदृक्कार्यमिदानीमापतितम् । इत उपरि देव आदिशति यथा तथा कुर्मः ॥ २४ ॥ इति श्रुत्वा कोपभरोद्भवद्भालतलभ्रूकुटिभीमेन । पुणरुत्त (अव्ययं कृतकरणार्थे) स्फुरु स्फुरदधरेण ताण्डवित भ्रूमुखेन ॥ २५ ॥ सामन्तसुभटसेनापतिपु निष्पतितपुरुषकारेपु । नवकुवलयदलदीर्घश्चक्षुःक्षिप्ता महीपतिना ॥ २६ ॥ अथ तां कृतान्तजननीमिव भीपणां प्रेक्ष्य सामन्ताः । संक्षोभवशाज्जाताश्चित्रलिखिता इव सर्वेऽपि ॥ २७ ॥

सेणावइ सुहडेहि वि तव्वइयरसवणवत्तमाणेहिं । सुस्समणेहिं व संलीणयाए दिण्णं मणो सत्ति ॥ २८ ॥ राया वि सहं सुण्णं व पेच्छिउं पाणिकलिअकरवालो । धी सेवगाहमा विफलविहियपोरिसफडाडोवा ॥ २९ ॥ अवसरह तुरियमेत्तो चक्खुप्पसराउ इय पयंपन्तो । आवद्धपरियरो लहु नीहरिओ राय भवणातो ॥ १३० ॥ अह चंडचवलमंगलविस्संभरपमुह अंगरक्खेहिं । भालयलघडियकरसंपुडेहिं भत्तीए विण्णत्तो ॥३१॥ देव पसीयह वियरह आएसं अम्ह एत्थ पत्थावे । विरमह सयं न जुत्तो पढमं चिय पत्थणा भंगो ॥ ३२ ॥ जइ वि सयं न वियत्तह खणमेक्कं तहवि पेच्छगा होह । चक्खुक्खेवा हि पहूणं हुन्ति पारद्ध विग्घहरा ॥ ३३ ॥ इय सविणयप्पयंपि य सवणमणागोवसन्तपरिकोवो । दक्खंपियाए दिट्ठीए पत्थिवो तेणु मन्नेइ ॥ ३४ ॥

---

सेनापतिसुभटैरपि तद्व्यतिकरश्रवणवर्त्तमानैः । सुश्रवणैरिव संलीनतायां दत्तं मनः झटिति ॥ २८ ॥ राजाऽपि सभां शून्यामिव दृष्ट्वा पाणिकलितकरवालः । धिक् सेवकाधमान् विफलविहितपौरुषफटाटोपान् ॥ २९ ॥ अपसरत त्वरितमितश्चक्षुःप्रसरादिति प्रजल्पन् । आवद्धपरिकरः शीघ्रं निःसृतो राजभवनात् ॥ १३० ॥ अथ चण्डचपलमङ्गलविश्वंभरप्रमुखाङ्गरक्षैः । भालतलघटितकरसंपुटैर्भक्त्या विज्ञप्तः ॥ ३१ ॥ देव प्रसीदत वितरतादेशमस्माकमत्र प्रस्तावे । विरमत स्वयं न युक्तः प्रथममेव प्रस्तानाभङ्गः (प्रार्थनाभंगः) ॥ ३२ ॥ यद्यपि स्वयं न विलभत्वं क्षणमेकं तथापि दर्शका भवत । चक्षुःक्षेपा हि प्रभूनां भवन्ति प्रारब्धविघ्नहराः ॥ ३३ ॥ इति सविनयप्रजल्पितश्रवणात् मनागुपशान्तपरिकोपः । दरकंपितया दृष्ट्या पार्थिवस्ताननुमन्यते ॥ ३४ ॥

तो चावकुंतकरवालभल्लिसेल्लाइपहरणसमया । निव्विवरवम्मभूसिय तणुणो चंडाइणो चलिया ॥ ३५ ॥
पत्ता य कमेणऽन्तेउरंमि दिट्ठो य तत्थ सो पुरिसो । आसीनो सेज्जाए देवीए समन्ततो भणिओ ॥ ३६ ॥
रे रे पुरिसाऽहम सामिसालमहिल्लम्मलिच्छसमसील । कामिंतो तुममिन्हि पइससि कीणासवयणम्मि ॥३७॥
नियदुच्चरिएण वि तुह हयस्स जइ वि हु न पहरिउं जुत्तं । तह वि हु नियपहुचित्ताणुवित्तिओ हम्मसि निरुत्तं ॥
॥३८॥ नवरं एव ठिए वि हु खामेसु नराहिवं विणयपणओ । जइ जीवियं समीहसि अहवा सवडं मुहो होसु
॥ ३९ ॥ मुंच सुभवणऽब्भन्तरमुवदंससु पोरिसं खणं एक्कं । जावज्ज वि निवडइ नो कयन्तदिट्ठि व बाणाली
॥ १४० ॥ इय जंपिऊण अचन्तमच्छरुच्छाह भूरिसंरंभो । जाव न ते पहरंती वज्जरियं ताव तेण इमं ॥ ४१ ॥

---

ततश्चापकुन्तकरवालभल्लिशेलादिप्रहरणसमयाः । निर्विवरवर्मभूषिततनवश्चण्डादयश्चलिताः ॥ ३५ ॥ प्राप्ताश्च क्रमेणान्तःपुरे दृष्टश्च तत्र स पुरुषः । आसीनः शय्यायां देव्याः समन्ततो भणितः ॥ ३६ ॥ रे रे पुरुषाधम स्वामिशालमहिलां म्लेच्छसमशीलां कामयन् त्वमिदानीं प्रविशसि कीनाशवदने ॥ ३७ ॥ निजदुश्चरितेनापि तव हतस्य यद्यपि न प्रहर्तुं युक्तम् । तथापि हु निजप्रभुचित्तानुवृत्त्या हन्यसे निरुक्तम् ॥ ३८ ॥ नवरमेवं स्थितेऽपि हा क्षमापय नराधिपं विनयप्रणतः । यदि जीवितं समीहसि अथवा सवडं ( सन्मुखो भव ) ॥ ३९ ॥ मुञ्च सुभवनाभ्यन्तरमुपदर्शय पौरुषं क्षणमेकम् । यावदद्यापि निपतन्ति नो कृतान्तदृष्टिरिव बाणालिः ॥१४०॥ इति जल्पयित्वाऽत्यन्तमत्सरोत्साहभूरिसंरम्भाः । यावन्नते प्रहरन्ति कथितं तावत् तेनेदम् ॥ ४१ ॥

किं वा इमिणा सो को वि होउ जुज्जइ न संपयमुवेहा । भज्जंपि अरक्खन्तो कह रक्खिस्सामि महिवलयं ॥ ५६ ॥ देसंतरेसु पि इमो मज्झ कलंको चिरं पवित्थरिही । एत्तोच्चिय रामो वि हु सीयाए कए गओ लंकं ॥ ५७ ॥ ता जावज्जवि णो दूरदेसमणुसरइ सो दुरायारो । ताव सयमेव गंतूण तं अणज्जं निगिण्हामि ॥ ५८ ॥ थंभणपमुहं चिरसिक्खियं च विज्जाबलं परिक्खासी । इति चिंतिय कइवय सुहडसंगओ पट्ठिओ राया ॥ ५९ ॥ अह भूमिवइं मुणिउं चलियं चलिओद्धुरसिन्धुरभीमयरं । मयराइधयाउलभूसिरहं रहसुब्भडसेवगरुद्धदिसं ॥ १६० ॥ दिसि चक्कपवट्टतुरंगगणं गणनायकदण्डवईहिं जुयं । जुवइजणकायरं खोभयकरं करहोह परोवियव-क्खरयं ॥ ६१ ॥ रयजाणवसुक्खयक्खोणिरयं रयणुब्भडभूसणवित्थरियं । छुरियाइ महाउहदिन्नभयं भयकं-पिरबालय चत्तपहं ॥ ६२ ॥

---

किवाऽनेन स कोऽपि भवतु युज्यते न सांप्रतमुपेक्षा । भार्यामप्यरक्षन् कथं रक्षिष्यामि महीवलयम् ॥ ५६ ॥ देशान्तरेष्वप्ययं मम कलंकश्चिरं प्रविस्तरिष्यति । अत एव रामोऽपि हा सीतायाः कृते गतो लंकाम् ॥ ५७ ॥ तस्माद् यावदद्यापि नो दूरदेशमनुसरति स दुराचारः । तावत् स्वयमेव गत्वा तमनार्य्यं निगृह्णामि ॥ ५८ ॥ स्तम्भनप्रमुखं चिरशिक्षितं च विद्याबलं परीक्षामि । इति चिन्तयित्वा कतिपयसुभटसंगतः प्रस्थितो राजा ॥ ५९ ॥ अथ भूमिपतिं मत्वा चलितं चलितोद्धुरसिन्धुरभीमतरम् । मकरादिध्वजाकुलभूपितखं रथसु-भटसेवकरुद्धदिशम् ॥ १६० ॥ दिक्चक्रप्रवृत्ततुरंगगणं गणनायकदण्डपतिभिर्युतम् । युवतिजनकायरक्षोभकरं करभौघप्ररोपितपाखरकम् ॥ ॥ ६१ ॥ रतयानवसुक्षय क्षोणिरजो रत्नोद्भटभूपणविस्तरितम् । क्षुरिकादिमहायुधदत्तभयं भयकम्पिबालकत्यक्तपथम् ॥ ६२ ॥

पहसंतपढंतसु मागहयं हयहेसिय तासिअसिंखलयं। लयणग्गगयं गिहिं सच्चवियं वियसन्त महाभडलोयणयं ॥ ६३ ॥ नगरीउ बहुं चउरंगबलं बलवन्तविपक्खक्खयएक्कसहं । सहस च्चिय पाविय भूरिमहं महसेणणुमग्गिण-नीहरियं ॥ ६४ ॥ अह तेण समग्गेण वि परिओ पवरतुरगमारूढो । ऊसियसियायपत्तो राया जा जाइ थेवपहं ॥ ६५ ॥ ताव पुरिसेण तेणं दरदलियकवोलमीसि हसिऊणं । नरनाहं मोत्तुणं थंभियमवरं बलं सयलं ॥ ६६ ॥ रायावि चित्तलिहियं व पेच्छिउं तं समग्गमवि सेन्नं । परिचिन्तिउं पवत्तो अच्चन्तं विम्हयाउलिओ ॥ ६७ ॥ अहह महापावो कह एवंविहमंतसत्तिसंजुत्तो । कहं वा विबुहनिसिद्धं अकज्जमेवं विहं कुणति ॥ ६८॥ मन्ने एरि-सग च्चिय ते वि हु थंभाइकारिणो मंता । तेणन्नोन्नाणुगमो समसीलत्तेण जा ओब्भि ॥ ६९ ॥

---

प्रहसत्पठत्सु मागधकं हयहेषितत्रासितशृंखलकम् । लयनाग्रगतं गृहिविकशन्महाभटलोचनकम् ॥ ६३ ॥ नगर्या बहु चतुरंगबलं बलवद्विपक्षेक्षयैकसहम् । सहसा एव प्राप्य भूरिमहं महासेनानुमार्गेण निःसृतः ॥ ६४ ॥ अथ तेन समग्रेणापि परितः प्रवरतुरङ्गमारूढः । उच्छ्रितसितातपत्रो राजा यावद् याति स्तोकपथम् ॥ ६५ ॥ तावत् तेन पुरुषेण विकसितकपोलमीषद् हसित्वा । नरनाथं मुक्त्वा स्तम्भितमवरं बलं सकलम् ॥ ६६ ॥ राजाऽपि चित्रलिखितमिव दृष्ट्वा तं समग्रमपि सैन्यम् । परिचिन्तयितुं प्रवृत्तोऽत्यन्तविस्मयाकुलितः ॥ ६७ ॥ अहह महापापः कथमेवंविधमंत्रशक्तिसंयुक्तः । कथं वा विबुद्धनिषिद्धमकार्यमेवंविधं कुरुते ॥ ६८ ॥ मन्ये ईदृशा एव तेऽपि हं स्तम्भादिकारिणो मन्त्राः । तेनान्योन्यानुगमः समशीलत्वेन जातोऽस्ति ॥ ६९ ॥

अहवा किमणेण वि चिंतिणेण सुमरामि थंभणिं विज्जं । एयस्स थंभणट्ठा चिरपढियं सुगुरुमूलम्मि ॥१७० ॥ तो सव्वंग निवेसियरक्खा मंतक्खरोऽनिलनिरोहं । काउं नासा पारंतनिमियथिरलोयणंबुरुहो ॥ ७१ ॥ पउममयरंदसंदोह सुंदरुद्दामपसरियमऊहं । थंभणकरपरमक्खरमारद्धो सुमरिउं राया ॥ ७२ ॥ अह खणमेत्तंमि गए तत्तो हु तं पलोयए जाव । दरपहीसेरेण तेणं पजंपियं ताव पुरिसेण ॥ ७३ ॥ हे नरवर जीव चिरं पुव्वं मंदागई ममं हुंता । तुह थंभणविज्जाए संपइ पवणोवमा जाया ॥ ७४ ॥ ता जइ कज्जं भज्जाए अत्थि पज्जाहि सिग्घवेगेण । इय सो पयंपमाणो तुरियं गंतुं पयट्टोत्ति ॥ ७५ ॥ अहह कहं चिरसिक्खिय विज्जावि हु विहलिया ममेयाणिं । विहलिज्जउ अहव परं मोत्तूण परक्कमं एक्कं ॥ ७६ ॥

---

अथ वा किमनेनापि चिन्तितेन स्मरामि स्तम्भनीं विद्याम् । एतस्य स्तम्भनार्थं चिरपठितां सुगुरुमूले ॥ १७० ॥ ततः सर्वांगनिवेशितरक्षा मन्त्राक्षरोऽनिलनिरोद्धम् । कृत्वा नासापर्यन्तनियमितस्थिरलोचनाम्बुरुहः ॥ ७१ ॥ पद्ममकरन्दसंदोहसुन्दरोद्दामप्रसारितमयूखम् । स्तम्भनकरपरमाक्षरमारब्धः स्मर्तुं राजा ॥ ७२ ॥ अथ क्षणमात्रे गते ततो हं तं प्रलोकते यावत् । दरप्रहसितेन तेन प्रजल्पितं तावत् पुरुषेण ॥ ७३ ॥ हे नरवर जीव चिरं पूर्वं मन्दगतिर्ममाऽऽसीत् । तव स्तम्भनविद्यया संप्रति पवनोऽपमा प्राप्ता ॥ ७४ ॥ तस्माद् यदि कार्यं भार्यायाः अस्ति प्रयाहि शीघ्रं वेगेन । इति स प्रजल्पमानस्त्वरितं गन्तुं प्रवृत्त इति ॥ ७५ ॥ अहह कहं चिरशिक्षिता विद्यापि हं विफलितामिदानीम् । विफलतु अथवा परं मुक्त्वा पराक्रममेकम् ॥ ७६ ॥

इय चिंतिऊण राया अविचलचित्तो पवड्ढिउच्छाहो । खग्गसहाओ सहसा लग्गो तस्साणुमग्गेण ॥ ७७ ॥ एसो वच्चइ राया एसा देवी इमो य सो पुरिसो । इय जंपिरे जणम्मि ताणि गयाइं सुदूरपहं ॥ ७८ ॥ पइसमयं कसाहयतरलतुरयलहुभूरिलंघियद्धाणो । थेवंतरेण राया जाव न तं पावइ मणुस्सं ॥ ७९ ॥ ताव निरब्भा विज्जुव्व झत्ति देवी अदंसणी भूया । सोऽपि य पुरिसो थाणु व्व निच्चलो संठिओ संमुहो ॥ १८० ॥ एगागिणं च तं पेच्छिऊण भूमीवई विचिंतेइ । किं सुमिणमिमं माया व होज्ज दिट्ठीए बंधो वा ॥ ८१ ॥ अहवा किमणेण विगप्पिएण इममेव ताव पुच्छामि । अमुणियसीले पुरिसे पहरिउमपि जुज्जइ न जम्हा ॥ ७२ ॥ तो भणियमणेण स विम्हएण भो भो अणन्तसामत्थ । भज्जा न केवलं चिय हरिया तुमए मम मणं पि ॥ ८३ ॥

---

इति चिन्तयित्वा राजाऽविचलचित्तः प्रवर्द्धितोत्साहः । खड्गसहायः सहसा लग्नस्तस्यानुमार्गेम् ॥ ७७ ॥ एष व्रजति राजा एषा देव्ययं च स पुरुषः । इति जल्पिति जने ते गताः सुदुरपथम् ॥ ७८ ॥ प्रतिसमयं कशाहततरलतुरंगलघुभूरिलंघिताध्वानः । स्तोकान्तरेण राजा यावन्न तं प्राप्यते मनुष्यम् ॥ ७९ ॥ तावन्निरभ्रा विद्युदिव झटिति देव्यदर्शनी भूता । सोऽपि च पुरुषःस्थाणुरिव निश्चलः संस्थितः संमुखः ॥ ८० ॥ एकाकिनं च तं दृष्ट्वा भूमीपतिर्विचिन्तयाति । किं स्वप्नमिदं माया वा भवेद् दृष्ट्या बन्धो वा ॥ ८१ ॥ अथवा किमनेन विकल्पितेनैनमेव तावत्पृच्छामि । अज्ञातशीले पुरुषे प्रहर्त्तुमपि युज्यते न यस्मात् ॥ ८२ ॥ ततो भणितमनेन स विस्मयेन भोः भो अनन्तसामर्थ्य । भार्या न केवलमेव हृता त्वया मम मनोऽपि ॥ ८३ ॥

ता कहसु को तुमं किं तए कुलं मण्डियं मलिणियं च । एरिसमाहप्पेण अकज्जकरणेण य इमेण ॥ ८४ ॥ तेणावि ईसि हसिऊण जंपियं भो नरिंद सच्चमिणं । विहियं उभयं पि मए कुलमइलणमेक्कमेव तए ॥ ८५ ॥ नियगिहिणिं पि हु नीसेसनयरलोगस्स पेच्छमाणस्स । अवगणियावज्जसेणं अरक्खमाणेणही रत्तिं ॥ ८६ ॥ इय-गुरुकुलकलंकं न पेच्छसे अप्पणो तुमं । मुद्धमह पुण पोरिसवित्तिं पि दोसपक्खम्मि पक्खिवसि ॥ ८७ ॥ अहवा परदोसपलोयणम्मि जायति जणो सहस्सक्खो । जच्चंधो व न पेच्छति गिरिवरगुरुए विनियदोसे ॥ ८८ ॥ एवं विहेण तुमए तह कह वि हु मइलियं कुलं सयलं । जहवि मलिज्जति नो सुकयजलहरासारवरिसे वि ॥ ८९ ॥ निस्सामन्नपरिक्कमरहियाणं भद्द तुब्भ सरिसाणं । नामुक्कित्तणमेत्तं वुच्चति भूमीवइ तं पि ॥१९०॥

---

तस्मात् कथय कस्त्वं किं त्वया कुलं मण्डितं मलिनितं च । ईदृग्माहात्म्येनाकार्यकरणेन चामुना ॥ ८४ ॥ तेनापीषद् हसित्वा जल्पितं भो ? नरेन्द्र सत्यमिदम् । विहितमुभयमपि मया कुलमलिनमेकमेव त्वया ॥ ८५ ॥ निजगृहिणीमपि हं निःशेषनगरलोकाः पश्यमानाः । अवगणितापयशसाऽरक्ष्यमाणेन ह्रियमानाम् ॥ ८६ ॥ इति गुरुकुलकलंकं न पश्यस्यात्मनस्त्वं । मुग्ध मम पुनः पौरुषवृत्तिमपि दोषपक्षे प्रक्षिपसि ॥ ८७ ॥ अथवा परदोषप्रलोकने जायते जनः सहस्राक्षः । जात्यन्ध इव न पश्यति गिरिवरगुरुकानपि निजदोषान् ॥ ८८ ॥ एवंविधेन त्वया तथा कथमपि हं मलिनितं कुलं सकलम् । यथा विमलीयते नो सुकृतं जलधरासारवर्षेऽपि ॥ ८९ ॥ निःसामान्यपरिक्रमरहितानां भद्र युष्मत्सदृशानाम् । नामोत्कीर्तनमात्रमुच्यते भूमीपतिः त्वमपि ॥ १९० ॥

को वा इह तुह दोसो ते अवरज्झंति एत्थ चिरपुरिसा। असमत्थंपि तुमं जे भूमीपालं पइट्ठन्ति ॥ ९१ ॥ को वा तेसिं दोसो नरिन्द तुम्हारिसाणं कुमईणं। एसच्चिय होति गईविसयवामोहियमणाण ॥ ९२ ॥ इय सोचा नरनाहो लज्जा मउलंतनयणसरसिरुहो। परिभाविउं पवत्तो पउस समउ व विच्छाओ॥ ९३ ॥ धी मज्झ जीवियं पोरिसं च बलबुद्धिपगरिसत्तं च। जेणं मए वयणिज्जं उवणीया पुव्व पुरिसावि ॥ ९४ ॥ अप्पा न केवलो च्चिय लहुयत्तं लंभिओ अधन्नेण। लहुईकया महन्तो सिक्खागुरुणोवि भयवन्तो ॥ ९५ ॥ किं जाएण वि तेणं जाएण वि जीविएण किं तेण। नियपुव्वपुरिसलाघवलेसंमि वि जो पयट्टेज्जा ॥ ९६ ॥ सच्चं च विसयमोहियपमईणमिच्चाइ जं भणियममुणा। कहमन्नहमेवं विहविडंबणा मज्झ जाएज्जा ॥ ९७ ॥

---

को वेह तव दोषस्तेऽपराध्यन्त्यत्र चिरपुरुषाः। असमर्थमपि त्वां ये भूमीपालं प्रतिष्ठन्ते ॥ ९१ ॥ को वा तेषां दोषो नरेन्द्र युष्मादृशकुमतीनाम्। एषैव भवति गतिर्विषयव्यामोहितमनसाम् ॥ ९२ ॥ इति श्रुत्वा नरनाथो लज्जा मुकुलितनयनसरसिरुहः। परिभावयितुं प्रवृत्तः प्रदोषसमय इव विच्छायः ॥ ९३ ॥ धिङ्मम जीवितं पौरुषं च बलबुद्धिप्रकर्षत्वं च। येन मया वचनीयमुपनीताः पूर्वपुरुषा अपि ॥ ९४ ॥ आत्मा न केवल एव लघुत्वं लम्भितोऽधन्येन। लघ्वीकृता महन्तः शिक्षागुरवोऽपि भगवन्तः ॥ ९५ ॥ किं जातेनापि तेन जातेनापि जीवितेन किं तेन। निजपूर्वपुरुषलाघवलेशेऽपि यः प्रवर्त्तेत ॥ ९६ ॥ सत्यं च विषयमोहितमतीनामित्यादि यद्भणितममुना। कथमन्यथैवं विधविडम्बना मम जायेत ॥ ९७ ॥

तहाहि । सत्थस्साविसओ यं न मंततंतेसु कुसलया अत्थि । उज्जोगिणोवि मज्झं किं बलमेत्तो परं होही ॥ ९८ ॥ एवं च संपयं इह तावसदिक्खानि सेविउं जुत्ता । कह दंसिस्सामि मुहं नियत्तिउं नयरिलोयस्स ॥ ९९ ॥ इय गरुयविसायपिसायवाउलिजन्तमाणसो राया । जा मुयइ नेव खग्गं ता गहियो तेण हत्थम्मि ॥ २०० ॥ भणितो य महायस्स मुयसु सोगमित्तो कयं विचित्तेणं । परिहासेणं माइंदजालमेयं न परमत्थो ॥ १ ॥ तहा नाहं पुरिसो न य मज्झ तुज्झ दइयाए कज्जमपि किं पि । न य सामन्नपरिक्कमविक्कंतो होसि तं राय ॥ २ ॥ किं तु इय वइयरेणं तियसोऽहं पढमदेवलोगातो । तुज्झ पडिबोहणत्थं पुव्वप्पणएण आओम्हि ॥३॥ किं वा मित्त? न सुमरसि जमुणानइपरिसरम्मि पुव्वभवे । जं आसि तुमं हत्थीबहुलक्खणसंगयसरीरो ॥ ४ ॥

---

तथाहि शस्त्रस्याविषया यत्र मन्त्रतन्त्रेषु कुशलताऽस्ति । उद्योगिनोऽपि मम किं बलमतः परं भूयात् ॥ ९८ ॥ एवं च साम्प्रतमिह तापसदीक्षा सेवितुं युक्ता । कथं दर्शयिष्यामि मुखं निवृत्त्य नगरीलोकस्य ॥ ९९ ॥ इति गुरुविसादपिशाचव्याकुलीयमानमानसो राजा । यावन्मुञ्चति नैव खड्गं तावद् गृहीतस्तेन हस्ते ॥ २०० ॥ भणितश्च महायशस्विन् मुञ्च शोकमितः कृतं विचित्रेण । परिहासेन मायेन्द्रजालमेतन्न परमार्थः ॥ १ ॥ तथा नाहं पुरुषो न च मम ते दयितया कार्यमपि किमपि । न च सामान्यपरिक्रमविक्रान्तो भवसि त्वं राजन् ॥ २ ॥ किंतु इति व्यतिकरेण त्रिदशोऽहं प्रथमदेवलोकात् । त्वत्प्रतिबोधनार्थं पूर्वप्रणयेनाऽऽयातोऽस्मि ॥ ३ ॥ किंवा मित्र? न स्मरसि यमुनानदीपरिसरे पूर्वभवे । यदासीत् त्वं हस्तिर्बहुलक्षणसंगतशरीरः ॥ ४ ॥

सत्तंगपरिट्ठाणो महानरिन्दो व्व विसयपडिबद्धो । पवहन्तदाणपसरो सरोसपडिदन्तिभंगकरो ॥ ५ ॥ बहुकरिकुलपरियरिओ वियरन्तो तेसु तेसु ठाणेसु । करिपिसियलालसेहिं सबरजुवाणेहिं दिट्ठोऽसि ॥ ६ ॥ तो तेहिं वारिबंधणपमुहोवाएहिं सरपहारेहिं । परिवारब्भूयं तुह विणासियं गयकुलमसेसं ॥ ७ ॥ अपमत्तयाए गइकोसलेण दूराउ परिहरन्तेण । तुमए तेसिमवाए चिरकालं रक्खिओ अप्पा ॥ ८ ॥ अह अन्नया कयाइ सलिलोयारम्मि तुज्झ ग्गहणत्थं । तेहिं खड्डा खणिउं उवरिं छइया तणाईहिं ॥ ९ ॥ खित्ता तदुपरिधूली तह जह भूमी एसा समा जाया । तो तरुगहणनिलुक्का पलोइउं ते पवन्त त्ति ॥ २१० ॥ तुममवि असंकियमणो पुव्वपवाहेण पाणियं पाउं । इत्तो धसत्ति पडितो तीए खड्डाए विवसंगो ॥ ११ ॥

---

सप्ताङ्गप्रतिष्ठानो महानरेन्द्र इव विषयप्रतिबद्धः । प्रवहद्दानप्रसरः सरोषप्रतिदन्तिभङ्गकरः ॥ ५ ॥ बहुकरिकुलपरिकरितो विचरन् तेषु तेषु स्थानेषु । करिपिशितलालसैः शबरयुवकैर्दृष्टोऽसि ॥ ६ ॥ ततस्तैर्वारिबन्धनप्रमुखोपायैः शरप्रहारैः । परिवारभूतं ते विनाशितं गजकुलमशेषम् ॥ ७ ॥ अप्रमत्ततया गतिकौशलेन दूरात् परिहरता । त्वया तेषामपाये चिरकालं रक्षित आत्मा ॥ ८ ॥ अथान्यदा कदाचित् सलिलावतारे त्वद्ग्रहणार्थम् । तैर्गर्तं खनित्वोपरिच्छादितस्तृणादिभिः ॥ ९ ॥ क्षिप्ता तदुपरिधूली तथा यथा भूम्येषा समा जाता । ततस्तरुगहननिलीनाः प्रलोकयितुं ते प्रवृत्ता इति ॥ २१० ॥ त्वमप्यशङ्कितमनाः पूर्वप्रवाहेण पानियं पातुम् । इतो धसत्ति (अव्ययं सर्वावयवैः पतनार्थे) पतितस्तस्यां गर्त्तायां विवशाङ्गः ॥ ११ ॥

अइपंडितो सि चिरजीविओ सि रे इण्हिं कत्थ वच्चिहिसि। इय कलकलं करेंता सवरजुवाणा य संपत्ता ॥१२॥ तो तेहिं निद्दयं दारिऊण कुम्भत्थलाउ थूलाइं। मोत्ताहलाइं गहियाइं जीवमाणस्स दसणा य ॥ १३ ॥ अह तिक्खवेयणापबलजलणजालाकलापसंतत्तो। जीवित्ता खणमेगं झत्ति तुमं मरणमणुपत्तो ॥ १४ ॥ उववन्नो य नईए गंगाए परिसरम्मि सारंगो। तत्थ वि वालेवि तुमं सजूहनाहेण हणिओऽसि ॥ १५ ॥ तत्तो मगहाविसए सालिग्गमम्मि सोमदत्तस्स। विप्पस्स सुयो जातो नामेणं बंधुदत्तो त्ति ॥ १६ ॥ बंभणजणपाउग्गो कलाकलावो य अहिगतो तुमए। जागविहीपरमकुसलत्तेण लद्धा पसिद्धीय ॥ १७ ॥ कीरंति जत्थ कत्थवि सग्गत्थं अहव रोगसमणत्थं। जागा तेसु य पढमं तं निज्जसि पउरलोगेण ॥ १८ ॥

---

अतिपण्डितोऽसि चिरजीवितोऽसि रे इदानीं कुत्र व्रजिष्यसि। इति कलकलं कुर्वन्तः शबरयुवकाश्च संप्राप्ताः ॥ १२ ॥ ततस्तैर्निर्दयं दारयित्वा कुम्भस्थलात् स्थूलानि। मुक्ताफलानि गृहीतानि जीवमानस्य दशनाश्च ॥ १३ ॥ अथ तीक्ष्णवेदनाप्रबलज्वलनज्वालाकलापसंतप्तः। जीवित्वा क्षणमेकं झटिति त्वं मरणमनुप्राप्तः ॥ १४ ॥ उपपन्नश्च नद्या गंगायाः परिसरे सारङ्गः। तत्रापि च बालेऽपि त्वं स्वयूथनाथेन हतोऽसि ॥ १५ ॥ ततो मगधविषये शालिग्रामे सोमदत्तस्य। विप्रस्य सुतो जातो नाम्ना बन्धुदत्त इति ॥ १६ ॥ ब्राह्मणजनप्रयोगकलाकलापश्चाधिगतस्त्वया। यागविधिपरमकुशलत्वेन लब्धा प्रसिद्धिश्च ॥ १७ ॥ क्रियन्ते यत्र कुत्रापि स्वर्गार्थमथवा रोगशमनार्थम्। यागास्तेषु च प्रथमं त्वं नियम्यते प्रचुरलोकेन ॥ १८ ॥

कहसि य जागस्स विहिं पयट्टसे विविहपावठाणाइं । अगणियपरलोयभओ हुणसि सहत्थेण छागे य ॥१९॥ एवं वच्चंतेसु दिणेसु एगम्मि अवसरे रन्ना । पारम्भिओ महन्तो तुरंगमेहो महाजागो ॥ २२० ॥ आहूओ तत्थ तुमं रन्ना सक्कारिओ य भत्तीए । पगुणीकया य अस्सा सुलक्खणा जागकज्जेणं ॥ २१ ॥ अभिमंतिया य तुमए वेयपसिद्धेण ते विहाणेण । एत्थन्तरंमि तारिसं जाविहिं पेच्छमाणस्स ॥ २२ ॥ कत्थवि दिट्ठं एवंविहं तिईहा-इणो करंतस्स । जायं जाइस्सरणं एकस्स तुरंगपोयस्स ॥ २३ ॥ दिट्ठं च पुव्वजम्मे जागविहिवियक्खणेण हुंतेण । जं हुणिया भयविहुरा बहुसो वि गवाइणो तेण ॥ २४ ॥ दट्ठूण वइयरमिमं ताहे परिचिन्तियं भयत्तेण । धम्म-च्छलेण पावं अहो कहं उवचिणंति जणा ॥ २५ ॥

---

कथयसि च यागस्य विधिं प्रवर्त्तसे विविधःपापस्थानेषु । अगणितपरलोकभयो जुहोसि स्वहस्तेन छागांश्च ॥ १९ ॥ एवं व्रजत्सु दिवसेष्वेकस्मिन्नवसरे राज्ञा । प्रारम्भितो महान् तुरंगमेघो महायागः ॥ २२० ॥ आहूतस्तत्र त्वं राज्ञा सत्कारितश्च भक्त्या । प्रगुणीकृता-श्चाश्वाः सुलक्षणा यागकार्येण ॥ २१ ॥ अभिमन्त्रिताश्च त्वया वेदप्रसिद्धेन ते विधानेन । अत्रान्तरे तादृशं यागविधिं पश्यमानस्य ॥२२॥ कुत्रापि दृष्टमेवंविधमितीहादीन् करिष्यमानस्य । जातं जातिस्मरणमेकस्य तुरंगपोतस्य ॥ २३ ॥ दृष्टं च पूर्वजन्मनि यागविधिविचक्षणेन होत्रा । यत् हुता भयविधुरा बहुशो गवादयस्तेन ॥ २४ ॥ दृष्ट्वा व्यतिकरमिदं तदानीं परिचिन्तितं भयार्त्तेन । धर्मछलेन पापमहो कथमुपचिन्वन्ति जनाः ॥ २५ ॥

साहंति य मुद्धाणं जागे निहया वयंति सग्गम्मि । तिप्पिज्जंति य तियसा जलणम्मि हुणिज्जमाणम्मि ॥२६॥ न मुणंति इमं पावा जइ जागहया वयन्ति सग्गम्मि। सग्गाभिलासिणो सयणबंधुणो ता वरं हुणिया ॥ २७ ॥ अहवा पयंडपासंडकूडपडियस्स मुद्धलोयस्स । को दोसो अवरज्झंति एत्थ वेइय उवज्झाया ॥ २८ ॥ ता एयं पाविट्ठं सुदुट्ठचेट्ठं हुणामि उवज्झायं । जइ पुण जियन्ति एए जागनिमित्तागया तुरया ॥ २९ ॥ इय चिंतिऊण तेणं वच्छयले खरखुरप्पहारेण । तह पहओ सद्दतुमं जह मुक्को जीवियव्वेण ॥ २३० ॥ पवियंभियपाणिवहा-भिलासवसंविढत्तपावेणं । घडियालएय जातो नेरइओ पढमनरयम्मि ॥ ३१ ॥ छव्विहपज्जतीए पयडसरीरो मुहुत्तमज्झम्मि । जा चिट्ठसि ताव लहुं पकुणन्ता किलिकिला रावं ॥ ३२ ॥

---

कथयन्ति च मुग्धानां यागे निहता व्रजन्ति स्वर्गे । तृप्यन्ति च त्रिदशा ज्वलने जुह्वाने हूयमाने ॥२६॥ न जानन्तीदं पापा यदि यागहता व्रजन्ति स्वर्गे । स्वर्गाभिलाषिनः स्वजनबान्धवस्तदा वरं हुताः ॥ २७ ॥ अथवा प्रचण्डपाखण्डकूटपतितस्य मुग्धलोकस्य । को दोषोऽपराध्यन्त्यत्र वैदिकोपाध्यायाः ॥ २८ ॥ तस्मादेनं पापिष्ठं सुदुष्टचेष्टं जुहोम्युपाध्यायम् । यदि पुनर्जीवन्त्येते यागनिमित्तागतास्तुरगाः ॥ ॥ २९ ॥ इति चिन्तयित्वा तेन वक्षस्थले खरखुरप्रहारेण । तथा प्रहतः सद्यस्त्वं यथा मुक्तो जीवितव्येन ॥ २३० ॥ प्रविजृम्भितप्राणिवधाभिलापवशसंविधत्तपापेन । घटिकालये च जातो नैरयिकः प्रथमनरके ॥ ३१ ॥ षड्विधपर्य्याप्त्या प्रकटशरीरो मुहूर्त्तमध्ये । यावत् तिष्ठसि तावद् लघुं प्रकुर्वन् किलकिलारावम् ॥ ३२ ॥

परमाहम्मियअसुरा अच्चन्तं निद्दया महाकूरा। बीभच्छा भयजणगा समागया तत्थ ठाणम्मि ॥३३॥ दुक्खं वज्जघडीए किं रे चेट्ठसि वि णिस्सरसु बाहिं। इति जंपिऊण वज्जंकुसेहिं कड्ढिन्ति तुह देहं ॥ ३४ ॥ तत्तो निसिताए कप्पणीए कप्पन्ति सुहुमखंडेहिं। अंगं करुणसरेणं तुह विरसं आरसंतस्स ॥ ३५ ॥ अइ सुहुमखंडिए वि हु पुणो वि मिलिए तणुम्मि सूएव्व। भयविहुरो नासन्तो घेप्पसि तेहिं तुमं सहसा ॥ ३६ ॥ तो वज्जकुंभियाए हेट्ठा पज्जलियतिव्व जलणाए। पक्खिप्पसि वा गच्छं अणिच्छमाणो हढेण तुमं ॥ ३७ ॥ तत्थ य अच्चन्तं दज्झमाणदेहो तिसाए अभिभूओ। वाहरसि विरससद्दं तेसिं पुरतो तुमं एवं ॥ ३८ ॥ तुज्झे जणणी जणगा भायासजणीयबंधवा पहुणो। सरणं ताणं तुज्झे तुब्भे च्चिय देवया मज्झ ॥ ३९ ॥

---

परमाधार्मिकासुरा अत्यन्तनिर्दया महाक्रूराः । विभत्सभयजनकाः समागतास्तत्र स्थाने ॥ ३३ ॥ दुःखं वज्रघटिके किं रे चेष्टसि विनिःसर बहिः । इति जल्पयित्वा वज्रांकुशैः कर्षन्ति तव देहम् ॥ ३४ ॥ ततो निशितया कर्त्तन्या कृणन्ति सूक्ष्मखण्डैरङ्गम् । करुणस्वरेण तव विरसमारसमानस्य ॥ ३५ ॥ अतिसूक्ष्मखण्डितेऽपि हं पुनरपि मिलिते तनौ । सूत इव भयविधुरो गच्छन् गृह्यसे तैस्त्व सहसा ॥ ३६ ॥ ततो वज्रकुम्भिपाकेऽधः प्रज्वलिततीव्रज्वलनाके । प्रक्षिप्यसे च पाकार्थमनिछयमानो हठेन त्वम् ॥ ३७ ॥ तत्र चात्यन्तंदह्यमानदेहस्तृषयाभिभूतः । व्याहरसि विरसशब्दं तेषां पुरतस्त्वमेवम् ॥ ३८ ॥ यूयं जननीजनकभार्यास्वजनीयबान्धवाः प्रभवः । शरणं त्राणं यूयं यूयमेव देवता मम ॥ ३९ ॥

ता मुयह खणं एक्कं पायह सलिलं पसीयह इयाणिं। इय भणिए हिट्ठमणा ते महुरगिराए पजंपंति ॥२४०॥ रे-वज्जकुंभियामज्झभागओ कड्ढिउं वरागमिमं। पाएह वारिसिसिरं तहत्ति पडिवज्जिउं अवरे ॥ ४१ ॥ तत्ततउतंबसीसयरसभरियं भायणं गहेऊणं। सिसिरंति पयंपंता पायन्ति तुमं महापावा ॥४२॥ अह तेण जलणतुल्लेण दज्झमाणस्स वलियगीवस्स। तुज्झ अणिच्छन्तस्स विभेत्तुं संडासएण मुहं ॥ ४३ ॥ निसिरन्ति तमाकंठं तो तेण कढिज्जमाणसव्वंगो। मुच्छानिमीलियच्छो धसत्ति णिपडसि महीपीढे ॥ ४४ ॥ खण लद्धचेयणा असिवणम्मि सिसिरंति जायसंकप्पो। वच्चसि तत्थवि छिज्जसि पयंडतरुपत्तखग्गेहिं ॥ ४५ ॥ तत्तो पुणो वि तेहिं रंततरंगभंगुरावत्ते। वेयरणिनईनीरे खिप्पसि पज्जलियजलणाभे ॥ ४६ ॥

---

तस्मान्मुञ्चत क्षणमेकं पाययत सलिलं प्रसीदतेदानीम्। इति भणिते हृष्टमनसस्ते मधुरगिरा प्रजल्पन्ति ॥ २४० ॥ रे वज्रकुम्भिकामध्यभागात् निस्सार्य वराकममुम्। पाययत वारिशिशिरं तथेति प्रतिपद्यापरे ॥ ४१ ॥ तप्तत्रपुताम्रशीशकरसभृतं भाजनं गृहीत्वा। शिशिरमिति प्रजल्पन्तः प्राप्नुवन्ति त्वां महापापाः ॥ ४२ ॥ अथ तेन ज्वलनतुल्येन दह्यमानस्य वलितग्रीवस्य। तवानिच्छतोऽपि भित्वा संडासकेन मुखम् ॥ ४३ ॥ निपाययन्ति तमाकण्ठं ततस्तेन कथ्यमानसर्वाङ्गः। मूर्च्छानिमीलिताक्षो धसत्ति (अव्ययं सर्वावयवैरधःपतनार्थे) निपतसि महीपीठे ॥ ४४ ॥ क्षणलब्धचेतनोऽसिवने शिशिरमिति जातसंकल्पः। व्रजसि तत्रापि छिद्यसे प्रचण्डतरुपत्रखण्डैः ॥ ४५ ॥ ततः पुनरपि तैरङ्गत्तरंगभंगुरावर्त्ते। वेतरणिनदीतीरे क्षिप्यसे प्रज्वलितज्वलनाभे ॥ ४६ ॥

तत्थवि विज्जुड्डामरमहल्लकल्लोलपेल्लणवसेण । उव्वुड्डणवुड्डणचलणखलणवाउलियसव्वंगो ॥ ४७ ॥ जरत-
रुदलं व कहवि हु तीए किलेसेण पत्तपरतीरो । अच्छन्तो असुरेहिं घेत्तूणं हरिसियंगेहिं ॥ ४८ ॥ जोत्तिज्जसि
वसभो इव रहम्मि अच्चंतभूरिभारम्मि । विज्झसि पइक्खणं कुंततिक्खधाराए आराए ॥ ४९ ॥ अह तत्थ
परिस्सन्तो जा गंतुं नेव सक्कसि कहिं पि । ता उग्गमोग्गरेहिं चूरिज्जसि तं महाभाग ॥ ५० ॥ अप्फालिज्जसि
वियडे सिलायले भिज्जसे य कुन्तेहिं । छिज्जसि करवत्तेहिं पीलिज्जसि चित्तजंतेसु ॥ ५१ ॥ भुंजाविज्जसि
णियअंगमंसखण्डाइं जलणपक्काइं । ताडिज्जसि पुणरुत्तं विचित्तदंडप्पहारेहिं ॥ ५२ ॥ असुरविउव्वियगरुयंग-
पक्खि अइतिक्खनक्खचंचूहिं । पहणिज्जसि करुणसरं रुयमाणो उद्धकयबाहू ॥ ५३ ॥

---

तत्रापि विद्युड्डामरमहत्कल्लोलपेल्वनवशेन । उद्ब्रुडनब्रुडनचलनस्खलनव्याकुलितसर्वाङ्गः ॥ ४७ ॥ जरत्तरुदलमिव कथमपि हु तस्याः क्लेशेन प्राप्तपरतीरः । आसीनोऽसुरैर्गृहीत्वा हर्षिताङ्गैः ॥ ४८ ॥ योज्यसे वृषभ इव रथेऽत्यन्तभूरिभारे । व्यध्यसे प्रतिक्षणं कुन्ततीक्ष्णधारयाऽऽरया ॥ ४९ ॥ अथ तत्र परिश्रान्तो यावद् गन्तुं नैव शक्यसे कुत्रापि । तावदुग्रमुद्गरैःचूर्ण्यसे त्वं महाभाग ॥ ५० ॥ आस्फाल्यसे विकटे शिलातले भिद्यसे च कुन्तैः । छिद्यसे कर्तनिकाभिः पील्यसे चित्रयन्त्रेषु ॥ ५१ ॥ भोज्यसे निजाङ्गमांसखण्डानि ज्वलनपक्वानि । ताड्यसे पुनः पुनः विचित्रदण्डप्रहारैः ॥ ५२ ॥ असुर विकृतगुर्वंगपक्ष्यतितीक्ष्णनखचञ्चूभिः । प्रहन्यसे करुणस्वरं रुद्यमान ऊर्ध्वकृतबाहुः ॥ ५३ ॥

इय नरयउब्भवदुक्खं अणुभूयं जं तए नरवरिंद । तं सव्वं परिकहिउं जयपहुणो च्चिय तरन्ति परं ॥ ५४ ॥ एवं सागरमेगं निवसित्ता भीसणम्मि नरयम्मि । दुक्खाइं असंखाइं विसहिय तत्तो मओ सन्तो ॥ ५५ ॥ तुममुववन्नो भरहे नयरे रायगिहम्मि रोरकुले । पुत्तत्तणेण तत्थवि अनेगरोगआउलसरीरो ॥ ५६ ॥ समयाणुरूवभोयणरोगपडीयारसयणपरिहीणो । अच्चन्तं दीणमणो भिक्खावित्तीए जीवन्तो ॥ ५७ ॥ तरुणत्तं संपपत्तो तत्थवि अच्चन्तदुक्खिओ सन्तो । परिचिंतिउं पवत्तो धी धी मह जीविअव्वस्स ॥ ५८ ॥ जं सरिसे वि हु मणुअत्तणम्मि तुल्ले अ इंदिअग्गामे । भिक्खाए जियामि अहं इमे अ धन्ना जे विलसन्ति ॥५९॥ एगे वहन्ति सोगं अज्ज न अम्हेहिं किंपि दिन्नंति । अज्ज न किंपि हु लद्धं अहं तु एवं किलिस्सामि ॥ ६० ॥

---

इति नरकोद्भवदुःखमनुभूतं यत् त्वया नरवरेन्द्र ? । तत् सर्वं परिकथितुं जगत्प्रभव एव शक्नुवन्ति परम् ॥५४॥ एवं सागरमेकं निवसित्वा भीषणे नरके । दुःखान्यसंख्यानि विसह्य ततो मृतः सन् ॥ ५५ ॥ त्वमुपपन्नो भरते नगरे राजगृहे रौरकुले । पुत्रत्वेन तत्राप्यनेकरोगाकुलशरीरः ॥ ५६ ॥ समयानुरूपभोजनरोगप्रतिकारस्वजनपरिहीनः । अत्यन्तं दीनमना भिक्षावृत्त्या जीवन् ॥ ५७ ॥ तरुणत्वं संप्राप्तस्तत्राप्यत्यन्तदुःखितः सन् । परिचिन्तितुं प्रवृत्तः धिक् धिङ्मम जीवितव्यस्य ॥ ५८ ॥ यत् सादृशेऽपि मनुजत्वे तुल्ये चेन्द्रियग्रामे । भिक्षया जीवाम्यहमिमे च धन्या ये विलसन्ति ॥ ५९ ॥ एके वहन्ति शोकमद्य नास्माभिः किमपि दत्तमिति । अद्य न किमपि हं लब्धमहं त्वेवं क्लिश्यामि ॥ २६० ॥

छड्डिज्जइ धम्मंकए एगेहिं समुद्धुरा वि नियरिद्धी । बहुठाणजज्जरंपि हु न चइज्जइ कप्परं पि मए ॥ ६१ ॥ एगे खिवन्ति चक्खुं सन्तीसु वि नेव पवरतरुणीसु । संकप्पोवगयासु वि अहं तु तोसं परिवहामि ॥ ६२ ॥ जच्च कणगच्छविं पि हु एगे जंपंति असुइयं देहं । रोगसयविधुरियं अप्पणो य तमहं तु सलहेमि ॥ ६३ ॥ जय जीव नन्द एवं एगे थुव्वन्ति मागहजणेण । अक्कोसिज्जामि अहं तु निमित्तं पि भिक्खगओ ॥ ६४ ॥ परुसंपि पयंपन्ता जणन्ति एगे जणाण परितोसं । आसीसा उ दिन्तो वि अद्धचंदं लहामि अहं ॥ ६५ ॥ इय पउरपावणिहिणो निहीणचिट्ठस्स रोगविहुरस्स । पव्वज्ज चिय उचिया जम्हा तीए वि किच्चमिणं ॥६६॥ मेलमलिणं सरीरत्तं भिक्खावित्ती य भूमिसयणं च । परवसहीसु निवासो सया वि सीउण्ह सहणं च ॥ ६७ ॥

---

मुच्यते धर्मकृते एकैः समुद्धुराऽपि निजर्द्धिः । बहुस्थानजर्जरमपि हं न त्यज्यते कर्परमपि मया ॥ ६१ ॥ एके क्षिपन्ति चक्षुः सतीष्वपि नैव प्रवरतरुणीषु । संकल्पोपगतास्वप्यहं तु तोषं परिवहामि ॥ ६२ ॥ यच्च कनकच्छविमपि ह एके जल्पन्त्यशुचिकं देहम् । रोगशतविधुरितमात्मनश्च तदहं तु श्लाघ्ये ॥ ६३ ॥ जय जीवनन्दैवमेके स्तूयन्ते मागधजनेन । आक्रोशयाम्यहं तु निमित्तमपि भिक्षागतः ॥ ६४ ॥ परुषमपि प्रजल्पंतो जनयन्त्येके जनानां परितोषम् । आशिषस्तु ददद्प्यर्द्धचन्द्रां लभाम्यहम् ॥ ६५ ॥ इति प्रचुरपापनिधेर्निर्हीनचेष्टस्य रोगविधुरस्य । प्रव्रज्यैवोचिता यस्मात् तयाऽपि कृत्यमिदम् ॥ ६६ ॥ मेलमलिनशरीरत्वं भिक्षावृत्तिश्च भूमिशयनं च । परवसतिषु निवासः सदा शीतोष्णसहनं च ॥ ६७ ॥

निक्किंचणया खन्ती परपीडावज्जणं किसतणुत्तं । जम्मसमन्तरं चिय एयं तु सहावसिद्धं मे ॥ ६८ ॥ एयं च कुणइ सोहं परमं लिंगिस्स न उ गिहत्थस्स । अणुरूवट्ठाणगया सच्चं दोसा वि होन्ति गुणा ॥६९॥ इय चिन्तिऊणं तुमए परमं वेरग्गमुव्वहन्तेण । गहिया तावसदिक्खा कयं च दुक्करतवचरणं ॥ ७० ॥ अह पज्जन्ते मरिउं जंबुदीवम्मि भारहे वासे । वेयड्ढम्मि गिरिवरे रहनेउरचक्कवालपुरे ॥ ७१ ॥ चण्डगइनामधेयस्स पवरविज्जाहरस्स भज्जाए । विज्जुमईए गब्भे पाउब्भूओ सुयत्तेण ॥ ७२ ॥ उचियसमये पसूओ कयमभिहाणं च कुलिसवेगोत्ति । अच्चन्तसुरूवतणू कुमारभावं समणुपत्तो ॥ ७३ ॥ सिक्खविउं सयलकलाकलावकोसल्लमप्पकालेण। नहगमणप्पमुहाओ विज्जाओ वि हु अणेगा तो ॥ ७४ ॥

---

निष्किंचनता क्षान्तिः परपीडावर्जनं कृशतनुत्वम् । जन्मसमनन्तरमेवैतत् तु स्वभावसिद्धं मे ॥ ६८ ॥ एतच्च करोति शोभां परमां लिङ्गिनो न तु गृहस्थस्य । अनुरूपस्थानगताः सत्यं दोषा अपि भवन्ति गुणाः ॥ ६९ ॥ इति चिन्तित्वा त्वया परमं वैराग्यमुद्वहता । गृहीता तापसदीक्षा कृतं च दुष्करतपश्चरम् ॥ २७० ॥ अथ पर्य्यन्ते मृत्वा जम्बूद्वीपे भारते वर्षे । वैताढ्ये गिरिवरे रथनेपुरचक्रवालपुरे ॥ ७१ ॥ चण्डगतिनामधेयस्य प्रवरविद्याधरस्य भार्यायाः । विद्युन्मत्या गर्भे प्रादुर्भूतः सूतत्वेन ॥ ७२ ॥ उचितसमये प्रसूतः कृतमभिधानं च कुलिशवेग इति । अत्यन्तसुरूपतनुः कुमारभावं समनुप्राप्तः ॥ ७३ ॥ शिक्षयित्वा सकलकलाकलापकौशल्यमल्पकालेन । नभोगमनप्रमुखा विद्या अपि ह अनेकास्ततः ॥ ७४ ॥

अह जणनयणानन्दं मणस्सिणीमाणकुसुयमायंडं । तरुणत्तमणुपत्तो रेहसि मयरधओ व्व तुमं ॥७५॥ समवयमित्ताणुगतो गउ व्व तियचच्चरेसु सरसीसु । निस्संकं भमसि पुरे पउरेसुं काणणेसु पि ॥ ७६ ॥ अह अन्नया कयाई तुमए ओलोयणट्ठिया दिट्ठा । हेमप्पहविज्जाहरधूया सुरसुन्दरी नामा ॥ ७७ ॥ तीसे य जोव्वणेणं लायण्णेणं च रूवविहवेणं । सोहग्गेण य हियं सुहय तुहावट्टियं दूरं ॥ ७८ ॥ तीए वि हु तुह दंसणवसेण वियसन्तणयणकमलाए । कुसुमाउहो वि वज्जाउहो व्व मयणो पवित्थरिओ ॥७९॥ नवरं समीवसंठियसहीण लज्जाए रुंभियवियारा। नीलुप्पलमुवदंसइ सा तुह अग्घायणमिसेण ॥२८०॥ कसिणाए रयणीए संकेओ सूइओ इमीए त्ति । हरिसभरनिब्भरंगो तुमं गतो णिययभवणम्मि ॥ ८१ ॥

---

अथ जननयनानन्दं मनस्विनीमानकुमुदमार्तण्डम् । तरुणत्वमनुप्राप्तो राजसे मकरध्वज इव त्वम् ॥ ७५ ॥ समवयो मित्रानुगतो गज इव त्रिकचत्वरेषु सरसीषु । निःशंकं भ्रमसि पुरे प्रचुरेषु काननेष्वपि ॥ ७६ ॥ अथान्यदा कदाचित् त्वयाऽवलोकन(गवाक्ष)स्थिता दृष्टा । हेमप्रभविद्याधरदुहित्री सुरसुन्दरी नाम ॥ ७७ ॥ तस्याश्च यौवनेन लावण्येन च रूपविभवेन । सौभाग्येन च हृदयं सुभग तवावर्त्तितं दूरम् ॥ ७८ ॥ तस्या अपि हु त्वद्दर्शनवशेन विकसितनयनकमलायाः । कुसुमायुधोऽपि वज्रायुध इव मदनः प्रविस्तृतः ॥ ७९ ॥ नवरं समीपसंस्थितसखीनां लज्जया रुम्भितविकारा । नीलोत्पलमुपदर्शयति सा तुभ्यमाघ्रायणमिषेण ॥ २८० ॥ कृष्णायां रजन्यां संकेतः सूचितोऽनयेति । हर्षभरनिर्भराङ्गस्त्वं गतो निजकभवने ॥ ८१ ॥

तो कयदिणकायव्वो नियणियगेहेसु पेसियवयस्सो। खग्गसचिवो निसीहे नीहरिओ णिययगेहातो ॥८२॥ केण वि असुणिज्जन्तो तेणेवोलोयणेण सणियपयं। पविसित्ता सेज्जाए तीए समीवे निसन्नोऽसि ॥८३॥ सो एस दिवसदिट्ठो पवरजुवाणो त्ति जायहरिसाए। नियदइयणिव्विसेसा तुज्झ कया तीए पडिपत्ती ॥८४॥ अह अवरोप्पर सविलासवयणगोट्ठीए गमिय खणमेगं। तुमए भणियं हे ! सुयणु विसरिसं दीसइ तुहे मं ॥ ८५ ॥ तथाहि—कह पहसियससिजोम्हादेहसिरी कह व भुयगभीमो यं। रेहइ चिहुरवओ तुह वेणीबंधेण संजमिओ ॥ ८६॥ कह लक्खणेहिं लक्खिज्जसे तुमं विज्जमाणनाह व्व। अप्पत्तपणइसंगमसुहं च कह नज्जइ सरीरं ॥ ८७ ॥ ता कहसु सुयणु परमत्थं किं सो पई तए चत्तो। अह वा चत्तासि तुमं अन्नासत्तेण तेणेव ॥ ८८ ॥

---

ततः कृतदिनकर्त्तव्यो निजनिजगेहेषु प्रेषितवयस्यः। खड्गसचिवो निशीथिन्यां निःसृतो निजगेहात् ॥ ८२ ॥ केनाप्य—ज्ञायमानस्ते नैवावलोकनेन शनकैः पदम्। प्रविश्य शय्यायां तस्या समीपे निपण्णोऽसि ॥ ८३ ॥ स एष दिवसदृष्टः प्रवरयुवेति जातहर्षया। निजदयितनिर्विशेषा तव कृता तया प्रतिपत्तिः ॥ ८४ ॥ अथापरोपरसविलासगोष्ठ्या गमयित्वा क्षणमेकम्। त्वया भणितं हे ! सुतनु विसदृशं दृश्यते त्वम् ॥ तथाहि ॥ ८५ ॥ कुत्र प्रहसितशशिज्योत्स्नादेहश्रीः क वा भुजंगभीमोऽयम्। राजते चिकुरव्रजस्तव वेणीबन्धेन संयमितः ॥ ८६ ॥ कुत्र लक्षणैर्लक्ष्यसे त्वं विद्यमाननाथेव। अप्राप्तप्रणयिसंगमसुखं च कथं ज्ञायते शरीरम् ॥ ८७ ॥ तस्मात् कथय सुतनु परमार्थं किं स पतिस्त्वया त्यक्तः। अथवा त्यक्तासि त्वमन्यासक्तेन तेनैव ॥ ८८ ॥

अह तीए थेवमउलियलोयणनलिणाए जंपियं एयं । हे ! सुहय सुणसु एत्थं परमत्थं विसरिसत्तम्मि ॥ ८९ ॥ आरूढजोव्वणा हं इह च विज्जाहरिंदपुत्तेणं । कणगप्पहनामेणं उव्वूढा गाढपणएणं ॥ २९० ॥ परिणयणाणंतरमवि मह दोसा वेयणीयवसओ वा । दाहज्जरेण गहिओ स महप्पा जलणतुल्लेण ॥ ९१ ॥ तो उव्वेल्लइ कंपइ दीहं नीससइ विरसमारसइ । सिहितावियलोहकवल्लिमज्झखित्तो व्व अणवरयं ॥ ९२ ॥ पारद्धा य अणेगे ताप्पिउणा रोगपसमणनिमित्तं । विविहोसहप्पओगा परिचत्तासेसकज्जेणं ॥ ९३ ॥ तं णत्थि ओसहं नत्थि सो मणी सा न विज्जए विज्जा । विज्जावि नत्थि ते जे न वावारिया पिउणा ॥९४॥ पम्मुक्कपाणभोयणण्हाणविलेयणपमोक्खकायव्वा । सोगभरगब्भिरगिरो रुयइ य पासट्ठिसयणो ॥ ९५ ॥

---

अथ तया स्तोकमुकुलितलोचननलिन्या जल्पितमेतत् । हे! सुभग शृण्वत्र परमार्थं विसदृशत्वे ॥ ८९ ॥ आरूढयौवनाहमिहैव विद्याधरेन्द्रपुत्रेण । कनकप्रभनाम्ना उद्वोढा गाढप्रणयेन ॥ २९० ॥ परिणयनानन्तरमेव मम दोषाद् वेदनीयवशतो वा । दाहज्वरेण गृहीतः स महात्मा ज्वलनतुल्येन ॥ ९१ ॥ ततः प्रधावति कम्पति दीर्घं निःश्वसिति विरसमारसति । शिखितापितलोहकवल्लिमध्यक्षिप्त इवानवरतम् ॥ ९२ ॥ प्रारब्धाश्चानेकास्तत्पित्रा रोगप्रशमननिमित्तम् । विविधौषधप्रयोगाः परित्यक्ताशेषकार्येण ॥ ९३ ॥ तन्नास्त्यौषधं नास्ति स मणिः सा न विद्यते विद्या । वैद्या अपि न सन्ति ते ये न तत्र व्यापारिताः पित्रा ॥९४॥ प्रमुक्तपानभोजनस्नानविलेपनप्रमुखकर्त्तव्यः । शोकभरगर्भितगिरो रुदति च पार्श्वस्थस्वजनः ॥ ९५ ॥

जणणी वि से अविच्छिन्नसोगवसनिस्सरन्तनयणजला । नज्जइ दिट्ठिजुगोइन्नसिन्धुगंगापवाह व्व ॥ ९६ ॥ तप्पणइजणो वि दढं तम्मइ निम्माय पेम सव्वस्सो । तिव्ववणहव्ववाहो व्व दड्ढखाणु व्व विच्छाओ ॥ ९७ ॥ इय तस्स आवयाए विमणुम्मणयम्मि न परिलोयम्मि । कीरन्तेसु य विविहेसु देवउवजाइयसएसु अवि ॥ ९८ ॥ अहिययरिं वुड्ढं वच्चंते पइखणं पि दाहजरे । पम्मुक्कजीवियासे नियत्तमाणम्मि वेज्जगणे ॥ ९९ ॥ तेण परिचिन्तियमिमं अहो न केण इ कहं वि साहारो । कीरति विहुरावडियस्स थेवमेत्तं पि जीवस्स ॥ ३०० ॥ अइवच्छला वि निद्धा वि बंधवा जणणिजणगसहियावि । आवयकूवावडियं तडट्ठिया चेव सोयन्ति ॥ १ ॥ थेवं पि जत्थ जायति जियस्स कत्तो वि नो परित्ताणं । तत्थ वि वसन्ति लोगा अहो महं मोहमाहप्पं ॥ २ ॥

---

जनन्यपि तस्याऽविच्छिन्नशोकवशनिःसरन्नयनजला । ज्ञायते दृष्टियुगोत्कीर्णसिन्धुगंगाप्रवाहेव ॥ ९६ ॥ तत्प्रणयिजनोऽपि दृढं ताम्यति निर्माय प्रेम सर्वस्वः । तीव्रवनहव्यवाह इव दग्धस्थाणुरिव विच्छायः ॥ ९७ ॥ इति तस्यापदया विमनउन्मनस्कें न परिलोकें । कुर्वत्सु विविधेषु देवोपजातिकशतेष्वपि ॥ ९८ ॥ अधिकतरां वृद्धिं व्रजति प्रतिक्षणमपि दाहज्वरे । प्रमुक्तजीविताशे निवर्त्तमाने वैद्यगणे ॥ ९९ ॥ तेन परिचिन्तितमिदमहो न केनापि कथमपि स्वाधारः । क्रियते विधुरापतितस्य स्तोकमात्रमपि जीवस्य ॥ ३०० ॥ अतिवत्सला अपि स्निग्धा अपि बान्धवा जननिजनकसहिता अपि । आपत्कूपापतितं तटस्थिताश्चैव शोचन्ति ॥ १ ॥ स्तोकमपि यत्र जायते जीवस्य कुतोऽपि नो परित्राणम् । तत्रापि वसन्ति लोका अहो महान् मोहमाहात्म्यम् ॥ २ ॥

जइ कह वि य दाहजरो ममं इमो उवसमेज्ज थेवं पि । ता उज्झियसयणधणो जिणदिक्खं अणुसरामि त्ति ॥ ३ ॥ अह विहिवसेण दिव्वोसहाइविरहे वि सो णिरायंको । जाओ सन्तो सयणे मोयाविय बहुपयारेहिं ॥ ॥ ४ ॥ पव्वज्जं पडिवन्नो गुणसागरसूरिणो सयासम्मि । छट्ठट्ठमाइ दुक्करतवचरणपरो य विहरित्था ॥५॥ इय भो ? महायस तए मह विसरिसरूवयं समुद्दिस्स । पुट्ठं जं तं सिट्ठं सव्वं पि मए जहावित्तं ॥ ६ ॥ एवं सोच्चा महसेण-राय तुमए विचिन्तियं तइया । धी धी अणज्जकज्जासत्तं पुरिसत्तणं मज्झ ॥ ७ ॥ धी धी बुद्धीए वि हु निवड-उ वज्जासणी गुणगिरिम्मि । सत्थत्थपारगत्तं पि जाउ पायालमूलम्मि ॥ ८ ॥ पविसउ दरीए उत्तमकुलजम्म समुब्भवो य अभिमाणो । नीई वि वराई पुरिसपवरमवरं अणुसरेउ ॥ ९ ॥

---

यदि कथमपि दाहज्वरो ममायमुपशाम्येत स्तोकमपि । तत उज्झितस्वजनधनो जिनदीक्षामनुसरामीति ॥ ३ ॥ अथ विधिवशेन दिव्यौपधादिविरहेऽपि स निरातङ्कः । जातः सन् स्वजनान् मोचयित्वा च बहुप्रकारैः ॥ ४ ॥ प्रव्रज्यां प्रतिपन्नो गुणसागरसूरेः सकाशे । षष्ठाष्टमादिदुष्करतपश्चरणपरश्च व्यहार्षीत् ॥ ५ ॥ इति भो? महायशस्त्वया मम विसदृशरूपं समुद्दिश्य । पृष्टं यत्तत् कथितं सर्वमपि मया यथावृत्तम् ॥ ६ ॥ एवं श्रुत्वा महासेन राजन्? त्वया विचिन्तितं तदानीम् । धिग् धिगनार्य्यकार्यासक्तं पुरुषत्वं मम ॥ ७ ॥ धिग् धिग् बुद्धिमपि हु निपततु वज्राशनीगुणगिरौ । शास्त्रार्थपारगत्वमपि यातु पातालमूले ॥ ८ ॥ प्रविशतु दर्यामुत्तमकुलजन्मसमुद्भवश्चा-भिमानः । नीतिरपि वराकी पुरुषप्रवरमपरमनुसरतु ॥ ९ ॥

जो वन्तमिमं तेणं पुरिसप्पवरुत्तमंगरयणेण । सेविउमहं समीहामि सारमेओ व्व निल्लज्जो ॥१०॥ सो धण्णो कयपुण्णो सफलं तस्सेव माणुसं जम्मं । सरयणिसायरधवला पत्ता तेणं चिय पसिद्धी ॥ ११ ॥ णियकुलनहयलचंदो सो चिय कणगप्पभो परं एक्को । लीलाए जेण दलिओ घोरमहामोहपडिवक्खो ॥१२॥ हे ? पावहियय एवं विहाण पुरिसाण सुणिय सच्चरियं । पररमणीपरिभोगे सुमुणिणिसिद्धे कहं रमसि ॥१३॥ जा वि लडहलायन्नपुन्नसव्वंगिया तो पयईए । सोहग्गसमुग्गाओ मणहरसव्वंगचेट्ठाओ ॥ १४ ॥ पयईए चिय सद्दाइ विसयसुंदरसीमभूमीओ । दीसन्तकन्तसव्वंगसंगिसिंगारगरुईओ ॥ १५ ॥ वम्महनिहीसु तासु वि मा मण तं रमसु णिययरमणीसु । पवणपकंपिरपिप्पलपत्तसमुत्तालचित्तासु ॥ १६ ॥

---

यद् वान्तमिदं तेन पुरुषप्रवरोत्तमाङ्गरत्नेन। सेवितुमहं समीहामि सारमेय इव निर्लज्जः ॥ २१० ॥ स धन्यः कृतपुण्यः सफलं तस्यैव मानुषं जन्म । शारदनिशाकरधवला प्राप्ता तेनैव प्रसिद्धिः ॥ ११ ॥ निजकुलनभस्तलचन्द्रः स एव कनकप्रभः परमेकः । लीलया येन दलितः घोरमहामोहप्रतिपक्षः ॥ १२ ॥ हे ! पापहृदय एवंविधानां पुरुषाणां श्रुत्वा सच्चरितम् । पररमणीपरिभोगे सुमुनिनिषिद्धे कथं रमसे ॥ १३ ॥ या अपि लटभलावण्यपूर्णसर्वाङ्गिकास्ततः प्रकृत्या । सौभाग्यसमुद्गता मनोहरसर्वाङ्गचेष्टाः ॥ १४ ॥ प्रकृत्यैव शब्दादिविषयसुन्दरसीमभूमीकाः । दृश्यमानकान्तसर्वाङ्गसंगिशृंगारगुर्विकाः ॥ १५ ॥ मन्मथनिधिषु तास्वपि मा मनस्त्वं रमस्व निजकरमणीषु । पवनप्रकम्पितपिप्पलपत्रसमोत्तालचित्तासु ॥ १६ ॥

अन्नं च ॥ जाणसि तुच्छमिह सुहं जानसि दुक्खं पि मेरुगिरिगरुयं । जाणसि य चलं जीयं जाणसि तुच्छाउ लच्छीतो ॥ १७ ॥ जाणसि अथिरा नेहा जाणसि खणभंगुरं समत्थमिमं । तह वि हु गिहवासं कीस जीव नो चयसि एत्ताहे ॥ १८ ॥ इय निरवग्गहवेरग्गमग्गपडिलग्गचित्तपसरेण । आवद्धकरयलंजलि भणिया सा ससिमुही तुमए ॥ १९ ॥ हे! सुयणु तुमं जणणी तुज्झ पई जो य सो ममं जणगो । जस्सुद्धरिओहमकिच्चकुवया चरियरज्जूए ॥ २० ॥ एत्तो य मह विरागो वट्टति संसारिएसु किच्चेसु । तुममवि महाणुभावे पडिमग्गं अणुसरेज्जासु ॥ २१ ॥ जेण खरपवण ताडियपल्लवचलमाउयं चला लच्छी । तडितरलं तारुण्णं विसया वि विसं व दुहजणगा ॥ २२ ॥

---

अन्यच्च ॥ जानासि तुच्छमिह सुखं जानासि दुःखमपि मेरुगिरिगुरुकम् । जानासि च चलं जीवितं जानासि तुच्छा लक्ष्म्यः ॥१७॥ जानास्यस्थिरान् स्नेहान् जानासि क्षणभंगुरं समस्तमिदम् । तथापि हु गृहवासं करोषि जीव नो त्यजसीदानीम् ॥ १८ ॥ इति निरवग्रहवैराग्यमार्गप्रतिलग्नचित्तप्रसरेण । आवद्धकरतलाञ्जलि भणिता सा शशिमुखी त्वया ॥ १९ ॥ हे! सुतनु त्वं मम जननी त्वं पतिर्यश्च स मम जनकः । येनोद्धृतोऽहमकृत्यकूपाच्चारित्ररज्ज्वा ॥ २२० ॥ इतश्च मम विरागो वर्त्तते संसारिकेषु कृत्येषु । त्वमपि महानुभावे प्रतिमार्गमनुसराशु ॥ २१ ॥ येन खरपवनताडितपल्लवचलमायुश्चला लक्ष्मीः । तडित्तरलं तारुण्यं विषया अपि विषमिव दुःखजनकाः ॥ २२ ॥

पियजणजोगो वि वियोगविहुरिओ रोगभंगुरं गत्तं । अक्कमइ पइखणं परमदारुणा वेरिणिव्व जरा ॥ २३ ॥ अणुसासिऊण एवं तीए गेहाओ झत्ति नीहरिओ । तेणं चिय मग्गेणं गतो तुमं णियभवणम्मि ॥ २४ ॥ तत्थ य ठियस्स तुज्झं संसारासारयं णियंतस्स । वेयालियपुत्तेणं पढिया एक्का इमा गाहा ॥ २५ ॥ जह किंपि कारणं पाविऊण जायइ खणं विरागमई । तह जइ अवट्ठिया सा हवेज्ज ता किं न पज्जन्तं ॥ २६ ॥ एवं च तुमं सोच्चा सविसेससमुल्लसंतसुहभावो । जाये पभायसमए अलहन्तो मंदिरम्मि रइं ॥ २७ ॥ कइवयजणपरियरिओ वणलच्छिं पेच्छिउं विणिक्खन्तो । अह एगत्थुज्जाणे चारणसमणो तए दिट्ठो ॥ २८ ॥ जो पसत्थगुणरयणमण्डणो मोहमल्लदढदप्पखण्डणो । देहकंतिभूसियदिसामुहो पावलोगसंगतिपरंमुहो ॥ २९ ॥

---

प्रियजनयोगोऽपि वियोगविधुरितो रोगभंगुरं गात्रम् । आक्रमति प्रतिक्षणं परमदारुणा वैरिणीव जरा ॥ २३ ॥ अनुशासयित्वैवं तस्या गृहाद् झटिति निःसृतः । तेनैव मार्गेन गतस्त्वं निजकभवने ॥ २४ ॥ तत्र च स्थितस्य तव संसारासारतां पश्यतः । वैतालिकपुत्रेण पठितैकेमा गाथा ॥ २५ ॥ यथा किमपि कारणं प्राप्य जायते क्षणं विरागमतिः । तथा यद्यवस्थिता सा भवेत्तदा किं न पर्य्याप्तम् ॥ २६ ॥ एवं च त्वं श्रुत्वा सविशेषसमुल्लसच्छुभभावः । जाते प्रभातसमयेऽलभमानो मन्दिरे रतिम् ॥ २७ ॥ कतिपयजनपरिवृतो वनलक्ष्मीं द्रष्टुं विनिष्क्रान्तः । अथैकत्रोद्याने चारणश्रमणस्त्वया दृष्टः ॥२८॥ यः प्रशस्तगुणरत्नमण्डनो मोहमल्लदृढदर्पखण्डनः । देहकान्तिभूषितदिशामुखः पापलोकसंगतिपरांमुखः ॥ २९ ॥

जोगमग्गनिग्गहियमाणसो कम्मवेरिजयपयडसाहसो । सामयाए जणचित्तरंजणो महिगतो व्व छण्णहरिणलंछणो ॥३३०॥ अइविसिट्ठसुहलेससंगओ भव्वलोयपायडियमग्गओ । कोहमाणभयलोहवज्जिओ नेव वाइनिवहेण निज्जिओ ॥ ३१ ॥ एक्कचलणनिमियंगभारओ सूरसंमुहकयऽच्छितारओ । सेलरायसिहरं व निच्चलो काउस्सग्गगतो सत्तवच्छलो ॥३२॥ तं एवं विहगुणसंगयं मुणिं पेच्छिउं वियसियच्छो । पाएसु तुमं पडिओ एवं भणिउं पवत्तो य ॥ ३३ ॥ भयवं सिवमग्गुवदंसणेण मम संपयं कुण पसायं । तुहपयजुयचिन्तामणिपलोयणं होउ मा विहलं ॥३४॥ एवं भणिए पाराविऊण उस्सग्गमुग्गकरुणाए । जोगोत्ति कलिय तेणं भणियं भो ! भव्व निसुणेसु ॥ ३५ ॥

---

योगमार्गनिगृहीतमानसः कर्मवैरिजयप्रकटसाहसः । सामतया जनचित्तरञ्जनो महीगत इव छन्नहरिणलांछनः ॥ ३३० ॥ अतिविशिष्टशुभलेशसंगतो भव्यलोकप्रकटितमार्गकः । क्रोधमानभयलोभवर्जितो नैव वादिनिवहेन निर्जितः ॥ ३१ ॥ एकचरणनियमिताङ्गभारः सूर्यसंमुखकृताक्षितारकः । शैलराजशिखरमिव निश्चलः कायोत्सर्गगतः सत्त्ववत्सलः ॥ ३२ ॥ तमेवंविधगुणसंगतं मुनिं दृष्ट्वा विकसिताक्षः । पादयोस्त्वं पतित एवं भणितुं प्रवृत्तश्च ॥ ३३ ॥ भगवन् शिवमार्गोपदर्शनेन मे सांप्रतं कुरु प्रसादम् । त्वत्पदयुगचिन्तामणिप्रलोकनं भवतु मा विफलम् ॥ ३४ ॥ एवं भणिते पालयित्वोत्सर्गमुग्रकरुणया । योग्य इति कलयित्वा तेन भणितं भो भव्य ! निशृणुष्व ॥ ३५ ॥

एत्थं अणोरपारे संसारे दुक्खलक्खपउरम्मि । पाविज्जति मणुयत्तं जीवेहिं कहवि तुडिजोगा ॥३६॥ तत्थवि आरियदेसो देसे वि हु वरकुलाइसामग्गी । तत्थवि सोहग्गोवरिमंजरिसरिसो य जिणधम्मो ॥ ३७ ॥ जम्हा नरसुरलच्छी लब्भति मणुयत्तणमवि तुडिजोगा । न वि लब्भति जिणधम्मो अचिन्तचिन्तामणीकप्पो ॥ ३८ ॥ एवं च रयणनिहिलाभसंनिभं पाविऊण तं कह वि । जो नेइ विफलमइतुच्छविसयवासंगवामूढो ॥ ३९ ॥ सोऽणंतवारमणवरयजम्मजरमरणवारिपडिहत्थं । बहुरोगमयरभीमं भवन्नवं सेवइ वरागो ॥ ३४० ॥ को नाम किर सकण्णो सुदीहकालं किलिस्सिउं कह वि । पत्तो सुवण्णकोडिं हारति तं कागणीए कए ॥ ४१ ॥ किंच ॥ धम्मत्थकाममोक्खा चउरो किर होन्ति एत्थ पुरिसत्था । ताण पुण सेसपुरिसत्थहेउभावो वरो धम्मो ॥ ४२ ॥

---

अत्रापारापारे संसारे दुःखलक्षप्रचुरे । प्राप्यते मनुजत्वं जीवैः कथमपि त्रुटियोगात् ॥ ३६ ॥ तत्राप्यार्य्यदेशो देशेऽपि वरकुलादि-सामग्री । तत्रापि सौभाग्योपरिमञ्जरीसदृशश्च जिनधर्मः ॥ ३७ ॥ यस्मान्नरसुरलक्ष्मीर्लभ्यते मनुजत्वमपि त्रुटियोगात् । नापि लभ्यते जिनधर्मोऽचिन्त्यचिन्तामणिकल्पः ॥ ३८ ॥ एवं च रत्ननिधिलाभसंनिभं प्राप्य तं कथमपि । यो नयति विफलमतितुच्छविषयव्यासंग-व्यामूढः ॥ ३९ ॥ सोऽनन्तावारमनवरतजन्मजरामरणवारिप्रति 'हस्तम्' (पूर्ण) बहुरोगमकरभीमं भवार्ण्णवं सेव्यते वराकः ॥ ॥ ३४० ॥ को नाम किल सकर्ण्णः सुदीर्घकालं क्लेशित्वा कथमपि । प्राप्तः सुवर्ण्णकोटिं हारयति तां काकिण्यै कृते ॥ ४१ ॥ किंच । धर्मार्थकाममोक्षाश्चत्वारः किल भवन्त्यत्र पुरुषार्थाः । तेषां पुनः शेषपुरुषार्थहेतुभावो वरो धर्मः ॥ ४२ ॥

तं पुण मिच्छत्ततमोहमोहिओ णो जहट्ठियं जीवो । नाउं सक्को परिपीयपउरमइरारसो व्व नरो ॥ ४३ ॥ ता भो महायस ? तुमं उज्झियमिच्छत्तसव्वकायव्वो । जिणमेक्कं चिय देवं मुणिणो गुरुणो य सरिऊण ॥ ४४ ॥ पाणिवहमुसावायं अदत्तमेहुणपरिग्गहारंभं । मुंचसु इमम्मि मुक्के जीवो मुचति भवभएण ॥ ४५ ॥ न च एत्तोच्चिय धम्मो अन्नो भुवणत्तए वि अत्थि वरो । न एयविउत्तेणं मोक्खसुहं लब्भइ कहं पि ॥ ४६ ॥ न य निस्सारस्स सरीरयस्स धुव विणासिस्स एयस्स । धम्मोवज्जणमेक्कं मोत्तूण वरं फलं अत्थि ॥ ४७ ॥ खरपवणप्पहयपउमिणिदलग्गलग्गंबुबिंदु व्व चलस्स । न य धम्मजणणविरहे किं पि फलं जीवियस्सापि ॥ ४८ ॥ पडिपुन्नमिमं धम्मज्जणं च नो सव्वविरतिविमुहेण । काउं तीरइ न य एयविरहे लब्भए मोक्खो ॥ ४९ ॥

---

तं पुनर्मिथ्यात्वतमरोघमोहितो न यथास्थितं जीवः । ज्ञातुं शक्यः परिपीतप्रचुरमदिरारस इव नरः ॥ ४३ ॥ तस्माद् भो ? महायशस्त्वं त्यक्तमिथ्यात्वसर्वकर्त्तव्यः । जिनमेकमेव देवं मुनीन् गुरूंश्च संश्रित्य ॥ ४४ ॥ प्राणिवधमृषावादमदत्तमैथुनपरिग्रहारम्भम् । मुञ्चास्मिन् मुक्ते जीवो मुञ्चति भवभयेन ॥ ४५ ॥ न चैतस्मात्किल धर्मोऽन्यो भुवनत्रयेऽप्यस्ति वरः । नैतद्वियुक्तेन मोक्षसुखं लभ्यते कथमपि ॥ ४६ ॥ न च निःसारस्य शरीरस्यैतस्य ध्रुवं विनाशिनः । धर्मोपार्ज्जनमेकं मुक्त्वाऽपरं फलमस्ति ॥ ४७ ॥ खरपवनप्रहतपद्मिनीदलाग्रलग्नाम्बुविन्दुरिव चलस्य । न च धर्मजननविरहे किमपि फलं जीवितस्यापि ॥ ४८ ॥ परिपूर्णमिदं धर्मोर्जनं च न सर्वविरतिविमुखेन । कर्त्तुं शक्यते न चैतद्विरहे लभ्यते मोक्षः ॥ ४९ ॥

न य तद्भावे च सुहं नीसेसकीलेसलेसपरिहीणं । एगन्तियमच्चन्तियमणंतमन्नत्थ संभवइ ॥ ३५० ॥ इय एवं विहसोक्खं मोक्खं जइ वंछेसे तुमं लद्धुं । ता जिणदिक्खानावं घेत्तूण भवन्नवं तरसु ॥ ५१ ॥ इय वुत्ते हरिसवसुच्छलन्तपुलएण भत्तिपणएण । तुमए गहिया दिक्खा तस्स समीवे मुणिवरस्स ॥ ५२ ॥ अह पढिय सयलसत्थो सुणिउणमइमुणियसव्वपरमत्थो । छज्जीवरक्खणपरो गुरुकुलवासम्मि णिवसन्तो ॥ ५३ ॥ विविहतवच्चरणाइं कुणमाणो गुरुगिलाणबालाणं । उवयारे वट्टन्तो निंदन्तो पुव्वदुच्चरियं ॥ ५४ ॥ अपुव्वापुव्वगुणजाणम्मि अब्भुज्जमं परिवहन्तो । सविसेसपसमपीउसपसमियासेसकोहग्गी ॥ ५५ ॥ निग्गहिइंदियवग्गो चिरकालं पालिऊण पव्वज्जं । कयपज्जन्ताणसणो देवो जातोऽसि सोहम्मे ॥ ५६ ॥

---

न च तदभावे च सुखं निःशेषक्लेशलेशपरिहीनम् । ऐकान्तिकमात्यन्तिकमनन्तमन्यत्र संभवति ॥ ३५० ॥ इत्येवंविधसौख्यं मोक्षं यदि वांछसे त्वं लब्धुम् । तदा जिनदीक्षानावं गृहीत्वा भवार्णवं तर ॥ ५१ ॥ इत्युक्ते हर्षवशोच्छलत्पुलकेन भक्तिप्रणतेन । त्वया गृहीता दीक्षा तस्य समीपे मुनिवरस्य ॥ ५२ ॥ अथ पठितसकलशास्त्रः सुनिपुणमतिज्ञातसर्वपरमार्थः । षड्जीवरक्षणपरो गुरुकुलवासे निवसन् ॥ ५३ ॥ विविधतपश्चरणानि कुर्वाणो गुरुग्लानबालानाम् । उपकारे वर्त्तमानो निन्दन् पूर्वदुश्चरितम् ॥ ५४ ॥ अपूर्वापूर्वगुणज्ञानेऽभ्युद्यमं परिवहन् । सविशेषप्रशमपीयूषप्रशमिताशेषक्रोधाग्निः ॥ ५५ ॥ निगृहीतेंद्रियवर्गश्चिरकालं पालयित्वा प्रव्रज्याम् । कृतपर्य्यन्तानशनो देवो जातोऽसि सौधर्म्ये ॥ ५६ ॥

सा वि सुरसुन्दरी तद्दिणाउ आरब्भ विहियपव्वज्जा । पुव्वसिणेहवसेणं तुह देवित्तेण उववन्ना ॥ ५७ ॥
जातो च मए सद्धिं पडिबंधो कोइ तुज्झ अइगरुओ । खणमपि वियोगदुक्खं असहंताण य गतो कल्लो ॥५८॥
चवणसमए य तुमए नीओ हं केवलिस्स पासम्मि । आपुच्छिओ य भयवं पुव्वभवे भावि जम्मं च ॥ ५९ ॥
तेणावि गयपमोक्खा अस्संखसुतिक्खदुक्खपडिबद्धा । पुव्वभवा परिकहिया इमो य भावी नरिंदभवो ॥ ३६० ॥
तो तुमए हं भणिओ जोडियकरसंपुडेण ससिणेहं । मा काहिसि वंचामिमं अपच्छिमं पत्थणं सुहय ॥ ६१ ॥
जइ याहं नरनाहो होमि महाविसयसंगवामूढो । गयपमुहभवेहिं तया तुमए पडिबोहियव्वत्ति ॥ ६२ ॥
पावट्ठाणपसत्तो अपत्तजिणधम्मसारचारित्तो । मा निवडिस्सामि पुणो वि दुक्खवसीमासु कुगईसु ॥ ६३ ॥

---

सापि सुरसुन्दरी तद्दिनादारभ्य विहितप्रव्रज्या । पूर्वस्नेहवशेन तव देवीत्वेनोपपन्ना ॥ ५७ ॥ जातश्च मया सार्धं प्रतिबन्धः कोऽपि तवातिगुरुकः । क्षणमपि वियोगदुःखमसहमानयोश्च गतः कालः ॥५८॥ च्यवनसमये च त्वया नीतोऽहं केवलिनः पार्श्वे । आपृष्टश्च भगवान् पूर्वभवे भावि जन्म च ॥ ५९ ॥ तेनापि गजप्रमुखा असंख्यसुतीक्ष्णदुःखप्रतिबद्धाः । पूर्वभवाः परिकथिता अयं च भाविनरेन्द्रभवः ॥ ३६० ॥ ततस्त्वयाऽहं भणितो योजितकरसंपुटेन सस्नेहम् । मा कार्षीर्बन्ध्यामिमामपश्चिमां प्रार्थनां सुभग ! ॥ ६१ ॥ यदि चाहं नरनाथो भवामि महाविषयसंगव्यामूढः । गजप्रमुखभवैस्तदा त्वया प्रतिबोद्धव्य इति ॥ ६२ ॥ पापस्थानप्रसक्तोऽप्राप्तजिनधर्मसारचारित्रः । मा निपतिष्यामि पुनरपि दुःखावसीमासु कुगतिषु ॥ ६३ ॥

पडिवन्नमिमं च मए चूओ तुमं एस पत्थिवो जातो । सा पुण देवी भज्जा कणगवई नाम तुह जाता ॥ ६४॥ पाएण नेव सुहिणो सोउं पि हु अहिलसन्ति धम्मगिरं । इय सुदुहट्टस्स मए तुह सिट्ठो एस बुत्तन्तो ॥ ६५ ॥ ता सो हं तुह मित्तो सो च तुमं ते इमे च पुव्वभवा । जं बहुगुणोववेयं तं इत्तो कुण महाभाग ॥ ६६ ॥ इय कहिए महासेणो जाइं सरिऊण निरवसेसंपि । मुच्छानिमीलियच्छो निद्दोवगओ व ठाइ खणं ॥ ६७ ॥ अह सिसिरपवणपरिलद्धचेयणो भालनिमियकरकमलो । सायरकयप्पणामो राया तं भणिउमाढत्तो ॥ ६८ ॥ पडिवन्नभरुव्वहणेण सुहय तुमए न केवलं सग्गो । समलंकिओ वि रायइ ओइन्नेणेह धरणी वि ॥ ६९ ॥ जइ वि तुह पणयवच्छल्लयाए तुच्छं तिलोयदाणमवि । पच्चुवयारी होहामि कहमहं तह वि इति कहसु ॥३७०॥

---

प्रतिपन्नमिदं च मया च्युतस्त्वमेष पार्थिवो जातः । सा पुनर्देवी भार्या कनकवती नाम्नी तव जाता ॥ ६४ ॥ प्रायेण नैव सुखिनः श्रोतुमपि हि अभिलषन्ति धर्मगिराम् । इति सुदुःखार्त्तस्य तुभ्यं शिष्ट एष वृत्तान्तः ॥ ६५ ॥ तस्मात्सोऽहं तव मित्रः स च त्वं त इमे च पूर्वभवाः । यद् बहुगुणोपवेतं तदितः कुरु महाभाग ? ॥ ६६ ॥ इति कथिते महासेनो जातिं स्मृत्वा निरवशेषमपि । मूर्च्छानिमीलिताक्षो निद्रोपगत इव तिष्ठति क्षणम् ॥ ६७ ॥ अथ शिशिरपवनपरिलब्धचेतनो भालनिर्मितकरकमलः । सादरकृतप्रणामो राजा तं भणितुमारब्धः ॥ ६८ ॥ प्रतिपन्नभारोद्वहनेन सुभग ? त्वया न केवलं स्वर्गः । समलंकृतो विराजतेऽवतीर्णेनेह धरण्यपि ॥ ६९ ॥ यद्यपि तव प्रणयवात्सल्यतायां तुच्छं त्रिलोकदानमपि । प्रत्युपकारी भविष्यामि कथमहं तथापीति कथय ॥ ३७० ॥

भणियं सुरेण जइया जिणपायमूले पवज्जहिसि दिक्खं । पच्चुवयारी नरवर होहिसि निस्संसयं तइया ॥७१॥ एवं काहं ति पयंपमाणमुवलद्धसुद्धसम्मत्तं । मोत्तुं सगिहम्मि निवं जहागयं पडिगतो तियसो ॥ ७२ ॥ राया वि विम्हियमणो निय निय ठाणत्थसुहडकरितुरगं । भवणं देविं च पलोइऊण चिंतेउमाढत्तो ॥ ७३ ॥ देवाण महो सत्ती तहाविहं दंसिऊण उड्डमरं । तह उवसामं नीयं जह न मुणइ पेच्छगो वि जणो ॥ ७४ ॥ एवं विहं सुसामत्थसुन्दरं सुरभवं सरन्तस्स । माणुस्सएसु किचेसु जीव कह तुज्झ रमइ मई ॥ ७५ ॥ कह वावि वंत पित्तासुईसु दुग्गन्धमलविलीणेसु । भोगेसु पडिबन्धो उप्पज्जइ तुज्झ निल्लज्ज ॥ ७६ ॥ किं वा खणभंगुररज्जविसयवावारचिंतणं मोत्तुं । अणवरयमिमं चिय मोक्खहेउभूयं ण पच्छेसि ॥ ७७ ॥

---

भणितं सुरेण यदा जिनपादमूले प्रपत्स्यसे दीक्षाम् । प्रत्युपकारी नरवर भविष्यसि निःसंशयं तदा ॥ ७१ ॥ एवं करिष्यामीति प्रजल्पमानमुपलब्धशुद्धसम्यक्त्वम् । मुक्त्वा स्वगृहे नृपं यथागतं प्रतिगतस्त्रिदशः ॥ ७२ ॥ राजापि विस्मितमना निजनिजस्थानस्थसुभटकरितुरंगम् । भवनं देवीं च प्रलोकयित्वा चिन्तितुमारब्धः ॥ ७३ ॥ देवानामहो शक्तिस्तथाविधं दर्शयित्वोड्डमरम् । तथोपशामं नीतं यथा न जानाति प्रेक्षकोऽपि जनः ॥ ७४ ॥ एवं विधं सुसामर्थ्यसुन्दरं सुरभवं सरतः । मानुष्यकेषु कृत्येषु जीव कथं तव रमते मतिः ॥ ७५ ॥ कथं वापि वान्तपित्ताशुचिषु दुर्गन्धमलविलीनेषु । भोगेषु प्रतिबन्ध उत्पद्यते तव निर्लज्जः ॥ ७६ ॥ किंवा क्षणभंगुरराज्यविषयव्यापारचिन्तनम् मुक्त्वा । अनवरतमिदमेव मोक्षहेतुभूतं न प्रार्थयति ॥ ७७ ॥

किं होसु दिणं सव्वं संगं जहिं विमोत्तूणं । मिगचारियं चरिस्सामि सुमुणिपयसेवणासत्तो ॥७८॥ का होही सा सुनिसा जीए कंडूयणट्ठया वसभा । घट्टिस्सन्ति ममंगं उस्सग्गथियस्स थाणुं व ॥ ७९ ॥ को वा सो सुमुहुत्तो होही खलिया वि दोसपमुक्कं । आयारप्पमुहमहं जम्मि सुत्तं पठिस्सामि ॥ ३८० ॥ का वा सा वेला वि हु होही जीए य पक्खिविस्सामि । देहविणासपसत्ते वि करुणभरमंथरं दिट्ठिं ॥ ८१ ॥ कइया व थेवखलिए वि परुसवयणेहिं बोहिओ सन्तो । हरिसभरनिब्भरंगो गुरूण सिक्खं गहिस्सामि ॥ ८२ ॥ होही य को स समओ जम्मि इह परभवेसु णिरवेक्खो । आराहणमाराहिय पाणच्चयं करिस्सामि ॥ ८३ ॥ इय संवेगोवगओ राया जा चिन्तए रवी ताव । सविसेसमणिच्चं तुवं संसिउं अत्थमणुपत्तो ॥ ८४ ॥

---

किं भवेत् दिनं सर्व संगं यत्र विमुच्य । मृगचारिकम् चरिष्यामि सुमुनिपदसेवनासक्तः ॥ ७८ ॥ का भविष्यति सा सुनिशा यस्यां कण्डूयनार्थका वृषभाः । घट्टिष्यन्ति ममाङ्गमुत्सर्गस्थितस्य स्थाणुमिव ॥ ७९ ॥ को वा स सुमुहूर्त्तो भविष्यति स्खलितोऽपि दोषप्रमुक्तम् । आचारप्रमुखमहं यस्मिन् सूत्रं पठिष्यामि ॥ ३८० ॥ का वा सा वेलापि हि भविष्यति यस्यां च प्रक्षेप्स्यामि । देहविनाशप्रसक्तेऽपि करुणाभरमन्थरां दृष्टिम् ॥ ८१ ॥ कदा वा स्तोकस्खलितेऽपि परुषवचनैर्बोधितः सन् । हर्षभरनिर्भराङ्गो गुरूणां शिक्षां गृहीष्यामि ॥ ८२ ॥ भविष्यति च कः स समयो यस्मिन्निह परभवेषु निरपेक्षः । आराधनामाराध्य प्राणत्यागं करिष्यामि ॥ ८३ ॥ इति संवेगोपगतो राजा यावच्चिन्तयति रविस्तावत् । सविशेषमनित्यं त्वां शंसितुमस्तमनुप्राप्तः ॥ ८४ ॥

सूरारुणकरपहकरकरंबिओ सहइ तयणु जियलोओ । जयकवलणमणकीणासचक्खुपहपसरुसद्धो व ॥ ८५ ॥ कुणह जणा अत्तहियं एस विसप्पइ तमो कयंतो व । इय विहगकलयलेणं कहइ व संझा वियंभंती ॥ ८६ ॥ विहलियदोसावेसो अवहत्थियतमभरो मुणिजणो व । विप्फुरइ पयडमाहप्पनिम्मलो तारयसमूहो ॥ ८७ ॥ कालपरिणामविहडियपुव्वदिसासिप्पिसंपुडुल्लसिओ । मुत्ताहलनिउरंबो व सीयकिरिणो वि उग्गमइ ॥ ८८ ॥ एवं विहनिसिसमए जाए काउं पओसकिच्चाइं । सुहसेज्जाए निसन्नो नरनाहो चिंतए एवं ॥ ८९ ॥ पुरनगरखेडकव्वडमडंबगामासमाइणो धन्ना । ते जेसु जिणो विहरति भुवणगुरू सिरिमहावीरो ॥३९०॥ जइ सो भयवं भुवणेक्कबंधवो एज्ज एत्थ नयरीए । ता पव्वज्जं घेत्तुं दुक्खाण जलंजलिं देमि ॥ ९१ ॥

---

सूर्यारुणकरप्रभाकरकरम्वितो राजते तदनु जीवलोकः । जगत्कवलनमनःकीनाशचक्षुःपथप्रसरश्रद्ध इव ॥ ८५ ॥ कुरुत जना आत्महितमेतद् विसर्पति तमः कृतान्त इव । इति विहगकलकलेन कथयतीव संध्या विजृम्भंती ॥ ८६ ॥ विफलितदोषावेशोऽवहस्तिततमोभरो मुनिजन इव । विस्फुरति प्रकटमाहात्म्यनिर्मलस्तारकसमूहः ॥ ८७ ॥ कालपरिणामविघटितपूर्वदिक्शुक्तिसंपुटोल्लसितः । मुक्ताफलनिकुरुम्ब इव शीतकिरणोऽप्युद्गच्छति ॥ ८८ ॥ एवंविधनिशासमये जाते कृत्वा प्रदोषकृत्यानि । सुखशय्यायां निषण्णो नरनाथश्चिन्तयत्येवम् ॥ ८९ ॥ पुरनगरखेटकर्वटमडम्बग्रामाश्रमादयो धन्याः । ते येषु जिनो विहरति भुवनगुरुः श्रीमहावीरः ॥ ३९० ॥ यथा स भगवान भुवनैकबान्धव एत्यस्यां नगर्याम् । तदा प्रव्रज्यां गृहीत्वा दुःखानां जलाञ्जलिं ददामि ॥ ९१ ॥

इय नरवइणो चिन्तागयस्स निद्दाए अविरईए व्व। पडिवक्खकोवियाए चिन्तापसरो पडिनिरुद्धो ॥ ९२ ॥ अह पच्छिमरयणीए अत्ताणं दुग्गपव्वयसिरम्मि। आरोहियमुत्तमबलजुएण पुरिसेण ॥ ९३ ॥ सुमिणम्मि दट्ठूणं नरनाहो मंगलजयतूरघोसपडिबुद्धो। चिन्तइ परमब्भुदओ होही धुवमज्ज मह को वि ॥ ९४ ॥ किंतु मम पव्वयारोहणेण जो वड्ढिओ महाभागो। उवयारे न स नज्जइ परमब्भुदएक्क हेउ त्ति ॥ ९५ ॥ एवं विगप्पमाणस्स भूमिनाहस्स झत्ति आगंतुं। सिररइयपाणिकमला पडिहारी भणिउमाढत्ता ॥ ९६ ॥ देव! दुवारे उज्जाणपालया तुम्हदंसणट्ठाए। करकलियकुसुममाला चिट्ठन्ति किमेत्थ कायव्वं ॥ ९७ ॥ रन्ना जंपियमाणेहिं झत्ति तो सा पडिच्छिउं आणं। उज्जाणपालगे लहु घेत्तुं पत्ता निवसमीवं ॥ ९८ ॥

---

इति नरपतेश्चिन्तागतस्य निद्रयाऽविरत्येव। प्रतिपक्षकोपितया चिन्ताप्रसरः प्रतिनिरुद्धः ॥ ९२ ॥ अथ पश्चिमरजन्यामात्मानं दुर्गपर्वतशिरसि। आरोहितमुत्तमबलयुतेन पुरुषेण ॥ ९३ ॥ स्वप्ने दृष्ट्वा नरनाथो मंगलजयतूर्यघोषप्रतिबुद्धः। चिन्तयति परमाभ्युदयो भविष्यति ध्रुवमद्य मे कोऽपि ॥ ९४ ॥ किन्तु मम पर्वतारोहणेन यो वर्द्धितो महाभागः। उपकारेण स ज्ञायते परमाभ्युदयैकहेतुरिति ॥ ॥ ९५ ॥ एवं विकल्प्यमानस्य भूमीनाथस्य झटित्यागत्य। शिरोरचितपाणिकमला प्रतिहारी भणितुमारब्धा ॥ ९६ ॥ देव! द्वार उद्यानपालकास्त्वदर्शनार्थाय। करकलितकुसुममालास्तिष्ठन्ति किमत्र कर्त्तव्यम् ॥ ९७ ॥ राज्ञा जल्पितमानय झटिति ततः सा प्रतीक्ष्याज्ञाम्। उद्यानपालकान् लघु गृहीत्वा प्राप्ता नृपसमीपम् ॥ ९८ ॥

उज्जाणपालगेहिं कयप्पणामेहिं अप्पिउं कुसुमे । सिरसि विरइयंजलीहिं पयंपियं जयसि तं देव ! ॥ ९९ ॥ वद्धाविज्जसि य जओ तइलोक्कदिवायरो महावीरो । तिहुअणसरपरिसरकुमुयविब्भमभमिरजसपसरो ॥ ४०० ॥ छत्तत्तयपिसुणियसग्गमच्चपायालपवरसामित्तो । सालत्तयपरिवेढियमणिमयसीहासणासीणो ॥ १ ॥ हरिसुद्धरसुरपक्खित्तपउरकुसुमंजलीहिं अग्घविओ । संसयवुच्छेयसमच्छसत्थवित्थरियधम्मकहो ॥ २ ॥ सहरिससुरवइकरविहुयकुमुमहिमगोरचामरुप्पीलो । उम्मिल्लपवरपल्लवकंकेल्लिपसाहियदियंतो ॥ ३ ॥ मायंडपयंडपरिप्फुरंतभामंडलोवहयतिमिरो । सुरपहयदुंदुहीरवपयडियअप्पडिमरिउविजओ ॥ ४ ॥ गणणाइक्कन्तसुरासुरिंदसंदोहपणयपयपउमो । सयमेव समोवसरिओ सरणागयवच्छलो भयवं ॥ ५ ॥

---

उद्यानपालकैः कृतप्रणामैरर्पयित्वा कुसुमानि । शिरसिविरचितांजलिभिः प्रजल्पितं जयसि त्वं देव? ॥ ९९ ॥ वर्धसे यतस्त्रिलोकदिवाकरो महावीरः । त्रिभुवनसरःपरिसरकुमुदविभ्रमभ्रामियशःप्रसरः ॥ ४०० ॥ छत्रत्रयपिशुनितस्वर्गमर्त्यपातालप्रवरस्वामित्वम् । शालत्रयपरिवेष्टितमणिमयसिंहासनासीनः ॥ १ ॥ हर्षोद्धरसुरप्रक्षिप्तप्रचुरकुसुमांजलिभिरर्घितः । संशयव्युच्छेदसमर्थशास्त्रविस्तारितधर्मकथः ॥ २ ॥ सहर्षसुरपतिकरविधूतकुमुदहिमगौरचामरोत्पीडः । उन्मिलत्प्रवरपल्लवकंकेलिप्रसादितदिगन्तः ॥ ३ ॥ मार्तण्डप्रचण्डपरिस्फुरद्भामण्डलोपहततिमिरः । सुरप्रहतदुन्दुभीरवप्रकटिताप्रतिमरिपुविजयः ॥ ४ ॥ गणनातिक्रान्तसुरासुरेन्द्रसंदोहप्रणतपदपद्मः । स्वयमेव समवसृतः शरणागतवत्सलो भगवान् ॥ ५ ॥

एवं सोच्चा अच्चन्तपहरिसुप्पन्नबहलपुलयंगो। करकमलनिलीणं पिव मन्नंतो तिहुयणसिरिं पि ॥ ६ ॥ सो एस जिणो सुमिणम्मि जेणं आरोहिओ म्हि गिरिसिहरे । संसारपारगामी भवामि एत्तो त्ति चिन्तन्तो ॥ ७ ॥ अद्धतेरसलक्खे रययस्स पणामिउं निवो तेसिं। पीईदाणं तो सिग्घमेव करिकन्धरारूढो ॥ ८ ॥ सयलंतेउर-पुरलोयपरिगओ मागहेहिं थुव्वंतो । निक्खंतो णयरीओ वंदणवडियाए जयगुरुणो ॥ ९ ॥ दूराउच्चिय छत्ताइ छत्तमालोइउं च हिट्ठमणो । पम्मुक्करायचिंधो पंचविहाभिगमसंजुत्तो ॥ ४१० ॥ ओसरणे पविसित्ता उत्तर-दिसि संठिएण दारेण। हरिसवसवियसियच्छो सामिं तिपयाहिणेऊण ॥ ११ ॥ महिविट्ठचुंबिणा मत्थएण पुणरुत्त विरइयपणामो। भालयलारोवियपाणिपल्लवो थुणिउमाढत्तो ॥ १२ ॥

---

एवं श्रुत्वात्यन्तप्रहर्षोत्पन्नबहलपुलकाङ्गः । करकमलनिलीनामिव मन्यमानस्त्रिभुवनश्रीमपि ॥ ६ ॥ स एष जिनः स्वप्ने येनारोहितोऽस्मि गिरिशिखरे । संसारपारगामी भवाम्यस्मादिति चिन्तयन् ॥ ७ ॥ अर्धत्रयोदशलक्षम् रजतस्यार्प्पयित्वा नृपस्तेषाम् । प्रीतिदानं ततः शीघ्रमेव करिस्कन्धरारूढः ॥ ८ ॥ सकलान्तःपुरपुरलोकपरिगतो मागधैः स्तूयमानः । निष्क्रान्तो नगर्या वन्दननिमित्ताय जगद्गुरोः ॥ ९ ॥ दूरादेव छत्रादिच्छत्रमालोक्य च हृष्टमनाः । प्रमुक्तराजचिह्नः पञ्चविधाभिगमसंयुक्तः ॥ ४१० ॥ समवसरणे प्रविश्योत्तरदिशि संस्थितेन द्वारेण । हर्षवशविकसिताक्षः स्वामिनं त्रिप्रदक्षणीकृत्य ॥ ११ ॥ महीपृष्ठचुम्बिना मस्तकेन पुनः पुनर्विरचितप्रणामः । भालतलारोपितपाणिपल्लवः स्तोतुमारब्धः ॥ १२ ॥

जय विमलकेवलालोयदलियमिच्छत्तभीमतमपसर !। पसरंतुब्भडकलिकालमेहविद्दवणखरपवणा ॥१३॥ खरपवणबलिंदियतुरयवग्गनिग्गहणतिहुअणपसिद्ध । तिहुयणपसिद्धसिद्धत्थरायकुलकमलमायंड ॥ १४ ॥ मायंडुड्डामरगुरुपयावपडिहयकुतित्थिविप्फुरण । रणरोगासिवपसमणसहेक्कनामग्गहण देव ॥ १५ ॥ देविन्दविन्दवन्दियदढरागद्दोसदारुकरवत्ति । करवत्तिनिवईसुह जयसि तुमं जिणमहावीर ॥ १६ ॥ उवसग्गवग्गनिक्खोभयाए कह मेरुणोवमा होज्ज । तुह देव चलियचलणंगुलीए हलहलियसिहरेण ॥ १७ ॥ कह तेजसोमयासुवि उवमिज्जसि नाह तं रविससीहिं । दिणरयणीण विरामे जेसिं सिरी दूरमुवरमति ॥ १८ ॥ कह वा तेण तुलिज्जति तुह जिण गंभीरिमावि जलनिहिणा । जो दुट्ठसत्तकयखोभणंपि णो गोविउं तरति ॥ १९ ॥

---

जय विमलकेवलालोकदलितमिथ्यात्वभीमतमःप्रसर ! । प्रसरदुद्भटकलिकालमेघविद्रावणखरपवन ॥१३॥ खरपवनबलेन्द्रियतुरगवर्गनिग्रहणत्रिभुवनप्रसिद्ध । त्रिभुवनप्रसिद्धसिद्धार्थराजकुलकमलमार्तण्ड ॥ १४ ॥ मार्तण्डोड्डामरगुरुप्रतापप्रतिहतकुतीर्थिविस्फुरण । रणरोगाशिवप्रशमनसहैकनामग्रहण देव ॥ १५ ॥ देवेन्द्रविन्दवन्दितदृढरागदोषदारुक्रकच । करवर्तिनिवृत्तिसुख जयसि त्वं जिनमहावीर ॥१६॥ उपसर्गवर्गनिक्षोभतायां कथं मेरुणोपमा भूयात् । तव देव चलितचरणाङ्गुल्या हलहलितशिखरेण ॥ १७ ॥ कथं तेजःसौम्यतयोरप्युपमीयसे नाथ ! त्वं रविशशिभ्याम् । दिनरजनीनां विरामे ययोः श्रीर्दूरमुपरमति ॥१८॥ कथं वा तेन तुल्यते तव जिन गम्भीरिमापि जलधिना । यो दुष्टसत्त्वकृतक्षोभणमपि नो गोपयितुं शक्नोति ॥ १९ ॥

इय दूरमसारिच्छे उवमाणे जइ परं भुवणनाह। तुमए च्चिय तुवमुवमिज्जसि त्ति मह चित्तसंवित्ती ॥२०॥ तो एवं थोऊण जिणं गोयमपमुहे य गणहरे नमिउं। राया पसान्तचित्तो तयणु निविट्ठो महीवट्ठे ॥ २१ ॥ तो जयगुरुणा नरतिरियदेवसाहारणाए वाणीए। पारद्धा धम्मकहा कहिउं पीऊसवुट्ठिसमा ॥ २२ ॥ कहं हंहो देवाणुपिया जइ वि हु तुज्झेहिं जलहिपब्भट्ठं। रयणं पिव मणुयत्तं संपत्तं कहवि तुडिजोगा ॥२३॥ जइ वि हु मणवंच्छियसयलवत्थुसत्थेक्कसाहणसमत्था। चिन्तामणिव्व भुयदंडचंडिमावज्जिया लच्छी ॥२४॥ जइवि हु णो पेच्छिज्जति तुच्छं पि हु पुन्नपगरिसवसेण। इट्ठवियोगाणिट्ठप्पगपमुहं च किंपि दुहं ॥ २५ ॥ जइवि हु विसट्ठ-कन्दोट्ठदामदीहच्छियासु तरुणीसु। उवरमइ न थेवं पि हु अच्चन्तं गाढपडिबंधो ॥ २६ ॥

---

इति दूरमसादृश्य उपमाने यदि परं भुवननाथ। त्वयैव त्वमुपमीयसे इति मम चित्तसंवित्तिः ॥ २० ॥ एवं स्तुत्वा जिनं गौतमप्रमुखांश्च गणधरान् नत्वा। राजा प्रशान्तचित्तस्तदनु निविष्टो महीपृष्ठे ॥ २१ ॥ ततो जगद्गुरुणा नरतिर्यग्देवसाधारणया वाण्या। प्रारब्धा धर्मकथा कथयितुं पीयूषवृष्टिसमा ॥२२॥ कथं हंहो देवानुप्रिया यद्यपि हि युष्माभिर्जलधिप्रभ्रष्टम्। रत्नमिव मनुजत्वं संप्राप्तं कथमपि त्रुटियोगात् ॥ २३ ॥ यद्यपि हि मनोवांछितसकलवस्तुसार्थैकसाधनसमर्था। चिन्तामणिरिव भुजदण्डचन्द्रिकेवार्जिता लक्ष्मीः ॥ २४ ॥ यद्यपि हु न दृश्यते तुच्छमपि पुण्यप्रकर्षवशेन। इष्टवियोगानिष्टप्रगमप्रमुखं च किमपि दुःखम् ॥२५॥ यद्यपि हि विदलितनीलोत्पलदामदीर्घाक्षिकासु तरुणीसु। उपरमति न स्तोकमपि हि अत्यन्तगाढप्रतिबन्धः ॥ २६ ॥

रागद्दोसविउत्तं खणमेक्कं तह वि माणसं काउं। परिचिंतह एयाणं सरूवमिय णिउणबुद्धीए ॥ २७ ॥ एत्थ भवम्मि पत्तं पि कह वि मणुयत्तमकयधम्मेण। एमेव हारियं पुण पाविज्जति कहवि तुडिजोगा ॥२८॥ पुढवाइएसु जम्हा जीवो परिवसति कालमस्संखं। तं चेव अणंतगुणं वणस्सइम्मि गतो सन्तो ॥ २९ ॥ अन्नासु वि विविहासुं निंदियजोणीसु णेगवारा तो। जीवस्स भमन्तस्स कत्तो च्चिय एयसंपत्ती ॥ ३० ॥ अवि लब्भन्ति समत्थाइं सेसं मणंवंछियाइं कज्जाइं। सिवसोक्खसाहणखमं एयं पुण खणदुल्लंभं ॥ ३१ ॥ जा वि हु गरुयकिलेसप्पसाहिया दुक्खरक्खणीज्जा य। सयणनरनाहतक्कर तक्कुयसाहारणा लच्छी ॥ ३२ ॥ आवयणिबंधणाए संमोहकरीए एगभवियाए। सरयब्भं व चलाए विहलो तीए वि परितोसो ॥ ३३ ॥

---

रागदोषवियुक्तं क्षणमेकं तथापि मानसं कृत्वा। परिचिन्ततैतासां स्वरूपमिति निपुणबुद्ध्या ॥ २७ ॥ अत्र भवे प्राप्तमपि कथमपि मनुजत्वमकृतधर्मेण। एवमेव हारितं पुनः प्राप्यते कदाऽपि त्रुटियोगात् ॥२८॥ पार्थिवादिकेषु यस्माज्जीवः परिवसति कालमसंख्यम्। तं चैवानन्तगुणं वनस्पतौ गतः सन् ॥ २९ ॥ अन्यास्वपि विविधासु निन्दितयोनिष्वनेकवारस्ततः। जीवस्य भ्रमतः कुत एवैतत्संप्राप्तिः ॥ ३० ॥ अपि लभ्यन्ते समस्तानि शेषं मनोवांछितानि कार्य्याणि। शिवसौख्यसाधनक्षममेतत्पुनः क्षणं दुर्लभ्यम् ॥३१॥ यापि हि गुरुक्लेशप्रसाधिता दुःखरक्षणीया च। स्वजननरनाथतस्करतत्कृतसाधारणा लक्ष्मीः ॥ ३२ ॥ आपन्निबन्धनया संमोहकारिण्यैकभविकया। शरदभ्रमिव चलया विफलस्तयापि परितोषः ॥ ३३ ॥

जं पि य कहंपि संपइ इट्ठवियोगाइना वडइ दुक्खं । किं एत्तियमेत्तेण वि तस्साभावो सया जातो ॥३४॥ जम्हा सिद्धे मोत्तुं अन्नो सो नत्थि तिहुयणे वि जणो । सारीरमाणसाइं जस्स वियंभंति न दुहाइं ॥ ३५ ॥ एत्तो च्चिय मुणिवसभा सव्वं संगं विवज्जिउं दूरे । अब्भुज्जमन्ति भवभीरुमाणसा मोक्खसोक्खत्थं ॥ ३६ ॥ जइ पुण इट्ठवियोगाइ नेव थेवं पि होज्ज इह दुक्खं । ता नो करेज्ज दुक्करतवचरणं कोवि मोक्खकए ॥ ३७ ॥ एयं च चिन्तह दढं पडिबंधो जो य एस रमणीसु । सो किंपाकफलं पिव मुहमहुरो अंतविरसो य ॥ ३८ ॥ अस्संखभवपरंपरपरिचयकरी सुहासयविदारी सुमुणिजणवज्जणिज्जा मणसा वि य नेव सरणिज्जा ॥३९॥ जं किं पि एत्थ वसणं दुक्खं जं किं पि जं च वयणिज्जं । सव्वस्स तस्स मूलं एसा च्चिय गिज्जए एक्का ॥ ४० ॥

---

यदपि च कथमपि सांप्रति इष्टवियोगादिना पतति दुःखम् । किमियन्मात्रेणापि तस्याभावः सदा जातः ॥ ३४ ॥ यस्मात् सिद्धान् मुक्त्वाऽन्यः स नास्ति त्रिभुवनेऽपि जनः । शारीरमानसानि यस्य विजृम्भन्ति न दुःखानि ॥ ३५ ॥ अत एव मुनिवृषभाः सर्वं संगं विवर्जय्य दूरे । अभ्युद्यमन्ति भवभीरुमानसा मोक्षसौख्यार्थम् ॥ ३६ ॥ यदि पुनरिष्टवियोगादि नैव स्तोकमपि भवेदिह दुःखम् । तदा नो कुर्याद् दुष्करतपश्चरणं कोऽपि मोक्षकृते ॥३७॥ एतच्च चिन्तत दृढं प्रतिबन्धो यश्चैष रमणीषु । स किंपाकफलमिव मुखमधुरोऽन्तविरसश्च ॥३८॥ असंख्यभवपरम्परा परिचयकारिणी सुभाशयविदारिणी । सुमुनिजनवर्जनीया मनसापि च नैव सरणीया ॥ ३९ ॥ यत्किमप्यत्र व्यसनं दुःखं यत्किमपि यच्च वदनीयम् । सर्वस्य तस्य मूलमेषैव गीयत एका ॥ ४० ॥

भवसायरस्स पारं तच्चिय पत्ता पवित्तिया धरणी । तेहिं चिय सच्चरिएण जेहिं चत्ता इमा दूरं ॥ ४१ ॥ इय भो महाणुभावा सुणिउण बुद्धीए चिन्तइत्ताणं । अणुसरह सरहसं धम्मसारवावारमणवरयं ॥ ४२ ॥ एवं जिणेण कहिए सविसेससमुल्लसन्तसुहभावो । राया कयप्पणामो णिडालतडघडियकरकमलो ॥ ४३ ॥ जंपिउमाढत्तो जाव नाह रज्जे ठवामि नियपुत्तं । ताव तुह पायमूले पत्तज्जं संपवज्जामि ॥ ४४ ॥ भणियं तिहु-यणगुरुणा जुज्जइ तुम्हारिसाण राय इमं । नहि विन्नायसरूवा रमंति थेवंपि संसारे ॥ ४५ ॥ अह पणमिय जिणचरणे राया गंतूण निययभवणम्मि । सामन्तमंतिपमुहं पवरजण वाहरावेति ॥ ४६ ॥ भणति य स गग्गि-रगिरं अहो ममिन्हि पव्वज्जिउं दिक्खं । जाया बुद्धी ता अहिवइत्तदप्पाउ मोहा वा ॥ ४७ ॥

---

भवसागरस्य पारं त एव प्राप्ता पवित्रिता धरणी । तैरेव सच्चरितेन यैस्त्यक्ता इमा दूरम् ॥ ४१ ॥ इति भो महानुभावाः सुनिपुणबुद्ध्या चिन्तयित्वा । अनुसरत सरभसं धर्मसारव्यापारमनवरतम् ॥ ४२ ॥ एवं जिनेन कथिते सविशेषसमुल्लसच्छुभभावः । राजा कृतप्रणामो ललाटतटघटितकरकमलः ॥ ४३ ॥ जल्पितुमारब्धो यावन्नाथ ! राज्ये स्थापयामि निजपुत्रम् । तावत् त्वत्पादमूले प्राप्तोऽद्य संप्रव्रजामि ॥ ४४ ॥ भणितं त्रिभुवनगुरुणा युज्यते युष्मादृशानां राजन्निदम् । नहि विज्ञातस्वरूपा रमन्ते स्तोकमपि संसारे ॥ ४५ ॥ अथ प्रणम्य जिनचरणे राजा गत्वा निजभवने । सामन्तमन्त्रिप्रमुखं प्रवरजनं व्याजुहाव ॥ ४६ ॥ भणति च स गद्गद्गिरमहो ममेदानीं प्रपत्तुं दीक्षाम् । जाता बुद्धिस्तस्मादधिपतित्वदर्प्पान्मोहाद् वा ॥ ४७ ॥

जं वड्डियमवयारे तुम्ह मए किंपि कहवि तं सव्वं। खमियव्वं तुब्भेहिं वुड्ढिं नेयं च रज्जमिमं ॥ ४८ ॥ एवं ते अणुसासिय महाविभूईए पुण्णदियहंमि। जायम्मि सुहमुहुत्ते रज्जम्मि ठवेति जयसेणं ॥ ४९ ॥ सामंतमंतिमंडलपमुहपहाणेण परियणेण समं। पणमित्ता सप्पणयं कयंजली तमणुसासइ य ॥ ५० ॥ जइ वि हु पयडीए चिय सच्चरियालंकियस्स तुह वच्छ। नो अत्थि सिक्खणिज्जं तहवि अहं किं पि जंपेमि ॥ ५१ ॥ सामी मंती रट्ठं जुग्गं कोसो वलं सुही चेव। अन्नोन्नुवगारेणं पुत्तय सत्तंगरज्जमिमं ॥ ५२ ॥ अवलंबिऊण सत्तं बुद्धीए जहोचियं च चिंतित्ता। सत्तंगस्स वि एयस्स लाभहेउं जएज्ज तुमं ॥ ५३ ॥ तत्थप्पाणं पढमं ठवेज्ज विणए तओ अमच्चे उ। तत्तो भिच्चे पुत्ते य तयणु पच्छा पुण पयाओ ॥ ५४ ॥

---

यद्वर्त्तितमपकारे युष्माकं मया किमपि कथमपि तत्सर्वम्। क्षन्तव्यं युष्माभिर्वृद्धिं नेयं च राज्यमिदम् ॥४८॥ एवंताननुशास्य महाविभूत्या पुण्यदिवसे। जाते शुभमुहूर्त्ते राज्ये स्थापयति जयसेनम् ॥ ४९ ॥ सामन्तमन्त्रिमण्डलप्रमुखप्रधानेन परिजनेन समम्। प्रणम्य सप्रणयं कृताञ्जलिस्तमनुशास्ति च ॥ ५० ॥ यद्यपि हि प्रकृत्यैव सच्चरितालंकृतस्य तव वत्स। नास्ति शिक्षणीयं तथाप्यहं किमपि जल्पामि ॥ ५१ ॥ स्वामी मन्त्री राष्ट्रं युग्यं कोशो वलं सुधीश्चैव। अन्योन्योपकारेण पुत्र! सप्ताङ्गराज्यमिदम् ॥ ५२ ॥ अवलम्ब्य सत्त्वं बुद्ध्या यथोचितं च चिन्तित्वा। सप्ताङ्गस्याप्येतस्य लाभहेतौ यतेथास्त्वम् ॥ ५३ ॥ तत्रात्मानं प्रथमं स्थापयेत् विनये ततोऽमात्यांस्तु। ततो भृत्यान् पुत्रांश्च तदनुपश्चात् पुनः प्रजाः ॥ ५४ ॥

उत्तमकुलप्पसूई रूवं रमणीमणोहरणचोरं । सत्थपरिकम्मिया तह मई य भुयबलं वच्छ ॥ ५५ ॥ एसो य संपयं जो विवेयमायंडगुंडणपयंडो । जोवणतमो वियंभति मोहमहामेहपडलघणो ॥ ५६ ॥ जा य बुहसलहणिज्जा पयई आणा य पणइसिरवूढा । एयाणेक्कं पि हु सुदुज्जयं किं पुण समूहो ॥ ५७ ॥ गरुयविहलंघलत्तणकारणदारेण दारुणो भुवणे । लच्छीमओवि पुत्तय पुरिसं लहुएइ सयराहं ॥ ५८ ॥ किंच । सुइवायदिट्ठिहरणे नराण लच्छीए को विसंवायो । जं न कुणति गरलसहोयरा वि मरणं तमच्छरियं ॥ ५९ ॥ अन्नं च ॥ पुव्वकयकम्मपरिणतिवसेण विहवो कुलवरं रूवं । संपज्जइ रज्जंपि हु गुणहेऊ णउण विणयगुणो ॥ ६० ॥ ता उज्झिऊण दप्पं विणयं सिक्खेसु न मयं भयसु । विणयोणयाण पुत्तय जायन्ति गुणा महग्घविया ॥ ६१ ॥

---

उत्तमकुलप्रसूती रूपं रमणीमनोहरणचौरम् । शास्त्रपरिकर्म्मिता तथा मतिश्च भुजबलं वत्स ॥ ५५ ॥ एष च सांप्रतं यो विवेक-मार्तण्डोद्धूलनप्रचण्डः । यौवनतमो विजृम्भति मोहमहामेघपटलघनः ॥ ५६ ॥ या च बुधश्लाघनीया प्रकृतिराज्ञा च प्रणतिशिरोवोढा । एतासामेकैकमपि हु सुदुर्जयं कि पुनः समूहः ॥ ५७ ॥ गुरुको विफल..................कारणद्वारेण दारुणो भुवने । लक्ष्मीमदोऽपि पुत्र पुरुषं लघयति सपदि ॥ ५८ ॥ किञ्च ॥ श्रुतिवाग्दृष्टिहरणे नराणां लक्ष्म्याः को विसंवादः । यन्न करोति गरलसहोदरापि मारणं तदाश्चर्यम् ॥ ५९ ॥ अन्यच्च ॥ पूर्वकृतकर्मपरिणातिवशेन विभवः कुलं वरं रूपम् । संप्राप्यते राज्यमपि हि गुणहेतुर्न पुनर्विनयगुणः ॥६०॥ तस्मादुज्झिय दर्प्पं विनयं शिक्षय न मदं भज । विनयावनतानां पुत्र जायन्ते गुणा महार्घ्याः ॥ ६१ ॥

भुवणयलम्मि वियंभइ विउसाणणकोणपहयजसपडहो। धम्मो कामो मोक्खो कला य विज्जा य विणयाओ ॥ ६२ ॥ विणएण लब्भति सिरी लद्धा वि पलाइ दुव्विणीयस्स। नीसेसगुणाहाणं विणओ च्चिय जीवलोगम्मि ॥ ६३ ॥ किं बहुणा णत्थि जए तं जं नो जायए इमाहिंतो। तम्हा सिक्खसु विणयं पुत्तय कल्लाणकुलभवणं ॥ ६४ ॥ तहा सत्तट्ठिईए गोत्तट्ठिईए धम्मट्ठिईए अविरोहा। अत्थस्स अज्जणं जं वड्ढणमह रक्खणं च ॥ ६५ ॥ सम्मं च जं सुपत्ते विणियोगो रायवित्तमिय चउहा। एत्थंपि पयट्टेज्जासु परमपयत्तेणं पुत्त तुमं ॥६६॥ सामं भेयं च उवप्पयाणमह दंडमिय चउब्भेयं। निवनीइं पियपुत्तय आराहेज्जासु तुमं ॥ ६७ ॥ किंतु पढमाए असज्झे च्चिय कज्जे बीयाइयाओ नीईओ। वावारेज्ज जहाकमं विचारइत्ता जहाजोगं ॥ ६८ ॥

---

भुवनतले विजृम्भति विद्वदाननयष्टि प्रहतयशःपटहः । धर्मः कामो मोक्षः कलाश्च विद्याश्च विनयात् ॥ ६२ ॥ विनयेन लभ्यते श्रीर्लब्धापि पलायते दुर्विनीतस्य । निःशेषगुणाधानं विनय एव जीवलोके ॥ ६३ ॥ किंबहुना नास्ति जगति तद् यन्न जायत एभ्यः । तस्मात् शिक्षय विनयं पुत्र ! कल्याणकुलभवनम् ॥ ६४ ॥ तथा सत्त्वस्थित्या गोत्रस्थित्या धर्मस्थित्याऽविरोधात्। अर्थस्यार्जनं यद् वर्द्धनमथ रक्षणं यच्च ॥ ६५ ॥ सम्यक् च यत्सुपात्रे विनियोगो राजवित्तमिति चतुर्धा । इत्थमपि प्रवर्त्तस्व परमप्रयत्नेन पुत्र त्वम् ॥६६॥ सामं भेदं चोपप्रदानमथ दण्डमिति चतुर्भेदाम् । नृपनीतिं प्रियपुत्र आराध्येथास्त्वम् ॥ ६७ ॥ किन्तु प्रथमयाऽसाध्ये एव कार्ये द्वितीयादयो नीतयः । व्यापारेथा यथाक्रमं विचार्य्य यथायोगम् ॥ ६८ ॥

जं सामनए सन्ते सन्ते पुरिसाण भेयविन्नाणे । दाणे य संपडन्ते को दंडे आयरं कुणति ॥६९॥ अणुवत्तेज्जसु नीइं पाणप्पियपणइणिं व णिच्चंपि । अन्नायं पुण रुंभेज्ज सव्वहा दुट्ठसत्तुंव ॥ ७० ॥ वत्थन्नपाणभूसणसेज्जाजाणाइएसु अप्पमत्तो। पहेज्ज विसविगारं च भिंगारायाइपक्खीहिं ॥ ७१ ॥ पयडीए भिंगराओ सुगो तहा सारिया इमे विहगा । सन्निहियपन्नगविसा करुणं कुव्वन्ति उव्विग्गा ॥ ७२ ॥ झत्ति विरज्जन्ति विसं दट्ठूणं लोयणा चकोरस्स । नच्चइ फुडं च कुंचो मरइ पुण मत्तकोइलओ ॥ ७३ ॥ भोत्तुमहिलसियमन्नं थेवं हि परिक्खणत्थमग्गीए । पक्खिविऊणं सम्मं तल्लिंगाइं पि पेहेज्जा ॥ ७४ ॥ धूमाभा जाला से नीलत्तं अग्गिणो य फोडरवो । तल्लग्गमच्छियाईण निच्छियं होति मरणं च ॥ ७५ ॥

---

यत्सामनये सति सति च पुरुषाणां भेदविज्ञाने । दाने च संपतति को दण्डे आदरं करोति ॥ ६९ ॥ अनुवर्त्तस्व नीतिं प्राणप्रियप्रणयिनीमिव नित्यमपि । अन्यायं पुना रुन्धेत् सर्वथा दुष्टशत्रुमिव ॥ ७० ॥ वस्त्रान्नपानभूषणशय्यायानादिष्वप्रमत्तः । पश्येर्विषविकारं च भृंगराजादिपक्षिभिः ॥ ७१ ॥ प्रकृत्या भृंगराजः शुकस्तथा शारिका अमी विहगाः । सन्निहितपन्नगविषाः करुणं कुर्वन्त्युद्विग्नाः ॥ ७२ ॥ झटिति विरज्येते विषं दृष्ट्वा लोचने चकोरस्य । नृत्यति स्फुटं च कुञ्चो म्रियते पुनर्मत्तकोकिलकः ॥ ७३ ॥ भोक्तुमभिलषितमन्नं स्तोकं हि परीक्षणार्थमग्नौ । प्रक्षेपय्य सम्यक् तल्लिङ्गान्यपि पश्येत् ॥ ७४ ॥ धूमाभा ज्वाला तस्य नीलत्वमग्नेश्च स्फोटरवः । तल्लग्नमक्षिकादीनां निश्चितं भवति मरणं च ॥ ७५ ॥

न तहा सुस्सिन्नत्तं जलाविलत्तं तहा विवन्नत्तं । सिग्घं च सीयलत्तं जायति विसभावियन्नस्स ॥ ७६ ॥ नीरस्स कोइलाभा सविसस्स दहिस्स पुण भवे सामा । आयंवादुद्धस्स य मज्झम्मि होंति रेहाउ ॥ ७७ ॥ पमिलाणत्तं विसदूसियस्स सव्वस्स अल्लदव्वस्स । सुक्कस्स विवन्नत्तं विवरीयत्तं खरमिऊणं ॥ ७८ ॥ पाउरणत्थरणाणं झामप्पहमंडलाण बाहुल्लं । लोहमणिपमुहाणं तु होति मलपंककलुसत्तं ॥ ७९ ॥ एवं सामन्नेणं नाऊणं पुत्त सुत्तजुत्तीए । विसदूसियदव्वाइं दूरेणं परिहरेज्ज तुमं ॥ ८० ॥ अच्चन्तगूढमंतो परिभागविऊ य देसकालाणं । सारत्थाणमदाई दाईवि कहिं पि पत्तविऊ ॥ ८१ ॥ सुपरिक्खियकज्जकरो विसेसओ संधिविग्गहविऊ य । उचियन्नू य कयन्नू पियंवओ सव्वखेयंनू ॥ ८२ ॥

---

न तथा सुस्विन्नत्वं जलाविलत्वं तथा विवर्णत्वम् । शीघ्रं च शीतलत्वं जायते विषभावितान्नस्य ॥ ७६ ॥ नीरस्य कोकिलाभा सविषस्य दध्नः पुनर्भवेत् श्यामा । आचाम्लदुग्धस्य च मध्ये भवन्ति रेखाः ॥ ७७ ॥ प्रम्लानत्वं विषदूषितस्य सर्वस्यार्द्रद्रव्यस्य । शुष्कस्य विवर्णत्वं विपरीतत्वं खरमृदूनाम् ॥ ७८ ॥ प्रावरणास्तरणानां झामप्रभामण्डलानां बाहुल्यम् । लोहमणिप्रमुखानां तु भवति मलपंककलुषत्वम् ॥ ७९ ॥ एवं सामान्येन ज्ञात्वा पुत्र सूक्तयुक्त्या । विषदूषितद्रव्याणि दूरेण परिहरसि त्वम् ॥ ८० ॥ अत्यन्तगूढमन्त्रः परिभागविच्च देशकालयोः । सारार्थानामदायी दाय्यपि कुत्रापि पात्रवित् ॥ ८१ ॥ सुपरीक्षितकार्यकरो विशेषतः सन्धिविग्रहविच्च । उचितज्ञश्च कृतज्ञः प्रियंवदः सर्वक्षेत्रज्ञः ॥ ८२ ॥

जियनिद्दछुहपिपासो सव्वपरीसहसहो सुसाहुव्व । अदुराराहो गुणिवच्छलो य तं वच्छ होज्ज सया ॥ ८३ ॥ मा पेछेज्ज य मइरामिगयाजूयाणि पुत्त तत्तो । जं दीसंति सुणिज्जन्ति य इह परलोगुब्भवावाया ॥ ८४ ॥ कोउयमेत्तं मोत्तुं थीसुवि मा काहिसी अइपसंगं । वीसासं च बहुविहा ताहिंतो वि हु जओ दोसा ॥ ८५ ॥ तह कोहलोभभयदोहथंभचवलत्तवज्जिओ होज्जा । मच्छरपेसुन्नपरोवतावअलियत्तवज्जी य ॥ ८६ ॥ सव्वासमवन्नाणं णियणियठिइठावगो य होज्जाहि । दुट्ठाण णिग्गहं सिट्ठपालणं तह करेज्ज सया ॥ ८७ ॥ तहा जइ होहिसि तिक्खकरो उव्वियणिज्जो रवि व्व होहिसि ता । अच्चन्तमिउकरो पुण पराभवट्ठाणमिंदु व्व ॥८८॥ ता तिक्खमिउकरं तं पुत्त पयत्तेण दूरमुज्झित्ता । सव्वत्थदव्वखेत्ताइयाण वट्टेज्ज अणुरूवं ॥ ८९ ॥

---

जितनिद्राक्षुत्पिपासः सर्वपरिषहसहः सुसाधुरिव । अदुराराध्यो गुणिवत्सलश्च त्वं वत्स भव सदा ॥ ८३ ॥ मा पेक्षस्व च मदिरामृगयाद्यूतानि पुत्र ततः । यद् दृश्यन्ते श्रूयन्ते चेह परलोकोद्भवा अपायाः ॥ ८४ ॥ कौतुकमात्रं मुक्त्वा स्त्रीष्वपि मा कार्षीरतिप्रसङ्गम् । विश्वासं च वहुविधास्ताभ्योऽपि हि यतो दोषाः ॥ ८५ ॥ तथा क्रोधलोभभयद्रोहस्तम्भचपलत्ववर्जितो भव । मत्सरपैशुन्यपरोपतापालीकत्ववर्ज्ज़ी च ॥ ८६ ॥ सर्वाश्रमवर्णानां निजनिजस्थितिस्थापकश्च भविष्यसि । दुष्टानां निग्रहं श्रेष्ठपालनं तथा कुर्याः सदा ॥८७॥ तथा यदि भविष्यति तीक्ष्णकर उद्वेजनीयो रविरिव । भविष्यति तदा । अत्यन्तमृदुकरः पुनः पराभवस्थानमिन्दुरिव ॥ ८८ ॥ तस्मात्तीक्ष्णमृदुकरत्वं पुत्र? प्रयत्नेन दूरमुज्झित्वा । सर्वार्थद्रव्यक्षेत्रादिकान् वर्धेथा अनुरूपम् ॥ ८९ ॥

दीणाणमणाहाणं परेहिं परिपीडियाण भीयाणं । सज्जो करेज्ज जणगोव्व सव्वजत्तेण पडियारं ॥ ९० ॥ तह विविहवाहिणिहिणो अज्जं कल्लं व धुवविणासिस्स । मा देहस्सावि कए अहम्मकम्मे रमेज्जासि ॥ ९१ ॥ को नाम कुलपसूओ तुच्छसुहल्लेसमोहियमईओ । निस्सारसरीरकए वि पाणिणो पुत्त पीडेज्जा ॥ ९२ ॥ गुरुदेवातिहिपूयापडिवत्तिपरो य दव्वभावसुई । होज्जसु पियदढधम्मो धम्मियवच्छल्लकारी य ॥ ९३ ॥ सव्वाओ वि पवित्तीतो सव्वसत्ताण सुहकए चेव । नय तं धम्माभावे भवेज्ज ता पुत्त धम्मपरो ॥ ९४ ॥ तह वच्छ तुमं मह किं गुणस्स रयणीदिणाणि वोलिन्ति । इय सइ संनिहियमई नासि दुही उभयलोगेवि ॥ ९५ ॥ संवासं सील-गुणड्ढएहिं तह संकहं वियड्ढेहिं । पीइं अलुद्धबुद्धीहिं वच्छ निच्चं चिय करेज्जा ॥ ९६ ॥

---

दीनानामनाथानां परैः परिपीडितानां भीतानाम् । सद्यः कुरु जनक इव सर्वयत्नेन प्रतिकारम् ॥ ९० ॥ तथा विविधव्याधिनिधेरद्यक-ल्यं च ध्रुवं विनाशिनः। मा देहस्यापि कृतेऽधर्मकर्मणि रमेथाः ॥ ९१ ॥ को नाम कुलप्रसूतस्तुच्छसुखलेशमोहितमतिः । निस्सारशरीरकृतेऽपि प्राणिनः पुत्र पीडयेत् ॥ ९२ ॥ गुरुदेवातिथिपूजाप्रतिपत्तिपरश्च द्रव्यभावशुचिर्भव । प्रियदृढधर्मो धार्मिकवात्सल्यकारी च ॥ ९३ ॥ सर्वा अपि प्रवृत्तयः सर्वसत्त्वानां सुखकृते चैव । नच तद्धर्माभावे भव तस्मात्पुत्र धर्मपरः ॥९४॥ तथा वत्स ! तवाहं किं गुणान् रात्रिदि-नानि कथयन्ति । इति सति संनिहितमतिर्नासि दुःख्युभयलोकेऽपि ॥ ९५ ॥ संवासं शीलगुणाढ्यकैस्तथा संकथामपि विदग्धैः । प्रीतिमलु-ब्धबुद्धिभिर्वत्स नित्यमेव कुर्याः ॥ ९६ ॥

अप्पपसंसं च चएज्ज पुत्त सप्पुरिसनिंदियं अहमं। विसमुच्छा इव पुरिसं जा कुणति विवेयनिस्सारं ॥
॥ ९७ ॥ अप्पपसंसा हि नरस्स होइ चिंधं खु निगुणत्तस्स । जइ तस्स गुणा हुंता ता नूणं जणो वि सलहंतो
॥ ९८ ॥ सयणे व परजणे वा परपरिवाओ विवज्जणिज्जो त्ति। अप्पहियमहिलसन्तो परगुणदंसी सया होज्ज
॥ ९९ ॥ परगुणमच्छरभावो सगुणपसंसा य पत्थणाकरणं । अविणीयत्तं पुत्तय इमाइं गरुयं पि लहुइंति
॥५००॥ परनिन्दापरिहारो सपसंसालज्जणं अणत्थित्तं। सुविणीयत्तं च पुणो इमाइं लहुयं पि गुरुइंति ॥ १ ॥
परगुणग्गहणं छन्दाणुवत्तणं हियमकक्कसं वयणं । सुपसन्नसरूवत्तं अमंतमूलं वसीकरणं ॥ २ ॥ अन्नं च ॥
पुत्त तुज्झ पढमं चिय जह जरा किर मणम्मि। अल्लियइ ततो देहे तह कायव्वं तया वच्छ ॥ ३ ॥

---

आत्मप्रशंसां च त्यज पुत्र सत्पुरुषनिन्दितामधमाम् । विषमूर्च्छेव पुरुषं या करोति विवेकनिस्सारम् ॥ ९७ ॥ आत्मप्रशंसा हि नरस्य भवति चिन्हं खलु निर्गुणत्वस्य । यदि तस्य गुणा भवन्ति तदा नूनं जनोऽपि श्लाघ्येत ॥ ९८ ॥ स्वजने वा परजने वा परपरिवादो विवर्जनीय इति । आत्महितमभिलपन् परगुणदर्शी सदा भूयाः ॥ ९९ ॥ परगुणमत्सरभावः स्वगुणप्रशंसा च प्रार्थनाकरणम् । अविनीतत्वं पुत्रक इमानि गुरुमपि लघयन्ति ॥ ५०० ॥ परनिन्दापरिहारः स्वप्रशंसालज्जनमनर्थित्वम् । सुविनीतत्वं च पुन इमानि लघुमपि गरयन्ति ॥ १ ॥ परगुणग्रहणं छन्दानुवर्त्तनं हितमकर्कशं वचनम् । सुप्रसन्नस्वरूपत्वममन्त्रमूलं वशीकरणम् ॥ २ ॥ अन्यच्च ॥ पुत्र त्वां प्रथममेव यथा किल जरा मनसि । उपसर्पति ततो देहे तथा कर्त्तव्यं त्वया वत्स ? ॥ ३ ॥

निव्वाहियमइगहणं विणाववाएण जोव्वणं जेण । दोसनिहाणे जम्मे किमिव न पत्तं फलं तेण ॥ ४ ॥
एस सुसीलसहावो सत्थत्थविऊ य एस एस खमी । एस गुणी इति कस्सवि धन्नस्साघोसणा भमति ॥ ५ ॥
तह वच्छ तह सयम्मी निवेसियव्वो गुणाण पब्भारो । दोसाण दुक्किराणवि जह अवगासो च्चिय न होंति ॥ ६ ॥
हियमियभोयणभोई य तह हवेज्जासि जह न वेज्जेहिं । वाहिज्जसि किंतु धरेसि नीतिमित्तेण ते पासे ॥ ७ ॥
किं वहुणा—पयडियपभूयपव्वो पासनिवेसियसुपत्तसंताणो । पयइसरलो सुवंसो व्व पुत्त ! वट्टसु तुमं ॥ ८ ॥
दूरे सोमो नयणाणंदी कलालओ पइदिणं पवड्ढंतो । पुत्त पयाणं चन्दो व्व जलहिणो होज्ज वुड्ढिकए ॥ ९ ॥
पयईए चेव गरुओ पयईए चेव दढपइट्ठाणो । पयईए थिरसहावो पयईए सुवण्णरयणपहो ॥ १० ॥ ॥

---

निर्वाहितमतिगहनं विनापवादेन यौवनं येन । दोषनिधाने जन्मनि किमिव न प्राप्तं फलं तेन ॥ ४ ॥ एष सुशीलस्वभावः शास्त्रार्थविदश्चैष एष क्षमी । एष गुणीति कस्यापि धन्यस्याऽऽघोषणा भ्रमति ॥ ५ ॥ तथा वत्स तथा स्वस्मिन्निवेशितव्यः गुणानां प्राग्भारः । दोषाणां दुष्कराणामपि यथावकाश एव न भवति ॥ ६ ॥ हितमितभोजनभोगी च तथा भविष्यसि यथा न वैद्यैः । वाह्यसे किन्तु धरसि नीतिमात्रेण तान् पार्श्वे ॥ ७ ॥ किं वहुना ॥ प्रकटितप्रभूतपर्वः पार्श्वनिवेशितसुपत्र (सुपात्र) संतानः । प्रकृतिसरलः सुवंश इव पुत्र? वर्त्तस्व त्वम् ॥ ८ ॥ दूरात् चैव सौम्यो नयनानन्दी कलालयः प्रतिदिनं प्रवर्धमानः । पुत्र? प्रजानां चन्द्र इव जलनिधेर्भव वृद्धिकृते ॥९॥ प्रकृत्या चैव गुरुः प्रकृत्या चैदृढप्रतिष्ठानः । प्रकृत्या स्थिरस्वभावः प्रकृत्या सुवर्णरत्नप्रभः ॥ १० ॥

सुविसुद्धजाइवंसो विबुहाणुगतो य लोयमज्झंमि। मेरुव्व तुमं पुत्तय अचलपहुत्तं चिरं धरसु ॥११॥ गम्भीरिमोदयालंकितो य गुणमणिणिही पडिच्छंतो। बहुनइनिवहं जलहिव मा हु लंघेज्ज मज्जायं ॥ १२ ॥ इय महसेणनरिंदो विविहजुत्तीहिं सिक्खविय पुत्तं। सामंतमंतिपमुहं सप्पणयं भणति पुरलोयं ॥ १३ ॥ एत्तो तुब्भं एसो सामी चक्खू य मेडिभूतो य। ता एयस्साणाए ममं व वट्टेज्जह सयावि ॥ १४॥ हासेणव कोहेण व जं च दुमिया तुब्भे। रज्जोवगएण मए तंपि य खमियव्वमेत्ताहे ॥ १५ ॥ कणगवई वि य भणिया देवि! तुमं चयसु संपइ पमायं। अणुसरसु सव्वविरइं विरमसु संसारवासातो ॥ १६ ॥ किमिह पडिबन्धठाणं सयणे य धणे य जोव्वणे य जहिं। अणवरयकयविणासो वसति समीवे च्चिय कयन्तो ॥ १७ ॥

---

सुविशुद्धजातिवंशो विबुधानुगतश्च लोकमध्ये। मेरुरिव त्वं पुत्रक! अचलप्रभुत्वं चिरं धरस्व ॥ ११ ॥ गाम्भीर्योदयालंकृतश्च गुणमणिनिधिः प्रतिच्छन्दः। बहुनदीनिवहो जलधिरिव मा हि लंघेर्मर्य्यादाम् ॥ १२ ॥ इति महासेननरेन्द्रो विविधयुक्तिभिः शिक्षयित्वा पुत्रम्। सामन्तमन्त्रिप्रमुखं सप्रणयं भणति पुरलोकम् ॥ १३ ॥ इतो युष्माकमेष स्वामी चक्षूश्च मेढीभूतश्च। तस्मादेतस्याज्ञायां ममेव वर्त्तव्वम् सदापि ॥ १४ ॥ हासेन वा क्रोधेन वा यच्च दुर्मिता यूयम्। राज्योपगतेन मया तदपि क्षन्तव्यमिदानीम् ॥ १५ ॥ कनकवत्यपि च भणिता देवि! त्वं त्यज संप्रति प्रसादम्। अनुसर सर्वविरतिं विरम संसारवासात् ॥ १६ ॥ किमिह प्रतिबन्धस्थानं स्वजने च धने च यौवने च यत्र। अनवरतकृतविनाशो वसति समीप एव कृतान्तः ॥ १७ ॥

अह पवज्जब्भुज्जयनिववाणीवज्जताडिया देवी । बाहप्पवाहवाउलविलोयणा जंपए एवं ॥ १८ ॥ थेरत्तसमुचियमिमं को संपइ पत्थुयत्थपत्थावो । राजा,—तं होज्ज न वा को मुणति तडिलयाचंचले जीए ॥ १९ ॥ देवी–दुस्सहपरीसहे कहं सहिहि तुह सुंदरा सरीरसिरी । राजा–किं सुंदरत्तमेयाए अट्ठिचम्मावणद्धाए ॥ २० ॥ देवी–कइयवि दिणानि निवसह सगिहे च्चिय कीस ऊसुगा होह । राजा–बहुविग्घे सेयत्थे खणंपि कह णिवसिउं जुत्तं ॥ २१ ॥ देवी–पेच्छह तहावि नियपुत्तरज्जलच्छीए पवरविच्छड्डं । राजा–संसारंमि भवंतेहिं णंतसो किं ठियमदिट्ठं ॥ २२ ॥ देवी–किं दुक्करेण इमिणा संतीए समुद्धुराए रिद्धीए । राजा–सरयब्भभंगुराए इमीए को तुज्झ वीसंभो ॥ २३ ॥

---

अथ प्रव्रज्याभ्युद्यतनृपवाणिवज्रताडिता देवी । बाष्पप्रवाहव्याकुलविलोचना जल्पत्येवम् ॥ १८ ॥ स्थविरत्वसमुचितमिदं कः संप्रति प्रस्तुतार्थप्रस्तावः । ( राजा ) तद् भवेन्नवा को जानाति तडिल्लताचञ्चले जीवे ॥ १९ ॥ ( देवी ) दुःसहपरीषहान् कथं सहिष्यसे त्वं सुन्दरशरीरश्रीः ( राजा ) किं सुन्दरत्वमेतस्यामस्थिचर्म्मावनद्धायाम् ॥ २० ॥ ( देवी ) कति चापि दिनानि निवसत स्वगृहे एव कस्मादुत्सुका भवत । ( राजा ) बहुविघ्ने श्रेयस्यर्थे क्षणमपि कथं निवसितुं युक्तम् ॥ २१ ॥ ( देवी ) पश्यत तथापि निजपुत्रराज्यलक्ष्म्याः प्रवरविस्तारम् । ( राजा ) संसारे भ्रमद्भिरनन्तशः किं स्थितमदृष्टम् ॥ २२ ॥ ( देवी ) किं दुष्करेणानेन सत्यां समुद्धुरायामृद्ध्याम् । ( राजा ) शरदभ्रभंगुराया अस्याः कस्ते विश्रम्भः ॥ २३ ॥

देवी–पंचप्पयारपवरे अपत्तकालेवि चयसि किं विसए । राजा–मुणियसरूवो को ते सरेज्ज पज्जत्तदुक्खकरे ॥ २४ ॥ देवी–तइ पव्वज्जोवगए सुचिरं परिदेविही सयणवग्गो । राजा–नियनियकज्जाइं इमो परिदेवइ धम्मणिरवेक्खो ॥ २५ ॥ इय पव्वज्जापडिकूलजंपिरं पेच्छिउं निवो देविं । जंपइ महाणुभावे! एत्थवि किं तुह रई जाया ॥ २६ ॥ किं पम्हुट्ठं–जं मज्झ वयणओ इय भवातो तइयभवे । गहिया तुमए दिक्खा पम्मुक्का सेससंगाए ॥ २७ ॥ सोहम्मदेवलोए देवित्तेणं च मज्झ उववन्ना । इण्हिं पुणोवि भज्जा परूढदढपेमपडिबद्धा ॥ २८ ॥ इय जंपिरे नरिंदे देवी अणुसरिय पुव्वभववित्तं । आवद्धकरयलंजलिमुल्लविउमिमं समाढत्ता ॥ २९ ॥ नरनाह ! जुण्णगोणिव्व विसयपंकंमि नूणं खुत्ताहं । उवएसरज्जुणायड्ढिऊण तुमए समुद्धरिया ॥ ३० ॥

---

(देवी) पञ्चप्रकारप्रवरानप्राप्तकालानपि त्यजसि किं विषयान् । ( राजा ) ज्ञातस्वरूपः कस्तान् सरेत् पर्य्यन्तदुःखकरान् ॥२४॥ ( देवी ) त्वयि प्रव्रज्यामुपगते चिरं परिदेविष्यति स्वजनवर्गः । ( राजा ) निजनिजकार्याण्ययं परिदीव्यति धर्मनिरपेक्षः ॥ २५ ॥ इति प्रव्रज्याप्रतिकूलजल्पिनीं दृष्ट्वा नृपो देवीम् । जल्पति महानुभावेऽत्रापि किं ते रतिर्जाता ॥ २६ ॥ किं विस्मृतं यन्मद्वचनादितो भवात् तृतीयभवे । गृहीता त्वया दीक्षा प्रमुक्ताशेषसङ्गया ॥ २७ ॥ सौधर्मदेवलोके देवित्वेन च ममोत्पन्ना । इदानीं पुनरपि भार्या प्ररूढदृढप्रेमप्रतिबद्धा ॥ ॥ २८ ॥ इति जल्पिनि नरेन्द्रे देव्यनुस्मृत्य पूर्वभववृत्तम् । आवद्धकरतलाञ्जलिरुल्लपितुमिदं समारब्धा ॥ २९ ॥ नरनाथ ! जीर्णगौरिव विषयपङ्के नूनं क्षिप्ताहम् । उपदेशरज्ज्वा वद्धा त्वया समुद्धृता ॥ ३० ॥

इण्हिं चिय विप्फुरियं विवेयरयणेण इण्हिं निन्नट्ठा । घरवाससवासणा चिय इण्हिं मोहो मह पलीणो ॥३१॥ ता जह पुव्वं तह संपयंपि पडिवज्जिमो समणदिक्खं । सुपिणोवमेण एत्तो, पज्जत्तं गेहवासेण ॥ ३२ ॥ इय तीए जंपियंमी, राया सविसेसवड्ढिउच्छाहो । कयमज्जणोवयारो. परिहियफलिहुज्जलदुगूलो ॥ ३३ ॥ मोयाविय चारगरुद्धबद्धअवराहकारिनरवग्गो । सव्वत्थ वि णयरीए, उग्घोसाविय अ मा घाओ ॥ ३४ ॥ काराविय जिणमंदिरपूयासक्कारपेच्छणाइमहो । सुकाइपरिच्चायो, धम्मियजणजणियपरितोसो ॥ ३५ ॥ सम्माणियपणइजणो, जं मग्गिरतक्कयाणादिण्णधणो । उचियपडिवत्तिपुव्वयसंभासियपयइवग्गो य ॥ ३६ ॥ पासायसिहरपरिसंठिएहिं हरिसुल्लसंतपुलएहिं । पेहिज्जंतो णयरिजणेहिं दढमणिमिसच्छीहिं ॥ ३७ ॥

---

इदानीमेव विस्फुरितं विवेकरत्नेनेदानीं निर्नष्टा । गृहवासवासनापि चेदानीं मोहो मम प्रलीनः ॥ ३१ ॥ तस्माद्यथा पूर्वं तथा सांप्रतमपि प्रतिपत्स्यावः श्रमणदीक्षाम् । स्वप्नोपमेनानेन पर्य्याप्तं गेहवासेन ॥ ३२ ॥ इति तया जल्पिते राजा सविशेषवर्द्धितोत्साहः । कृतमज्जनोपचारः परिधारितस्फटिकोज्ज्वलदुकूलः ॥ ३३ ॥ मोचयित्वा चारकरुद्धबद्धापराधकारिनरवर्ग्गम् । सर्वत्रापि नगर्यामुद्घोषयित्वा च मा घातः ॥ ३४ ॥ कारयित्वा जिनमन्दिरपूजासत्कारप्रेक्षणादिमहः । शुल्कादिपरित्यागो धार्म्मिकजनजनितपरितोषः ॥ ३५ ॥ सन्मानितप्रणयिजनो यत्प्रार्थितं तत्कृपया दत्तधनः । उचितप्रतिपत्तिपूर्वकसंभाषितप्रकृतिवर्ग्गश्च ॥ ३६ ॥ प्रासादशिखरसंस्थितैर्हर्षोल्लसत्पुलकैः । दृश्यमानो नगरीजनैर्दृढमनिमिषाक्षिभिः ॥ ३७ ॥

सब्भूयाहिं महत्थाहिं हिययपरितोसकरणदक्खाहिं । वेयालियणिवहेणं, गिराहिं पवराहि थुव्वंतो ॥ ३८ ॥ देवीए समं राया सहस्सनरवाहिणीए सिवियाए । आरुहिऊण पयट्टो, गंतुं जिणपायमूलंमि ॥ ३९ ॥ तयणुगहिरदुंदुहीभेरिभंकारसम्मिस्सआवूरियासंखसंखुब्भवारावरुद्धंबरं जुगविगमसमीरपक्खुद्धखीरोयनिग्घोससंकाकरं किङ्करेहिं हयं तूरचाउव्विहं । पहरिसवसनीसरंतंसुजलाविलच्छेण संखोहपल्हत्थकंचीकलावेण सव्वायरं बहुविहकरणं चियं नच्चियं वाररामाजणेणं जणाणंदसंदोहदाणक्खमेणं परं ॥ ४० ॥ इय परमविभूईए, राया संपप्प ओसरणभूमिं । ओयरिओ सिवियाओ सामिं तिपयाहिणेऊण ॥४१॥ जय भवभयवारण ! सिवसुहकारण ! दुज्जयणिज्जियविसमसर ! सिरिवीरजिणेसर ! पणयसुरेसर ! थुइपरलोयहंदुरियहर ! ॥ ४२ ॥

---

सद्भूताभिर्महार्थाभिर्हृदयपरितोषकरणदक्षाभिः । वैतालिकनिवहेन गिराभिः प्रवराभिः स्तूयमानः ॥ ३८ ॥ देव्या समं राजा सहस्रनरवाहिन्यां शिविकायाम् । आरुह्य प्रवृत्तो गन्तुं जिनपादमूले ॥ ३९ ॥ तदनु गहनदुन्दुभीभेरीझङ्कारसंमिश्रापूरितासंख्यशंखोद्भवाराव रुद्धाम्बरं । युगविगमसमीरप्रक्षुब्धक्षीरोदनिर्घोषशंकाकरं, किंकरैर्हतं तूर्यचातुर्विधं । प्रहर्षवशनिःसरदश्रुजलाविलेक्षणेन संक्षोभप्रस्खलितकांचीकलापेन सर्वादरं बहुविधकरणमेव नर्तितं वाररामाजनेन जनानन्दसंदोहदानक्षमेण परम् ॥४०॥ इति परमविभूत्या राजा संप्राप्य समवसरणभूमीम् । अवतीर्णः शिविकायाः स्वामिनं त्रिप्रदक्षिणीकृत्य ॥४१॥ जय भवभयवारण शिवसुखकारण दुर्जयनिर्जितविसमशर । श्रीवीरजिनेश्वर प्रणतसुरेश्वर स्तुतिपरलोकाघदुरितहर ॥ ४२ ॥

इति थुणिऊणं उज्झइ, रयणांलकारकुसुमसंभारं । पुव्वुत्तरदिसिभाए, तओ जिणं विन्नवइ एवं ॥ ४३ ॥ जयगुरु भवजलहिंतो, पव्वज्जाजाणवत्तदाणेणं । करुणायर! उत्तारेसु संपयं जणमणाहमिमं ॥४४॥ एवं भणिए भुवणेक्कभाणुणा तेसिं निययहत्थेण। दिन्ना दिक्खा अस्संखदुक्खनिम्मोक्खणसमत्था ॥ ४५ ॥ एवमणुसासिया णियदिक्खेयमहो महंतपुन्नेहिं । लद्धा तुम्हेहिं जओ, तम्हा एत्तो पयत्तेण ॥ ४६ ॥ पाणिवहो अस्सचं, अदत्तमेहुणपरिग्गहारंभो । जोगकरणत्तिगेणं, जा जीवं चिय विमोत्तव्वो ॥ ४७ ॥ जइयव्वं जहसत्तीए कम्मनिम्महणमूलहेउंमि । निच्चं पमायविरहो, बारसविहतवविसेसंमि ॥ ४८ ॥ घणधन्नाइयदव्वे, खेत्ते पुरखेडकब्बडप्पमुहे । काले सरयाईए ओदयम्मि भावे य ॥ ४९ ॥

---

इति स्तुत्वा त्यजति रत्नालङ्कारकुसुमसंभारम् । पूर्वोत्तरदिग्भागे ततो जिनं प्रज्ञपयत्येवम् ॥ ४३ ॥ जगद्गुरो भवजलधेः प्रव्रज्यायानपात्रदानेन । करुणाकर उत्तारय सांप्रतं जनमनाथमिमम् ॥ ४४ ॥ एवं भणिते भुवनैकभानुना ताभ्यां निजहस्तेन । दत्ता दीक्षाऽसंख्यदुःखनिर्मोक्षणसमर्था ॥ ४५ ॥ एवमनुशासितौ निजदीक्षेयमहो महत्पुण्यैः । लब्धा युवाभ्यां यतस्तस्मादितः प्रयत्नेन ॥ ४६ ॥ प्राणिवधोऽसत्यमदत्तमैथुनपरिग्रहारम्भः । योगकरणत्रिकेण यावज्जीवमेव विमोक्तव्यः ॥ ४७ ॥ यतितव्यं यथाशक्त्या कर्मनिर्मथनमूलहेतौ । नित्यं प्रमादविरहो द्वादशविधतपोविशेषे ॥ ४८ ॥ धनधान्यादिकद्रव्ये क्षेत्रे पुरखेटकर्वटप्रमुखे । काले शरदादिके ओदयिकादौ भावे च ॥ ४९ ॥

थेवंपि नेव रागो, न वा पओसो मणंमि धरियव्वो । जम्हा मूलं एए, पसरंतमहाभवदुमस्स ॥ ५० ॥ इय सुचिरं सिक्खविउं कणगवई चन्दणाए उवणीया । पहुणा महसेणो पुण, समप्पिओ थेरसाहूण ॥ ५१ ॥ तो विहरइ स महप्पा, गामागरनगरमंडियं वसुहं । थेराण समीवंमि, सुत्तं अत्थं च गिण्हंतो ॥ ५२ ॥ अह अन्नया कयाई, केवलिपज्जायपालणं काउं । पावापुरीए नाहो, सिवमयलमणुत्तरं पत्तो ॥ ५३ ॥ तो तेण चिन्तियमिमं, अहो कयंतस्स किंपि नासज्झं । जं तारिसावि पहुणो, विणासधम्मत्तणमुवेंति ॥ ५४ ॥ जइ ते वि नमंतसुरिंदविंदमणिमउडलीढपयपीढा । चलणग्गचालियाचलडोल्लावियसधरधरणियला ॥ ५५ ॥ धरणियलछत्तसुरसेलदण्डकरणप्पहाणसामत्था । कंकेल्लिपमुहवरपाडिहेरसिरिपायडिस्सरिया ॥ ५६ ॥

---

स्तोकमपि नैव रागो न वा प्रद्वेषो मनसि धर्त्तव्यः । यस्मान्मूलमेते प्रसरन्महाभवद्रुमस्य ॥ ५० ॥ इति सुचिरं शिक्षयित्वा कनकवती चन्दनाया उपनीता । प्रभुना महासेनः पुनः समर्पितः स्थविरसाधुभ्यः ॥ ५१ ॥ ततो विहरति स महात्मा ग्रामाकरनगरमण्डितां वसुधाम् । स्थविराणां समीपे सूत्रमर्थं च गृह्णन् ॥ ५२ ॥ अथान्यदा कदाचित् केवलिपर्य्यायपालनं कृत्वा । पापापुर्या नाथः शिवमचलमनुत्तरं प्राप्तः ॥ ५३ ॥ ततस्तेन चिन्तितमिदमहो कृतान्तस्य किमपि नासाध्यम् । यत्तादृशा अपि प्रभवो विनाशधर्मत्वमुपयन्ति ॥५४॥ यदि तेऽपि नमत्सुरेन्द्रवृन्दमणिमुकुटालीढपदपीठाः । चरणाग्रचालिताचलडोलायितसधरधरणीतलाः ॥ ५५ ॥ धरणितलच्छत्रसुरशैलदण्डकरणप्रधानसामर्थ्याः । कंकेलिप्रमुखप्रातिहार्यश्रीप्रकटैश्वर्याः ॥ ५६ ॥

अंगीकिज्जंति आणेचयाए अच्चंतदुन्निवाराए । ता निस्सारसरीरंमि मारिसे होज्ज का गणणा ॥ ५७ ॥ अहवा ते जयगुरुणो असोयणिज्जा जएक्कमहणिज्जा । भेत्तूण कम्मगंठिं जे पत्ता सासयं ठाणं ॥ ५८ ॥ अहमेव सोयणिज्जो जो अज्जवि निविडकम्मनिगडेहिं । अच्चंतनिगडिओ चारगेव्व चिट्ठामि संसारे ॥ ५९ ॥ को वा विसेसलाभो इओ जराजज्जरस्स मे होही । जे न काउं तीरंति निच्चं तवचरणवावारा ॥ ६० ॥ तम्हा जुत्ता इन्हिं, सविसेसा राहणा मह विहेउं । सा य कह निच्छियत्था, सुवित्थरत्था य नायव्वा ॥ ६१ ॥ किं वा एएण विचिन्तिएण वच्चामि गणहरिंदस्स । उप्पन्नकेवलस्स, गोयमपहुणो समीवंमि ॥ ६२ ॥ पुच्छामि तं च आराहणाए भेयप्पभेयसहियाए । गिहिसाहुगोयराए, विहाणमेगग्गचित्तो हं ॥ ६३ ॥

---

अङ्गीक्रियन्तेऽनित्यतयात्यन्तदुर्निवारया । तदा निस्सारशरीरे मादृशानां भवति का गणना ॥ ५७ ॥ अथवा ते जगद्गुरवोऽशोचनीया जगदेकमहनीयाः । भित्त्वा कर्मग्रन्थिं ये प्राप्ताः शाश्वतं स्थानम् ॥ ५८ ॥ अहमेव शोचनीयो योऽद्यापि निबिडकर्मनिगडैः । अत्यन्तनिगडितश्चारक इव तिष्ठामि ससारे ॥ ५९ ॥ को वा विशेषलाभ इत जराजर्जरस्य मे भवति । येन न कर्त्तुं शक्यन्ते नित्यं तपश्चरणव्यापाराः ॥ ६० ॥ तस्माद्युक्तेदानीं सविशेषाराधना मम विधातुम् । सा च कथं निश्चितार्थो सुविस्तरार्थो च ज्ञातव्या ॥ ६१ ॥ किं वा एतेन विचिन्तितेन व्रजामि गणधरेन्द्रस्य । उत्पन्नकेवलस्य गौतमप्रभोः समीपे ॥ ६२ ॥ पृच्छामि तं चाराधनाया भेदप्रभेदसहितायाः । गृहिसाधुगोचराया विधानमेकाग्रचित्तोऽहम् ॥ ६३ ॥

तो मुणिऊण सवित्थरमसेसमवि तव्विहाणमुवउत्तो । सयमायरामि पकहेमि सव्वसत्ताण य परेसिं ॥ ६४ ॥ पढमं सम्मं नाणं, पच्छा करणं परोवएसो य । अमुणियजहट्ठियत्था, परमप्पाणं च नासिंति ॥६५॥ इय चिन्तिऊण वच्चति, स महप्पा गोयमस्स पासंमि । कलिविजयबद्धलक्खो, पच्चक्खो धम्मराउव्व ॥ ६६ ॥ तवसुसियतणुत्तणओ, सणियं कयभूमिचरणविन्नासो । जुगविगमसुसियसुरसरिपवहो निलचलतरंगोव्व ॥ ६७ ॥ थविरत्तवसपकंपिरकरचरणसिरोदराइसव्वंगो । अणवरयं पावरयं, सरीरलग्गं व विधुणंतो ॥ ६८ ॥ जुगमेत्तनिहियनयणो, गन्तूणं गोयमं गणहरिन्दं । तिपयाहिणा पुरस्सरमभिवंदति विणयपणयंगोह ॥ ६९ ॥ हरिसवसवियसियच्छो, भालयलमिलंतमउलकरकमलो । सब्भूयाहि गिराहिं, थुइं च काउं समाढत्तो ॥ ७० ॥

---

ततो ज्ञात्वा सविस्तरमशेषमपि तद्विधानमुपयुक्तः । स्वयमाचरामि प्रकथयामि सर्वसत्त्वानां परेषाम् ॥ ६४ ॥ प्रथमं सम्यग् ज्ञानं पश्चात्करणं परोपदेशश्च । अज्ञातयथास्थितार्थाः परमात्मानं च नाशयन्ति ॥ ६५ ॥ इति चिन्तयित्वा व्रजति स महात्मा गौतमस्य पार्श्वे । कलिविजयबद्धलक्षः प्रत्यक्षधर्मराज इव ॥ ६६ ॥ तपःशुष्कतनुत्वात् शनकैः कृतभूमीचरणविन्यासः । युगविगमशुष्कसुरसरित्प्रवाहोऽनिलचलतरंग इव ॥ ६७ ॥ स्थविरत्ववशप्रकम्पिकरचरणशिरउदरादिसर्वाङ्गः । अनवरतं पापरजः शरीरलग्नमिव विधुन्वानः ॥ ६८ ॥ युगमात्रनिहितनयनो गत्वा गौतमं गणधरेन्द्रम् । त्रिप्रदक्षिणापुरस्सरमभिवन्दते विनयप्रणताङ्गोऽथ ॥ ६९ ॥ हर्षवशविकसिताक्षो भालतलमिलन्मुकुलकरकमलः । सद्भूताभिर्गिराभिः स्तुतिं च कर्तुं समारब्धः ॥ ७० ॥

जय तेलोक्कदिवायर!, जयगुरु! जिणवीरपढमवरसिस्स!। भीमभवजलणसंतत्तगत्तसत्ताण जलवरिस? ॥ ७१ ॥ जय हिमवन्तमहाचल!, महंतरंगंतनयतरंगाए। जणगत्तणेण निम्मलदुवालसंगीसुरसरीए ॥ ७२ ॥ जय अक्खीणमहाणसा, तावसजणजणियपरमपरितोस!। अच्चत्तपसिद्धपभूयलद्धिसुसमिद्धिसंपन्न! ॥ ७३ ॥ जय धम्मधुराधरणेक्कवीर? जय विजियसव्वजेयव्व!। जय सच्चायर सुरजक्खरक्खपणिवइयपयकमल! ॥७४॥ जय जगचूडामणिणा, जिणेण तित्थत्तणेण वागरिय!। निम्मलछत्तीसगुणालिनिलय! भयवं! कुण पसायं ॥ ७५ ॥ भेयप्पभेयदिट्ठन्तजुत्तिजुत्तं सवित्थरं नाह!। गिहिसाहुगोयरं मह, कहेहि आराहणविहाणं ॥ ७६ ॥ इय कहिऊणं विरए, फुरंतमणिकंतदन्तदित्तीए। धवलिंतो व्व नहयलं, गोयमसामी भणाति एवं ॥ ७७ ॥

---

जय त्रैलोक्यदिवाकर जयद्गुरुजिनवीरप्रथमवरशिष्य । भीमभवज्वलनसंतप्तगात्रसत्त्वानां जलवर्ष ॥ ७१ ॥ जय हिमवन्महाचल महद्रिङ्गन्नयतरंगायाः। जनकत्वेन निर्मलद्वादशाङ्गीसुरसरितः ॥ ७२ ॥ जयाक्षीणमहानस तापसजनजनितपरितोष । अत्यन्तप्रसिद्धप्रभूतलब्धिसुसमृद्धिसंपन्न ॥ ७३ ॥ जय धर्मधुराधरणैकवीर जय विजितसर्वजेतव्य । जय सत्याकर सुरयक्षरक्षःप्रणिपतितपदकमल ॥ ७४ ॥ जय जगच्चूडामणिना जिनेन तीर्थत्वेन व्याकृत । निर्मलषट्त्रिंशद्गुणालिनिलय भगवन् कुरु प्रसादम् ॥ ७५ ॥ भेदप्रभेददृष्टान्तयुक्तियुक्तं सविस्तरं नाथ! । गृहिसाधुगोचरं मम कथयाराधनाविधानम् ॥ ७६ ॥ इति कथयित्वा विरते स्फुरन्मणिकान्तदन्तदीप्त्या । धवलयन्निव नभस्तलं गौतमस्वामी भणत्येवम् ॥ ७७ ॥

भो? भो देवाणुप्पिय?, पहाणगुणरयणणिरुवमनिहाण? । सुविसुद्धबुद्धिकुलभवण?, सुट्ठुपुट्ठं तए एयं ॥७८॥ न हु कल्लाणपरंपरापरंमुहाणं कयाइ पुरिसाण । जायइ सुदिट्ठपरमत्थपेहणुप्पेहणा बुद्धी ॥ ७९ ॥ ता निरुवमधम्माधारधरियदुद्धरपगिट्ठतवभार! । महसेण महामुणि सिस्समाणमेयं निसामेसु ॥ ५८० ॥ इय एसा जह रन्ना, महसेणेणं पवन्नदिक्खेणं । जइगिहिविसया पुट्ठत्ति जं पुरा भणियवुत्तं तं ॥ ८१ ॥ अहुणा सिट्ठा जह गोयमेण महसेणमुणिवरिट्ठस्स । आराहणा तहाहं, जहासुयं तं निदंसेमि ॥ ८२ ॥ गाथा ॥ आराहणेह सिवपुरपरमपहोपहयरागदोसेहिं । अणुवकयपराणुग्गहपरेहिं भणिया जिणिंदेहिं ॥ ८३ ॥ सा य महाजलजलनिहिनिहित्तरयणं व कहवि तुडिजोगा । ववहारनयमएणवि, कहिं पि जइ लब्भति जिएहिं ॥ ८४ ॥

---

भो भो देवानुप्रिय? प्रधानगुणरत्ननिरुपमनिधान ?। सुविशुद्धबुद्धिकुलभवन सुष्ठु पृष्टं त्वयैतत् ॥ ७८ ॥ न हि कल्याणपरंपरापराङ्मुखानां कदाचित्पुरुषाणाम् । जायते सुदृष्टपरमार्थप्रेक्षणोत्प्रेक्षणा बुद्धिः ॥ ७९ ॥ तस्मान्निरुपमधर्माधारधारितदुर्धरप्रकृष्टतपोभार । महासेन महामुने शिष्यमानमेतन्निशामय ॥ ५८० ॥ इत्येषा यथा राज्ञा महासेनेन प्रपन्नदीक्षेण । यतिगृहिविषया पृष्टेति यत्पुरा भणितवृत्तं तत् ॥ ८१ ॥ अधुना शिष्टा यथा गौतमेन महासेनमुनिवरिष्ठस्य । आराधना तथाहं यथाश्रुतं तां निर्दिशामि ॥ ८२ ॥ आराधनेह शिवपुरपरमपथोपहतरागद्वेषैः । अनुपकृतपरानुग्रहपरैर्भणिता जिनेन्द्रैः॥ ८३ ॥ सा च महाजलजलनिधिनिहितरत्नमिव कथमपि त्रुटियोगात् । व्यवहारनयमतेनापि क्वापि यदि लभ्यते जीवैः ॥ ८४ ॥

ता तीए उत्तरोत्तरपगिट्ठयारोहणेण पइसमयं । अप्पा विसिट्ठकिचेसु निच्चसो संठवेयव्वो ॥ ८५ ॥ एवं च इमं मणुयत्तणंपि विहलं न होति संपत्तं । जिणसमयपसिद्धक्कमकमढस्स व दंसणं ससिणो ॥ ८६ ॥ कयमेत्थ पसंगेणं नाणस्स य दंसणस्स चरणस्स । तवसो य णिरइयारं, कीरति आराहणं जीए ॥ ८७ ॥ सा चउखंधा आराहणेह भण्णति इमा य दुविगप्पा । सामन्नविसेसवसा, तत्थ य सामन्नतो भणिमो ॥ ८८ ॥ जो जत्थ सुए पढणाइअवसरो तस्स तत्थ चेव सया । विणएण सबहुमाणं, उवहाणपुरस्सरं तह य ॥ ८९ ॥ जं जत्तो य अहीयं, तस्स तओ धुवमनिन्हवणपुव्वं । सुत्तत्थतदुभयाणं अणन्नहा करणओ तह य ॥ ५९० ॥ जा सुट्ठुवायणा पुच्छणा य परियट्टणा परूवणया । तस्सेव य परमेगग्गयाए अणुपेहणा जा य ॥ ९१ ॥

---

तदा तस्या उत्तरोत्तरप्रकृष्टतारोहणेन प्रतिसमयम् । आत्मा विशिष्टकृत्येषु नित्यशः संस्थापयितव्यः ॥ ८५ ॥ एवं चेदं मनुजत्वमपि विफलं न भवति संप्राप्तम् । जिनसमयप्रसिद्धक्रमकमठस्येव दर्शनं शशिनः ॥ ८६ ॥ कृतमत्र प्रसङ्गेन ज्ञानस्य च दर्शनस्य चरणस्य । तपसश्च निरतिचारं क्रियत आराधनं यस्याः ॥ ८७ ॥ सा चतुःस्कन्धाऽऽराधनेह भण्यत इयं च द्विविकल्पा । सामान्यविशेषवशात् तत्र च सामान्यतो भणामः ॥ ८८ ॥ यो यत्र श्रुते पठनाद्यवसरस्तस्य तत्र चैव सदा । विनयेन सबहुमानमुपधानपुरस्सरं तथा च ॥ ८९ ॥ यद्यस्माद्धाधीतं तस्य ततो ध्रुवमनिह्नवनपूर्वम् । सूत्रार्थतदुभयानामनन्यथा करणात्तथा च ॥ ५९० ॥ या सुष्ठु वाचना पृच्छना च परिवर्त्तना प्ररूपणता । तस्यैव च परमैकाग्रतयाऽनुप्रेक्षणा या च ॥ ९१ ॥

जा उय दियाराओ य वावि, एगस्स परिसुवगयस्स। अह सुहपसुत्तगस्स च, जागरमाणस्स अहवावि ॥९२॥ उद्धट्ठियस्स अहवा, अह व निसन्नस्स अह निवत्तस्स। कत्थइ थिरस्स चलिरस्स वावि अह खलियपडियस्स ॥ ९३ ॥ सुत्थस्स दुत्थियस्स च, सवसस्स परव्वसस्स य तहेव । छीए य वियंभणे खासणे य, अहवा वि किं बहुणा ॥ ९४ ॥ जह वा तह वा परिसंठियस्स अणुवरयचित्तवित्तिस्स। तग्गहणधारणापारतंतवित्तीउ तत्तेण ॥ ९५ ॥ सम्मन्नाणगुणड्ढेसु पुरिसरयणेसु जं च निच्चं पि। भत्तिबहुमाणकरणं, सन्नाणाराहणा एसा ॥ ९६ ॥ जा पुण सरूवगुविलत्तणेण दुक्खोवलक्खणिज्जेसु। जीवाजीवप्पमुहेसु सव्वसब्भूयभावेसु ॥ ९७ ॥ अणुवकय-पराणुग्गहपरपरमेसरजिणप्पणीयत्ता। कहवि अबोहेवि परं, भवियव्वमिमेहिमियभावा ॥ ९८ ॥

---

या उत दिवारात्रं च वाप्येकस्य परिपदुपगतस्य। अथ सुखप्रसुप्तस्य च जागर्यमाणस्य च अथवापि ॥ ९२ ॥ ऊर्ध्वस्थितस्याथवाऽथ वा निपण्णस्याथ निवृत्तस्य। कचित् स्थितस्य चलितस्य वाप्यथ स्खलितपतितस्य ॥ ९३ ॥ सुस्थस्य दुःस्थितस्य च स्ववशस्य परवशस्य च तथैव। क्षुते च विजृम्भणे कासने चाथवापि किं बहुना ॥ ९४॥ यथा वा तथा वा परिसंस्थितस्यानुपरतचित्तवृत्तेः। तद्ग्रहणधारणापारतन्त्र्यवृत्त्या तत्त्वेन ॥ ९५ ॥ सम्यग्ज्ञानगुणाढ्येषु पुरुषरत्नेषु यच्च नित्यमपि। भक्तिबहुमानकरणं सज्ज्ञानाराधनैषा ॥ ९६ ॥ या पुनः स्वरूपगुप्तत्वेन दुःखोपलक्षणीयेषु। जीवाजीवप्रमुखेषु सर्वसद्भूतभावेषु ॥ ९७ ॥ अनुपकृतपरानुग्रहपरपरमेश्वरजिनप्रणीतता। कथमप्यबोधेऽपि परं भवितव्यमेभिरिति भावा ॥ ९८ ॥

निस्संसयपडिवत्ती, निच्चं चिय जं च कुच्छियमयं पि। एयं पि इयगुणेणं, सुमयंति न कंखकारित्तं ॥ ९९ ॥ विहियाणुट्ठाणफलंमि तह य जं संसयस्स परिहरणं । जल्लमलाविलसत्तेसु जइसु न दुगंछणं जं च ॥ ६०० ॥ जो य कुतित्थियअइसेसदंसणाउ न विम्हओ जा य। धम्मियगुणोबवूहा, जं य गुणदुत्थेयथिरिकरणं ॥ १ ॥ जं च तहाविहसाहम्मिएसु वच्छल्लमिह जहाथामं। अरिहप्पणीयपवयणपभावणं जं च बहुभेयं ॥ २ ॥ इणमेव य णिग्गंथं, पवयणमट्ठो अयं खु परमट्ठो। सेसो हु पुणो अणट्ठोत्ति भावणा जाय भावेण ॥ ३ ॥ निम्मलसम्मत्तगुणड्ढपुरिसरयणेसु जं च निच्चं पि। भत्तिबहुमाणकरणं, दंसणआराहणा सा उ ॥ ४ ॥ तह जा असेससावज्जजोगपरिवज्जणेण सुपवित्ती। पंचसु महव्वयेसु, दसप्पयारे य जइधम्मे ॥ ५ ॥

---

निःसंशयप्रतिपत्तिर्नित्यमेव यच्च कुत्सितमतमपि । एतदपीति गुणेन सुमतमिति न कांक्षाकारित्वम् ॥ ९९ ॥ विहितानुष्ठानफले तथा च यत्संशयस्य परिहरणम् । जल्लमलाविलसक्तेषु यतिषु न जुगुप्सनं यच्च ॥ ६०० ॥ यश्च कुतीर्थिकातिशेषदर्शनान्न विस्मयो या च । धार्मिकगुणोपबृंहना यच्च गुणदुःस्थेयस्थिरीकरणम् ॥ १ ॥ यच्च तथाविधसाधर्मिकेषु वात्सल्यमिह यथाशक्ति । अर्हत्प्रणीतप्रवचनप्रभावनं यच्च बहुभेदम् ॥ २ ॥ इदमेव च निर्ग्रन्थं प्रवचनमर्थोऽयं खलु परमार्थः । शेषो हि पुनरनर्थ इति भावना या च भावेन ॥ ३ ॥ निर्मलसम्यक्त्वगुणाढ्यपुरुषरत्नेषु यच्च नित्यमपि । भक्तिबहुमानकरणं दर्शनाराधना सा तु ॥ ४ ॥ तथा याऽशेषसावद्ययोगपरिवर्जनेन सुप्रवृत्तिः । पञ्चसु महाव्रतेषु दशप्रकारे च यतिधर्मे ॥ ५ ॥

पडिलेहणा पमज्जणपमुहाए चक्कवालरूवाए । दसभेयाए तह जा, जइसामायारीए आसेवा ॥ ६ ॥ अहवा दसविहवेयावच्चे नवसु य तह बंभचेरगुत्तीसु । जा पिण्डविसुद्धीए, गुत्तितिगे समिइपणगे य ॥ ७ ॥ दव्वं खेत्तं कालं भावं वा सज्जभिग्गहग्गहणे । इंदियदमणे कोहाइनिग्गहे जा य पडिवत्ती ॥८॥ जमणिच्चयाइविसए, दुवालसण्हमह पंचवीसाए । पंचमहव्वयविसयंमि भावणं भावणाण सया ॥ ९ ॥ जं च विसेसाभिग्गहगहणसरूवाणभिक्खुपडिमाण । सम्मं दुवालसण्हं पि पालणं जा य सामइए ॥ १० ॥ छेओवट्ठावणिए, परिहारविसुद्धिए य चरणंमि । जा सुहुमसंपराए, पडिवत्ती तह अहक्खाए ॥ ११ ॥ सच्चरणरयणपडिपुन्नपुरिससीहेसु जं च निच्चं पि । भत्तिबहुमाणकरणं, सा चरणाराहणा भणिया ॥ १२ ॥

---

प्रतिलेखनाप्रमार्जनप्रमुखायां चक्रवालरूपायाम् । दशभेदायां तथा या यतिसामाचार्य्यामासेवा ॥ ६ ॥ अथवा दशविधवैयावृत्ये नवसु च तथा ब्रह्मचर्यगुप्तिपु । या पिण्डविशुद्ध्यां गुप्तित्रिके समितिपंचके च ॥ ७ ॥ द्रव्यं क्षेत्रं कालं भावं वा सद्याभिग्रहग्रहणे । इन्द्रियदमने क्रोधादिनिग्रहे या च प्रतिपत्तिः ॥ ८ ॥ यदनित्यतादिविषये द्वादशानामथ पंचविंशत्याम् । पञ्चमहाव्रतविषये भावनं भावनानां सदा ॥ ९ ॥ यच्च विशेपाभिग्रहग्रहणस्वरूपानां भिक्षुप्रतिमानाम् । सम्यग्द्वादशानामपि पालनं या च सामायिक्याम् ॥ १० ॥ छेदोपस्थापनिके परिहारविशुद्धिकें च चरणे । या सूक्ष्मसंपरायां प्रतिपत्तिस्तथा यथाख्याते ॥ ११ ॥ सच्चरणरत्नपरिपूर्णपुरुषसिंहेपु यच्च नित्यमपि । भक्तिबहुमानकरणं सा चरणाराधना भणिता ॥ १२ ॥

न जहा मणस्स खेओ तहाविहा जह न देहबाहावि । इंदियवग्गो वि हु वियलभावमावज्जए न जहा ॥ १३ ॥ रुहिरपिसियाइधाऊण जह न जायइ तहाविहोवचओ। न य अवचओ वि सहसा, न वायपित्ताइखोभो य ॥१४॥ पारद्धाणं संजमगुणाण जायइ जहा न परिहाणी । किं तु जह उत्तरोत्तरमुस्सप्पणमेव ताण भवे ॥१५ ॥ तह जा तवे पवित्ती, अणसणप्पभिइंमि छव्विहे बज्झे । पायच्छित्तप्पमुहे, इयरंमि वि छव्विहे चेव ॥ १६ ॥ इहलोयपारलोइयसव्वासंसाण दूरपरिहरणा । बलवीरियपुरिसकाराण णिच्चमणिगूहणविहीए ॥ १७ ॥ जिणदेसियंति-जिणसेवियंति तित्थेसरत्तणकरंति । भवसूयणंति निज्जरफलंति सिवसुहनिमित्तंति ॥ १८ ॥ जह चिंतियत्थ संपाडणंति दुक्करचमक्कारजणगंति । निस्सेसदुट्ठनिग्गहकरंति करणाण दमणंति ॥ १९ ॥

---

न यथा मनसः खेदस्तथाविधा यथा न देहबाधापि । इन्द्रियवर्गोऽपि हि विकलभावमापद्यते न यथा ॥ १३ ॥ रुधिरपिशितादिधातूनां यथा न जायते तथाविधोपचयः । न चापचयोऽपि सहसा न वातपित्तादिक्षोभश्च ॥ १४ ॥ प्रारब्धानां संयमगुणानां जायते यथा न परिहानिः । किन्तु यथोत्तरोत्तरमुत्सर्पणमेव तेषां भवेत् ॥ १५ ॥ तथा या तपसि प्रवृत्तिरनशनप्रभृतौ षड्विधे बाह्ये । प्रायश्चित्तप्रमुख इतरेऽपि षड्विधे चैव ॥ १६॥ इहलौकिकपारलौकिकसर्वाशंसानां दूरं परिहरणा । बलवीर्यपुरुषकाराणां नित्यमनिगूहनविधिना ॥ १७ ॥ जिनदेशितमिति जिनसेवितमिति तीर्थेश्वरत्वकरमिति । भवसूदनमिति निर्जरफलमिति शिवसुखनिमित्तमिति ॥ १८ ॥ यथा चिन्तितार्थसंपादकमिति दुष्करचमत्कारजनकमिति । निःशेषदुष्टनिग्रहकरमिति करणानां दमनमिति ॥ १९ ॥

देवाणं पि हु आकंपगंति निस्सेसविग्घहरणंति । आरोग्गकरंति सुमंगलंति किच्चं ति काऊण ॥ ६२० ॥ कायव्वे चिय बहुहा, इमंमि परमारहंतिएहिं खु । हेऊहिं जो य करणुज्जमो तवे परमसंवेगो ॥ २१ ॥ जं च विचित्ततवोगुणमणिरोहणगिरिसु पुरिससीहेसु । भत्तिबहुमाणकरणं तं च तवाराहणं जाण ॥ २२ ॥ इय सामन्नेण निदंसियावि एसा विसेसचिंत्ताए । संखेववित्थरवसा, दुवियप्पाराहणा होति ॥ २३ ॥ तत्थ य संखेवेणं, ताव इमा जं मुणिउं दढमसुहं । समणं व सावयं वा, सवित्थराराहणाणुचिअं ॥ २४ ॥ अचंततिव्वगेलन्नपत्तमप्पत्तचित्तसंतावं । दिन्नालोयणमुद्धियसल्लं गुरुणो भणाविंति ॥ २५ ॥ तदसंपत्तीए पुणो, अवलंबियसाहसो सयं चेव । काऊण भूमिगो चिय, चिइवन्दणपमुहकायवं ॥ २६ ॥

---

देवानामपि ह्याकम्पकमिति निःशेषविन्नहरणमिति । आरोग्यकरमिति सुमंगलमिति कृत्यमिति कृत्वा ॥२०॥ कर्त्तव्य एव बहुधाऽस्मिन् परमार्हमित्येभिः खलु हेतुभिः । यश्च करणोद्यमस्तपसि परमसंवेगः ॥ २१ ॥ यच्च विचित्रतपोगुणमणिरोहणगिरिषु पुरुषसिंहेषु । भक्तिबहुमानकरणं तां च तपआराधनां जानीहि ॥ २२ ॥ इति सामान्येन निदर्शिताऽप्येषा विशेषचिन्तायाम् । संक्षेपविस्तरवशात् द्विविकल्पाऽऽराधना भवति ॥ २३ ॥ तत्र च संक्षेपेण तावदिमा यं ज्ञात्वा दृढमशुभम् । श्रमणं वा श्रावकं वा सविस्तराराधनानुचितम् ॥ २४ ॥ अत्यन्ततीव्रग्लानत्वप्राप्तमप्राप्तं चित्तसंतापम् । दत्तालोचनमुद्धृतशल्यं गुरवो भणयन्ति ॥ २५ ॥ तदसंप्राप्त्यां पुनरवलम्बितसाहसः स्वयं चैव । कृत्वा भूमिग एव चैत्यवन्दनप्रमुखकर्त्तव्यम् ॥ २६ ॥

भालयलधरियकरसंपुडो य धरिऊण माणसुच्छंगे । अरहंते भगवंते, सिद्धे य भणेति सो एवं ॥ २७ ॥ भावारिनिहंताणं भगवंताणं नमोऽरिहंताणं । परमाइसयसमिद्धाण तह नमो सव्वसिद्धाणं ॥ २८ ॥ एसो हमिह गओ, वन्दामी ते य तत्थ चेव ठिया । पासंतु वंदमाणं, अप्पडिहयनाणउज्जोया ॥ २९ ॥ तह पुव्वं पि हु सक्किरियगीयसंविग्गसुकडजोगीणं । पुरतो गुरूण सव्वं, मिच्छत्तं मे पडिक्कंतं ॥ ६३० ॥ जीवाजीवाइपयत्थरुइसरूवं च ताण चेव पुरो । संमत्तं पडिवन्नं, भवगिरिणिद्दलणदढकुलिसं ॥ ३१ ॥ इण्हिं पि ताण पुरओ, सविसेसमसेसयं पि मिच्छत्तं । तिविहं तिविहेण पडिक्कमामि भवभवणहेउमहं ॥ ३२ ॥ सम्मत्तं पुण पुणरवि, तेसिं समीवंमि संपवज्जामि । तत्थ वि पडिवत्ती किर, पुरा वि एसामहं आसि ॥ ३३ ॥

---

भालतलधृतकरसंपुटश्च धृत्वा मानसोत्संगे । अर्हतो भगवतः सिद्धांश्च भणति स एवम् ॥ २७ ॥ भावारिनिहन्तृभ्यो भगवद्भ्यो नमोऽर्हद्भ्यः । परमातिशयसमृद्धेभ्यस्तथा नमः सर्वसिद्धेभ्यः ॥ २८ ॥ एषोऽहमिह गतो वन्दे तान् ते च तत्र चैव स्थिताः । पश्यन्तु वन्द्यमानमप्रतिहतज्ञानोद्योताः ॥ २९ ॥ तथा पूर्वमपि हि सत्क्रियागीतसंविग्नसुकृतयोगिनाम् । पुरतो गुरूणां सर्वं मिथ्यात्वं मया प्रतिक्रान्तम् ॥ ६३० ॥ जीवाजीवादिपदार्थरुचिस्वरूपं च तेषां चैव पुरः । सम्यक्त्वं प्रतिपन्नं भवगिरिनिर्दलनदृढकुलिशम् ॥ ३१ ॥ इदानीमपि तेषां पुरतः सविशेषमशेषमपि मिथ्यात्वम् । त्रिविधं त्रिविधेन प्रतिक्रमामि भवभवनहेतुमहम् ॥ ३२ ॥ सम्यक्त्वं पुनः पुनरपि तेषां समीपे संप्रपत्स्यामि । तत्रापि प्रतिपत्तिः किल पुराप्येषा ममासीत् ॥ ३३ ॥

भावारिचक्क अक्कमणपत्तसब्भूयनामधेयवरा। अरिहंता भगवंतो, देवा साहू य गुरुणो त्ति ॥ ३४॥ सा चेव इयाणं पि हु, सविसेसा मज्झ होउ पडिवत्ती। एवं वयाणि वि पुणो, विसेसतो संपवज्जामि ॥ ३५॥ तह मेत्तीभावो मह समत्तसत्तेसु आसि पुव्विं पि। संपइ सविसेसो सो, तुम्हाण पुरो हवउ मज्झ ॥३६॥ इति कट्टु सव्वसत्ते, खामेमि खमंतु तह महं ते वि। मित्ती चेव महं ताणमुवरि मणसावि न पओसो॥ ३७॥ तह पडिबन्धो दव्वाइगोयरो सव्वहावि वोसिरिओ। जाव इमंमि वि देहे, वोसिरिओ मज्झ पडिबन्धो ॥ ३८॥ इय पडिहयपडिबन्धो, तिविहं च चउव्विहं च आहारं। सागारमणागारं, पच्चक्खइ सो भवुव्विग्गो ॥ ३९॥ तत्तो य पंचपरमेट्ठिमंतमच्चत्तभत्तिसंजुत्तो। पक्खित्तंतो कालं, करेज्ज सज्झाणसंपन्नो ॥ ६४०॥

---

भावारिचक्राक्रमणप्राप्तसद्भूतनामधेयवराः। अर्हन्तो भगवन्तो देवाः साधवश्च गुरव इति ॥ ३४॥ सा चैवेदानीमपि हि सविशेषा मम भवतु प्रतिपत्तिः। एवं व्रतान्यपि पुनर्विशेषतः संप्रव्रजामि ॥ ३५॥ तथा मैत्रीभावो मे समस्तसत्त्वेष्वासीत् पूर्वमपि। सम्प्रति सविशेषः स युष्माकं पुरा भवतु मम ॥ ३६॥ इति कृत्वा सर्वसत्त्वान् क्षाम्यामि क्षमन्तां तथा मां तेऽपि। मैत्री चैव मम तेषामुपरि मनसापि न प्रद्वेषः ॥ ३७॥ तथा प्रतिबन्धो द्रव्यादिगोचरः सर्वथापि व्युत्सृष्टः। यावदस्मिन्नपि देहे व्युत्सृष्टो मया प्रतिबन्धः ॥ ३८॥ इति प्रतिहतप्रतिबन्धस्त्रिविधं चतुर्विधं चाहारम्। सागारमनागारं प्रत्याख्याति स भवोद्विग्नः ॥ ३९॥ ततश्च पञ्चपरमेष्ठिमन्त्रमत्यन्तभक्तिसंयुक्तः। प्रक्षिप्यन् कालं कुर्यात् सद्ध्यानसंपन्नः ॥ ६४०॥

एत्थ य महूनरनाहो, संखित्ताराहणाए दिट्ठंतो। अन्नो सुकोसलमुणी, मुणियव्वो निच्चलपइन्नो ॥४१॥ तहाहि–अहिगयजीवाइपयत्थवित्थरो परमसम्मदिट्ठी य । किंबहुणा आगमभणियसयलसावयगुणाणुगतो ॥ ४२ ॥ महुराउरीए राया, आसि महू सो य अन्नया धन्नो। कीलानिमित्तमुज्जाणमुवगतो परिमियबलो य ॥४३॥ तत्थ रमंतो सो हेरिऊण सत्तुंजएण पडिरिउणा। पडिरूद्धो भूरिबलेण भाउणा रामदेवस्स ॥४४॥ साहिक्खेवं भणिओ, य रे लहुं चयसु भुयबलवलेवं। जइ जीयत्थी ता मत्थएण उव्वहसु मे आणं ॥ ४५ ॥ आ पाव? कहं इय जंपिऊण अज्जवि तुमं धरसि जीयं। इइ तज्जंतो आबद्धभिउडिभीमो महू राया ॥ ४६ ॥ आवरणविरहियंगो, दप्पुद्धरपवरसिन्धुरारूढो। जुज्झेण संपलग्गो, तेण समं जीयणिरवेक्खो ॥ ४७ ॥

---

अत्र च मधुर्नरनाथः संक्षिप्ताराधनायां दृष्टान्तः। अन्यः सुकोशलमुनिर्ज्ञातव्यो निश्चलप्रतिज्ञः ॥ ४१ ॥ तथाहि—अधिगतजीवादिपदार्थविस्तारः परमसम्यग्दृष्टिश्च । किंबहुना, आगमभणितसकल–श्रावकगुणानुगतः ॥ ४२ ॥ मथुरापुर्यां राजाऽऽसीत् मधुः स चान्यदा धन्यः। क्रीडानिमित्तमुद्यानमुपगतः परिमितबलश्च ॥ ४३ ॥ तत्र रममाणः स दृष्ट्वा शत्रुंजयेन प्रतिरिपुणा। प्रतिरुद्धो भूरिबलेन भ्रात्रा रामदेवस्य ॥ ४४ ॥ साधिक्षेपं भणितश्च रे लघु त्यज भुजबलावलेपम्। यदि जीवितार्थी तदा मस्तकेनोद्वह ममाज्ञाम् ॥ ४५ ॥ आ पाप? कथमिति जल्पित्वाद्यापि त्वं धरसि जीवम्। इति तर्जयन्नाबद्धभृकुटिभीमो मधू राजा ॥ ४६ ॥ आवरणविरहिताङ्गो दर्पोद्धुरप्रवरसिन्दुरारूढः । युध्येन संप्रलग्नस्तेन समं जीवनिरपेक्षः ॥ ४७ ॥

तो भिन्नकुंभिकंठयं, पडंतदंतिमिंठयं । वलंतपीलुपट्ठयं, तुट्टंतसारिवट्ठयं ॥ ४८ ॥ दंतग्गदट्ठउट्ठयं, मरंतलट्ठवंठयं । सडंतसारखग्गयं, पलाणभीरुवग्गयं ॥ ४९ ॥ छिज्जन्तअंगरक्खयं कुंतग्गभिन्नकक्खयं । भज्जन्तभूरिसंदणं, पहारदाणदारुणं ॥ ६५० ॥ सव्वत्थ लोहियारुणं, अणेगरुंडभीसणं । काऊण सत्तुपक्खयं, महूनिवो विलक्खयं ॥ ५१ ॥ अणवरयवेरिपमुक्कसत्थसंघायघायविहलंगो । नीहरिऊण रणाओ, कुंजरपट्ठिट्ठिओ संतो ॥ ॥ ५२ ॥ वेरग्गमग्गपडिलग्गमाणसो माणसोयपरिचत्तो । अच्चंतमहासत्तो, चिन्तिउमेवं समाढत्तो ॥ ५३ ॥ आसि किर मज्झवज्झट्ठिईए रज्जं पि भुंजमाणस्स । जिणवयणामयभावियमणंमि सुमणोरहा एए ॥ ५४ ॥ अज्जं चयामि कल्लं, चयामि भवसयनिबन्धणं रज्जं । गेण्हामि य परमप्पएक्कहेउ सव्वन्नुणो दिक्खं ॥ ५५ ॥

---

ततो भिन्नकुम्भिकण्ठकं पतद्दन्तिपालकम् । वलद्धस्तिपृष्ठकं त्रुटद्दूरश्मिबन्धकम् ॥ ४८ ॥ दन्ताग्रदष्टोष्ठकं म्रियत्सुन्दरसैन्यकम् । सीदत्सारखड्गकं पलायनभीरुवर्गकम् ॥ ४९ ॥ छिद्यदंगरक्षकं कुन्ताग्रभिन्नकक्षकम् । भञ्जद्भूरिस्यन्दनं प्रहारदानदारुणम् ॥ ६५० ॥ सर्वत्र लोहितारुणमनेकरुण्डभीषणम् । कृत्वा शत्रुप्रक्षयं मधुर्नृपोऽपि लक्षकम् ॥ ५१ ॥ अनवरतवैरिप्रमुक्तशस्त्रसंघातघातविकलाङ्गः । निःसृत्य रणात् कुञ्जरपृष्टिस्थितः सन् ॥ ॥ ५२ ॥ वैराग्यमार्गप्रतिलग्नमानसो मानशोकपरित्यक्तः । अत्यन्तमहासत्त्वश्चिन्तितुमेवं समारब्धः ॥ ५३ ॥ आसन् किल ममावद्यस्थित्या राज्यमपि भुञ्जमानस्य । जिनवचनामृतभावितमनसि सुमनोरथा एते ॥ ५४ ॥ अद्यस्त्यजामि कल्यं त्यजामि भवशतनिबन्धनं राज्यम् । गृह्णामि च परमात्मैकहेतुं सर्वज्ञस्य दीक्षाम् ॥ ५५ ॥

अइयारपंकमुक्कं, पालित्ता तं च अंतकालंमि । आराहणविहिमणहं, आराहिस्सामि जह विहिणा ॥ ५६ ॥ इण्हिं य न फासुयमही न य संथारो न चेव निज्जमगा । अहह अएक्के जाया, अंतक्रिया मे इमावत्था ॥ ५७ ॥ अहवा एयावत्थस्स मह किमिन्हिं पि दीहचिन्ताए। करिपिट्ठी संथारो, अप्पा निज्जामओ होउ ॥५८॥ इय चिंतिऊण चत्ताणि तेण लहुदव्वभावसत्थाणि । अप्पा य तक्खणं चिय, णिवेसिओ परमसंवेगे ॥ ५९ ॥ हरिकरिरहनरनिवहा, अंतेउरिया य विविहभंडारा । सनगनगरागरधरा, तिविहं तिविहेण वोसिरिया ॥ ६६० ॥ वोसिरियं सव्वं पि हु, अट्ठारसपावठाणपडलं मे । नीसेसदव्वखेत्ताइगोयरो तह य पडिबन्धो ॥ ६१ ॥ तो धम्मज्झाणरओ, रोदट्टज्झाणवज्जओ धीमं । गरहियचिरदुचरितो, निरुद्धसव्विंदियप्पसरो ॥ ६२ ॥

---

अतिचारपंकमुक्तं पालयित्वा तं चान्तकाले । आराधनाविधिमनघमाराधयिष्यामि यथाविधि ॥ ५६ ॥ इदानीं च न प्रासुकमही न च संस्तारो न चैव निर्य्यामकाः । अहहानवसरे जाताऽतर्किता ममेयमवस्था ॥५७॥ अथवैतदवस्थस्य मे किमिदानीमपि दीर्घचिन्तया। करिपृष्ठिः संस्तार आत्मा निर्य्यामको भवतु ॥ ५८ ॥ इति चिन्तयित्वा त्यक्तानि तेन लघुद्रव्यभावशस्त्राणि । आत्मा च तत्क्षणमेव निवेशितः परमसंवेगे ॥ ५९ ॥ हरिकरिरथनरनिवहा अन्तःपुरिकाश्च विविधभण्डाराः । सनगनगरागारधरा त्रिविधं त्रिविधेन व्युत्सृष्टा ॥ ६६० ॥ व्युत्सृष्टं सर्वमपि ह्यष्टादशपापस्थानपटलं मया । निःशेषद्रव्यक्षेत्रादिगोचरस्तथा च प्रतिबन्धः ॥ ६१ ॥ ततो धर्मध्यानरतो रौद्रार्त्तध्यानवर्जको धीमान् । गर्हितचिरदुश्चरितो निरुद्धसर्वेन्द्रियप्रसारः ॥ ६२ ॥

पडिवन्नाणसविही, खामियनीसेससत्तसंताणो । मज्झत्थो भत्तीओए, कयंजली भणिउमाढत्तो ॥ ६३ ॥ भावारिविणासीणं, सवन्नूणं नमोरिहंताणं । कम्मकलावमुक्काणं, नमो नमो सवसिद्धाणं ॥ ६४ ॥ धम्मायाररयाणं, आयरियाणं नमामि सवेसिं । सुत्तप्पवत्तगाणं, उवज्झायाणं च पणमामि ॥ ६५ ॥ खन्ताइगुणजुयाणं, नमामि भावेण सवसाहूणं । इय पंचनमोक्कारं, कुणमाणो मरणमणुपत्तो ॥ ६६ ॥ तो सत्तसागराऊ, जाओ स सणंकुमारकप्पंमि । भासुरबोंदी देवो, सुहपणिहाणप्पभावेणं ॥ ६७ ॥ इय महुनरिन्दसंतियमक्खाणयमक्खायं समासेण । एत्तो सुकोसलमहामुणिस्स वत्तवयं भणिमो ॥ ६८ ॥ साकेयमहानगरे, राया नामेण आसि कित्तिधरो । भज्जा से सहदेवी, सुकोसलो नाम ताण सुओ ॥ ६९ ॥

---

प्रतिपन्नानशनविधिः क्षमितनिःशेषसत्त्वसंतानः । मध्यस्थो भक्तियोगतः कृताञ्जलिर्भणितुमारब्धः ॥ ६३ ॥ भावारिविनाशिनां सर्वज्ञानां नमोऽर्हताम् । कर्मकलापमुक्तानां नमो नमः सर्वसिद्धानाम् ॥ ६४ ॥ धर्माचाररतानाचार्य्यान् नमामि सर्वान् । सूत्रप्रवर्त्तकानुपाध्यायांश्च प्रणमामि ॥ ६५ ॥ क्षान्त्यादिगुणयुतान् नमामि भावेन सर्वसाधून् । इति पञ्चनमस्कारं कुर्वाणो मरणमनुप्राप्तः ॥ ६६ ॥ ततः सप्तसागरायुर्जातः स सनत्कुमारकल्पे । भासुरशरीरो देवः शुभप्रणिधानप्रभावेन ॥ ६७ ॥ इति मधुनरेन्द्रसत्कमख्यानकमाख्यातं समासेन । इतः सुकौशलमहामुनेवक्तव्यतां भणामः ॥ ६८ ॥ शाकेतमहानगरे राजा नाम्नाऽऽसीत् कीर्त्तिधरः । भार्या तस्य सहदेवी सुकौशलो नामा तयोः सूनुः ॥ ६९ ॥

अह अन्नया कयाई, जायविरागो सुकोसलं रज्जे । ठविऊण सुगुरुमूले, पवज्जं गिण्हति नरिन्दो ॥ ७० ॥ गहणासेवणरूवं, सिक्खं दुविहंपि सम्ममुवउत्तो । आसेवंतो विहरति, अममो गामागराईसु ॥ ७१ ॥ एगम्मि य पत्थावे, साकेयपुरे समागतो सो य । भिक्खट्ठाए पविट्ठो, सहदेवीए य दिट्ठो य ॥ ७२ ॥ मा मम पुत्तं उग्गाहिऊण समणं इमो मुणी काही । इति चिन्तिऊण तीए, पुरातो निद्धाडिओ सहसा ॥ ७३ ॥ अह कहं एयाए, हीलिज्जति नियपहूवि पावाए । इय गाढसोगगग्गिरगिराए रुन्नं च धाईए ॥ ७४ ॥ पुट्ठा सुकोसलेण य अम्मो! तं कीस रुयसि मे कहसु । तीए वुत्तं पुत्तय?, कहेमि जइ सोउमिच्छसि तं ॥ ७५ ॥ जस्स पसाएण इमं, रायसिरिं चाउरंगबलकलियं । पत्तोसि सोवि देवो, कित्तिधरो रायरिसिपवरो ॥ ७६ ॥

---

अथान्यदा कदाचिज्जातवैराग्यः सुकौशलं राज्ये । स्थापयित्वा सुगुरुमूले प्रव्रज्यां गृह्णाति नरेन्द्रः ॥ ७० ॥ ग्रहणासेवनरूपां शिक्षां द्विविधामपि सम्यगुपयुक्तः । आसेवमानो विहरत्यममो ग्रामाकरादिषु ॥ ७१ ॥ एकस्मिंश्च प्रस्तावे शाकेतपुरे समागतः स च । भिक्षार्थाय प्रविष्टः सहदेव्या च दृष्टश्च ॥ ७२ ॥ मा मम पुत्रमुद्ग्राह्य श्रमणोऽयं मुनीकरोतु । इति चिन्तित्वा तया पुरान्निर्धाटितः सहसा ॥ ७३ ॥ अथ कथमेतया परिह्रियते निजप्रभुरपि पापया । इति गाढशोकगद्गद्गिरया रुदितं च धात्र्या ॥ ७४ ॥ पृष्टा सुकौशलेन चाम्ब? त्वं कथं रुदिसि मे कथय । तयोक्तं पुत्र! कथयामि यदि श्रोतुमिच्छसि त्वम् ॥ ७५ ॥ यस्य प्रसादेनेमां राजश्रीं चातुरङ्गबलकलिताम् । प्राप्तोऽसि सोऽपि देवः कीर्त्तिधरो राजर्षिप्रवरः ॥ ७६ ॥

चिरकालाओ एत्थागतो लहुं वेरिओव्व नयराउ। एयाए तुज्झ जणणीए अज्ज नीसारिओ वच्छ? ॥ ७७ ॥ एवं विहववहारो, हीणकुलेसुवि न दीसए कहवि। तिहुयणसलाहणिज्जे, तुम्ह कुले होति चुज्जमिणं ॥ ७८ ॥ एवं विहं य नियसामिणो वि, दट्ठुं पराभवं पुत्त? अन्नं काउमसक्का दुक्खं रुन्नेण अवणेमि ॥ ७९ ॥ एवं सोचा विम्हइयमानसो सो सुकोसलो राजा। पिउणो वन्दणहेउं नीहरिओ झत्ति नयराओ ॥ ८० ॥ अन्नन्नकाणणेसुं पलोयमाणेण निउणदिट्ठीए। दिट्ठो य तेन तरुणो हेट्ठट्ठिओ कित्तिधरसाहू ॥ ८१ ॥ ताहे सुकोसलो परमहरिसवसनिस्सरंतरोमंचो। अच्चन्तभत्तिसारं पडिओ साहुस्स चलणेसु ॥ ८२ ॥ भणिउमिमं पयत्तो भयवं गेहम्मि हुयवहपलित्ते। पिउणो नियपियपुत्ते विमोत्तु किं जुज्जए गमणं ॥ ८३ ॥

---

चिरकालादत्रागतो लघु वैरिरिव नगरात्। एतया तव जनन्याद्य निःसारितो वत्स? ॥ ७७ ॥ एवं विधव्यवहारो हीनकुलेष्वपि न दृश्यते कथमपि। त्रिभुवनश्लाघनीये ते कुले भवति चोद्यमिदम् ॥ ७८ ॥ एवंविधं च निजस्वामिनोऽपि दृष्ट्वा पराभवं पुत्र?। अन्यत्कर्त्तुमशक्ता दुःखं रुदितेनापनयामि ॥ ७९ ॥ एवं श्रुत्वा विस्मितमानसः स सुकौशलो राजापि। पितुर्वन्दनहेतुं निःसृतो झटिति नगरात् ॥ ८० ॥ अन्यान्यकाननेषु प्रलोकमानेन निपुणदृष्ट्या। दृष्टश्च तेन तरोरधःस्थितः कीर्त्तिधरसाधुः ॥ ८१ ॥ तदा सुकौशलः परमहर्षवशनिःसरद्रोमाञ्चः। अत्यन्तभक्तिसारं पतितः साधोश्चरणयोः ॥ ८२ ॥ भणितुमिदं च प्रवृत्तो भगवन्? गृहे हुतवहप्रदीप्ते। पितुर्निजप्रियपुत्रान् विमुच्य किं युज्यते गमनम् ॥ ८३ ॥

अणवरयजम्मभरणग्गिपउरजालाकलावदज्झंते । जं लोए इह मोत्तुं ममं तुमं ताय? पव्वइओ ॥ ८४॥ अज्जवि कुणसु पसायं दिक्खाहत्थावलंबदाणेण । भीमभवकूपकुहरम्मि निवडमाणस्स मे ताय? ॥ ८५ ॥ अच्चन्तनिच्छयं पिच्छिऊण परमं च भवविरागित्तं । दिन्ना से पव्वज्जा कित्तिधरेणं मुणिवरेण ॥ ८६ ॥ सहदेवी पुण नाउं सुकोसलं दिक्खियं अइदुहट्टा । मरिऊणं मोग्गिल्ले गिरिम्मि वग्घी समुप्पन्ना ॥ ८७ ॥ ते पुण दोवि मुणिवरा तवनिरया संजमम्मि उज्जन्ता । दुस्सहमहापरीसहरिउसंगरविजयजयपयडा ॥ ८८ ॥ अप्पडिबद्धविहारं विहरन्ता तम्मि चेव गिरिपवरे । संपत्ता अह जाओ वरिसायालो तहिं तेसिं ॥८९॥ तो गिरिगुहाए मज्झे सज्झायझाणझोसियसरीरा । चाउम्मासं वसिउं निस्सरिया सरयकालम्मि ॥ ९० ॥

---

अनवरतजन्ममरणाग्निप्रचुरज्वालाकलापदग्धान्ते । यल्लोकेऽस्मिन्मुक्त्वा मां त्वं तात? प्रव्रजितः ॥८४॥ अद्यापि कुरु प्रसादं दीक्षाहस्तावलम्बदानेन । भीमभवकूपकुहरे निपततो मे तात? ॥ ८५ ॥ अत्यन्तनिश्चयं दृष्ट्वा परमं च भवविरागित्वम् । दत्ता तस्य प्रव्रज्या कीर्त्तिधरेण मुनिवरेण ॥ ८६ ॥ सहदेवी पुनर्ज्ञात्वा सुकौशलं दीक्षितमतिदुःखार्त्ता । मृत्वा मौद्गिल्ये गिरौ व्याघ्री समुत्पन्ना ॥ ८७ ॥ तौ पुनर्द्वावपि मुनिवरौ तपोनिरतौ संयम उद्यन्तौ । दुःसहमहापरीषहरिपुसंगरविजयजयप्रकटौ ॥ ८८ ॥ अप्रतिबद्धविहारं विहरन्तौ तस्मिंश्च गिरिप्रवरे । संप्राप्ता अथ जातो वर्षाकालस्तत्र तयोः ॥ ८९ ॥ ततो गिरिगुहाया मध्ये स्वाध्यायध्यानझोसितशरीरौ । चातुर्मासं उषित्वा निःसृतौ शरत्काले ॥ ९० ॥

अह सा वग्घी अच्चन्तपुव्ववेरेण जायपरिकोवा । ते गच्छन्ते पिच्छिय अभिमुहमभिधाविया सहसा ॥ ९१॥ मुणिणो वि अखुद्धमणा तं इंतिं पासिउं महासत्ता । अव्वो तिव्वुवसग्गो उवट्ठिओ सावयकओत्ति ॥ ९२ ॥ काउं पच्चक्खाणं सागारमद्दीणवित्तिणो धीरा । अवलंबियबाहुलया नासग्गसंगिदिट्ठिया ॥ ९३ ॥ मेरुव्व निप्पकंपा काउस्सग्गे ठिया य चिट्ठन्ति । जा ताव अवक्खंदं दाऊण सुकोसलो तीए ॥ ९४ ॥ वग्घीए सिग्घमवणीए पाडिओ भक्खिउं समारद्धो । सम्ममहियासमाणो भावेइ इमं च स महप्पा ॥ ९५ ॥ सारीरमाणसेहिं दुक्खेहिं अभिद्दुयम्मि संसारे । सुलहमिणं जीवाणं जं किर दुक्खेहिं सह जोगो ॥ ९६ ॥ कहमन्नहेह खंदगमुणिनाहो पंचसाहुसयसहिओ । अच्चंतं जन्तपीडणपीडाए मरणमणुपत्तो ॥ ९७ ॥

---

अथ सा व्याघ्र्यत्यन्तपूर्ववैरेण जातपरिकोपा । तौ गच्छन्तौ दृष्ट्वाभिमुखमभिधाविता सहसा ॥ ९१ ॥ मुनी अप्यक्षुब्धमानसौ तामायान्तीं दृष्ट्वा महासत्त्वौ । अव्वो ( खेदार्थेऽव्ययम् ) तीव्रोपसर्ग उपस्थितः श्वापदकृत इति ॥ ९२ ॥ कृत्वा प्रत्याख्यानं सागारमदीनवृत्ती धीरौ । अवलम्बितबाहुलतौ नासाग्रसंगिदृष्टिकौ ॥ ९३ ॥ मेरुरिव निष्प्रकम्पौ कायोत्सर्गे स्थितौ च तिष्ठतो । यावत् तावदवस्कन्दं दत्त्वा सुकौशलस्तया ॥ ९४ ॥ व्याघ्र्या शीघ्रमवन्यां पातितो भक्षितुं समारब्धः । सम्यगध्यासमानो भावयतीदं च स महात्मा ॥ ९५ ॥ शारीरमानसैर्दुःखैरभिद्रुते संसारे सुलभमिदम् । जीवानां यत् किल दुःखैः सह योगः ॥ ९६ ॥ कथमन्यथेह स्कन्दकमुनिनाथः पञ्चशतसाधुसहितः । अत्यन्तं यन्त्रपीडनपीडया मरणमनुप्राप्तः ॥ ९७ ॥

कह वा उस्सग्गगयस्स चत्तदण्डस्स दंडसाहुस्स । सीसं छिन्नं एमेव जमुणरन्ना परुट्ठेण ॥ ९८ ॥ ता एत्थ भवसमुद्दे सुलहाउ चेव आवयाओ दढं । भवसयदुहनिम्महणो दुल्लहो पुण नवरि जिणधम्मो ॥ ९९ ॥ सो पुण कह कहवि मए चिन्तारयणं व कामधेणुव्व । कप्पद्दुमो व पत्तो दुल्लहलंभो वि सुकयवसा ॥ ७०० ॥ इय एसो चिय सफलो मज्झ अणायरणदोसपरिहीणो । सच्चरणगुणपहाणो जम्मो णाइम्मि संसारे ॥ १ ॥ केवलमेक्कमिमं चिय चित्तं परितवइ जमहमेयाए । वग्घीए कम्मबन्धस्स कारणत्तणेण वयेमि ॥२॥ एत्तोच्चिय ते नमिमो जे मुणिणो णुत्तरं गया मोक्खं । जम्हा ते जीवाणं न कारणं कम्मबंधस्स ॥ ३ ॥ सोएमि न अप्पाणं एयं सो एमि कम्मपरतन्तं । जिणवयणबाहिरमई दुक्खसमुद्दम्मि निवडन्ति ॥ ४ ॥

---

कथं वोत्सर्गगतस्य त्यक्तदण्डस्य दण्डसाधोः । शीर्षं छिन्नमेवमेव यवनराज्ञा प्ररुष्टेन ॥ ९८ ॥ तस्मादत्र भवसमुद्रे सुलभाश्चैवापदा दृढम् । भवशतदुःखनिर्मथनो दुर्लभः पुनः केवलं जिनधर्मः ॥ ९९ ॥ स पुनः कथं कथमपि मया चिन्तारत्नमिव? कामधेनुरिव । कल्पद्रुम इव प्राप्तो दुर्लभलभ्योऽपि सुकृतवशात् ॥ ७०० ॥ इत्येष एव सफलो मेऽनाचरणदोषपरिहीनः । सच्चरणगुणप्रधानो जन्मानादौ संसारे ॥ १ ॥ केवलमेकमेवेदं चित्तं परितापयति यदहमेतस्याः । व्याघ्र्याः कर्मबन्धस्य कारणत्वेन व्रजामि ॥ २ ॥ अत एव तान् नमामो ये मुनयोऽनुत्तरं गता मोक्षम् । यस्मात्ते जीवानां न कारणं कर्मबन्धस्य ॥ ३ ॥ शोचयामि नात्मानमेतां शोचयामि कर्मपारतन्त्राम् । जिनवचनबहिर्मतिर्दुःखसमुद्रे निपतन्तीम् ॥ ४ ॥

इय चिन्तियस्स य से सरीरकम्ममल तब्भवाऊहिं । समगं पि हु तं समसीसिगाए सहसच्चिय पहीणं ॥ ५ ॥ तो उत्तरोत्तरपवड्ढमाणज्झाणानलेण दड्ढम्मि । सयलम्मि वि कम्मवणे अन्तगडो केवली होउं ॥ ६ ॥ समएण गतो सिद्धिं रायरिसिसुकोसलो महासत्तो । किं वा सुप्पणिहाणेक्कवद्धलक्खाण दुस्सज्झं ॥ ७ ॥ गाढाउरत्तसपन्नसाहुगिहिगोयरा समक्खाया । संखेवेणं आराहणा इमा कम्मनिम्महणी ॥ ८ ॥ वित्थरतो पुण आराहणाए सुसिलिट्ठवरपुरीएव्व । चत्तारि चेव मूलदाराइं भवन्ति एयाइं ॥ ९ ॥ परिकम्मविही ।१। परगणसंकमणं ।२। तह ममत्तउच्छेओ ।३। तत्तो समाहिलाहो ।४। जहक्कमेणं जहत्थाइं ॥ १० ॥ इय पत्थुयत्थवित्थरपत्थावणकरणपढमठाणाणि । एयाइं चत्तारि वि मूलद्दाराइं भण्णंति ॥ ११ ॥

---

इति चिन्तितस्य च तस्य शरीरकर्ममलं तद्भवायुर्भिः । सममपि हि तत् समशीर्षिकया सहसैव प्रहीनम् ॥ ५ ॥ तत उत्तरोत्तरप्रवर्धमानध्यानानलेन दग्धे । सकलेऽपि कर्मवनेऽन्तकृतकेवलीभूत्वा ॥ ६ ॥ समयेन गतः सिद्धिं राजर्षिसुकौशलो महासत्त्वः । किं वा सुप्रणिध्यानैकवद्धलक्षाणां दुःसाध्यम् ॥ ७ ॥ गाढातुरत्वसंपन्नसाधुगृहिगोचरा समाख्याता । संक्षेपेणाराधनेयं कर्मनिर्मथिनी ॥ ८ ॥ विस्तारतः पुनराराधनायाः सुश्लिष्टवरपुर्या इव । चत्वारि चैव मूलद्वाराणि भवन्त्येतानि ॥ ९ ॥ परिकर्मविधिः ।१। परगणसंक्रमणं ।२। तथा ममत्वव्युच्छेदः ।३। ततः समाधिलाभो ।४। यथाक्रमेण यथार्थानि ॥ १० ॥ इह प्रस्तुतार्थविस्तारप्रस्थापनकरणप्रथमस्थानानि । एतानि चत्वार्यपि मूलद्वाराणि भण्यन्ते ॥ ११ ॥

एएसु य चउसुवि अरिहलिंगसिक्खाइं नामधेयाइं । पडिदाराइं पनरस दस नव नव हुंतणुक्कमसो ॥ १२ ॥ ताइं पुण नियनियमूलदारवित्थरपरूवणावसरे । वोच्छं नवरमिमाणं अत्थववत्था इमा नेया ॥ १३ ॥ इह परिकम्मविहीए अरिहदाराइं चायदारत्तं । जावि विमिस्साका वि हु विभागपरिकीत्तणेण च ॥ १४ ॥ गिहिसाहूभयविसया होही वत्तवया तदुवरिं तु । पायं साहुगय च्चिय जम्हा संजायविरइमई ॥ १५ ॥ वट्टन्तपरमसड्ढो सड्ढो वि हु कुणति कालमन्तम्मि । अणवज्जं पवज्जं पव्वज्जिउं तेणि सा चेव ॥ १६ ॥ अलमिन्हि पसंगेणं आराहणमेयमन्तकालम्मि । अइयारपंकमुक्कं न थेवपुन्नो जणो लहति ॥ १७ ॥ जह नाणदंसणाण य सारो चरणं भवे जहुदिट्ठं । चरणस्स य सारो जह निव्वाणमणुत्तरं भणियं ॥ १८ ॥

---

एतेषु च चतुर्ष्वप्यर्हल्लिङ्गशिक्षाणि नामधेयानि । प्रतिद्वाराणि पञ्चदश दश नव नव भवन्त्यनुक्रमशः ॥ १२ ॥ तानि पुनर्निजनिजमूलद्वारविस्तारप्ररूपणावसरे । वक्ष्यामि केवलमेषामर्थव्यवस्थेयं ज्ञेया ॥ १३ ॥ इह परिक्रमविधा अर्हद्द्वाराणि त्यागद्वारत्वम् । यापि विमिश्रिकापि विभागपरिकीर्त्तनेन च ॥ १४ ॥ गृहिसाधूभयविषया भवति वक्तव्यता तदुपरि तु प्रायः । साधुगतैव यस्मात् संजातविरतिमतिः ॥ १५ ॥ वर्द्धमानपरमश्रद्धःश्राद्धोऽपि हि करोत्यन्तकाले । अनवद्यां प्रव्रज्यां प्रपद्य तानि सा चैव ॥ १६ ॥ अलमिदानीं प्रसंगेनाराधनामेतामन्तकाले । अतिचारपङ्कमुक्तां न स्तोकपुण्यो जनो लभते ॥ १७ ॥ यथा ज्ञानदर्शनयोश्च सारश्चरणं भवेद् यथोद्दिष्टम् । चरणस्य च सारो यथा निर्वाणमनुत्तरं भणितम् ॥ १८ ॥

निव्वाणस्स य सारो अव्वाबाहं जहा सुहं बिंति । तह सव्वपवयणस्स वि सारो आराहणा जेण ॥ १९ ॥ सुचिरंपि निरइयारं विहरित्ता नाणदंसणचरित्ते । मरणे विराहइत्ता अणंतसंसारिणो दिट्ठा ॥ २० ॥ आसायणबहुलाणं विराहगाणं च नाणचरणाणं । पोग्गलपरियट्टद्धं उक्कोसं अंतरं जम्हा ॥ २१ ॥ दिट्ठा मिच्छादिट्ठी अणाइणो तक्खणेण सिद्धा य । आराहियमरणंता मरुदेवाई महासत्ता ॥ २२ ॥ किर मरुदेवी नामं अहेसि भज्जा नरेन्दनाभिस्स । सा उसभजिणे पव्वज्जमुवगए सोगसंतत्ता ॥ २३ ॥ अणवरयविणिंतंसुपवाहपक्खालियाणणा । रुयइ जंपइ य ममं पुत्तो उसहो परिभमति एगागी ॥ २४ ॥ वसइ य सुसाणसुन्नहररण्णपमुहेसु भीमठाणेसु । अच्चंतनिद्धणो इव पडिभवणं भमति भिक्खं च ॥ २५ ॥

---

निर्वाणस्यापि सारोऽव्याबाधं यथा सुखं विदन्ति । तथा सर्वप्रवचनस्यापि सार आराधना येन ॥ १९ ॥ सुचिरमपि निरतिचारं विहृत्य ज्ञानदर्शनचारित्रे । मरणे विराध्यानन्तसंसारिणो दृष्टाः ॥ २० ॥ अशातनबहुलानां विराधकानां च ज्ञानचरणानाम् । पुद्गलपरिवर्त्तार्द्धमुत्कृष्टमन्तरं यस्मात् ॥ २१ ॥ दृष्टा मिथ्यादृष्टयोऽनादयस्तत्क्षणेन सिद्धाश्च । आराधितमरणान्ता मरुदेव्यादिमहासत्त्वाः ॥ ॥ २२ ॥ किल मरुदेवी नामासीद् भार्या नरेन्द्रस्य नाभेः । सा ऋषभजिने प्रव्रज्यामुपगते शोकसंतप्ता ॥ २३ ॥ अनवरतविनयदश्रुप्रवाहप्रक्षालितानना रुदिति । जल्पति च मम पुत्र ऋषभः परिभ्रमत्येकाकी ॥ २४ ॥ वसति च श्मशानशून्यगृहारण्यप्रमुखेषु भीमस्थानेषु । अत्यन्तनिर्धन इव प्रतिभवनं भ्रमति भिक्षां च ॥ २५ ॥

एसो पुण से पुत्तो भरहो हरिकरिरहुब्भडं एवं । भयवसनमन्तमन्तसामन्तमण्डलं भुंजए रज्जं ॥ २६ ॥ हा हा हयासयविहि एवं विहवसणमुवणमिंतस्स । मज्झ सुए तुह निग्घिण का कित्ती कोव फललाभो ॥२७॥ इय एवं अणवरयं कयप्पलावाए सोयविहुराए । तीए रोयंतीए अच्छीसुं निवडिया नीली ॥ २८ ॥ अह तिहुयणेक्कपहुणो उप्पन्ने विमलकेवलालोए । तियसेहिं विरइयंमी मणिमयसिंहासणसणाहे ॥ २९ ॥ ओसरणे चक्कवई भरहो सोऊण केवलुप्पायं । मरुदेवीए समेओ करेणुगाए समारूढो ॥ ३० ॥ जिणवन्दणत्थमिंतो छत्ताइच्छत्तपमुहमिस्सरियं । दट्ठूणं जयगुरुणो सविम्हयं भणिउमाढत्तो ॥ ३१ ॥ अम्मो पेच्छ नियसुयं ससुरासुरतिजयपूयणिज्जपयं । भुवणच्छेरयभूयं परमिस्सरियं च एयस्स ॥ ३२ ॥

---

एष पुनस्तस्य पुत्रो भरतो हरिकरिरथोद्भटमेवम् । भयवशनमन्मत्रिसामन्तमण्डलं भुञ्जते राज्यम् ॥ २६ ॥ हाहा हताशविधे ? एवंविधव्यसनमुपनयतः । मम सुते तव निर्घृण ? का कीर्तिः को वा फललाभः ॥ २७ ॥ इत्येवमनवरतं कृतप्रलापायाः शोकविधुरायाः । तस्या रुदन्त्या अक्ष्णोर्निपतिता नीली ॥ २८ ॥ अथ त्रिभुवनैकप्रभोरुत्पन्ने विमलकेवलालोके । त्रिदशैर्विरचिते मणिमयसिंहासनसनाथे ॥ २९ ॥ समवसरणे चक्रपतिर्भरतः श्रुत्वा केवलोत्पादम् । मरुदेव्या समेतः करेणुकायां समारूढः ॥ ३० ॥ जिनवन्दनार्थं गच्छंश्छत्रादिच्छत्रप्रमुखमैश्वर्यम् । दृष्ट्वा जगद्गुरोः सविस्मयं भणितुमारब्धः ॥ ३१ ॥ अम्ब ? पश्य निजसुतं ससुरासुरत्रिजगत्पूजनीयपदम् । भुवनाश्चर्यभूतं परमैश्वर्यं चैतस्य ॥ ३२ ॥

* सलहिज्जंता तुमए जा महरिद्धी पुरा पयत्तेण। सा तुहसुयरिद्धीए न कोडिलेसे वि निवडति॥३३॥ तहा हि– पेच्छ छत्तातिगचिन्धबन्धुरं बहलसाहकंकेल्लिमणहरं। भुवणलच्छिविछड्डसासणं अम्म? रम्ममेयस्स आसणं ॥ ॥ ३४ ॥ पंचरायमणिरइयगोपुरं रूप्पहेममणिसालसुंदरं । जाणुमेत्तकुसुमोहभूसियं नियसु अम्म ओसरण-भूमियं ॥ ३५ ॥ इंतजन्तसुरगणविराइयं वरविमाणमालाहिं छाइयं । दुंदुहीधणियसद्दणिब्भरं पेच्छ अंब खणमेक्कमंबरं ॥ ३६ ॥ नियसु एत्थ पणमन्तमत्थया संथुणंति जिणमिंदसत्थया । एत्थ पेच्छ नच्चंत अच्छरा सहरिसं च गायंति किन्नरा ॥ ३७ ॥ अह जिणवाणीसवणुब्भवन्तहरिसंसुपूरहयनीली । मरुदेवी पेच्छंती छत्ताइच्छत्तममलच्छी ॥ ३८ ॥

---

श्लाघ्यमाना या त्वया महर्द्धिः पुरा प्रयत्नेन । सा तव सुतर्द्ध्या न कोटिलेशेऽपि निपतति, तथाहि ॥ ३३ ॥ पश्य छत्रत्रिकचिह्न-बन्धुरं बहलशाखाकंकेल्लिमनोहरम्। भुवनलक्ष्मीविच्छड्यशासनमम्ब² रम्यमेतस्यासनम् ॥ ३४ ॥ पञ्चराजमणिरचितगोपुरां रूप्यहेमम-णिशालसुन्दराम्। जानुमात्रकुसुमौघभूषितां पश्याम्ब² समवसरणभूमिकाम् ॥ ३५ ॥ गच्छदागच्छत्सुरगणविराजितं वरविमानमालाभि-श्छादितम्। दुन्दुभीध्वनितशब्दनिर्भरं पश्याम्ब² क्षणमेकमम्बरम् ॥ ३६ ॥ पश्यात्र प्रणमन्मस्तकाः संस्तुवन्ति जिनमिन्द्रसार्थकाः । अत्र पश्य नृत्यन्त्यप्सराः सहर्षं च गायन्ति किन्नराः ॥ ३७ ॥ अथ जिनवाणिश्रवणोद्भवद्धर्षाश्रुपूरहतनीली । मरुदेवी पश्यन्ती छत्रादि-च्छत्रममलाक्षी ॥ ३८ ॥

तं किं पि सुहज्झाणं पडिवन्ना जेण तक्खणेणावि । विद्धंसियसयलरया सिवसोक्खसिरिं समणुपत्ता ॥३९॥ इय निरुवमसुहहेउं पज्जन्ताराहणाफलं सोचा । संसयवाउलचित्तो सविणयपणओ भणइ सिस्सो ॥ ४० ॥ जइ पवयणस्स सारो मरणन्ताराहणा मुणिवराण । किं दाणिं सेसकाले जयन्ति तवनाणचरणेसु ॥ ४१ ॥ "गुरुराह" जावज्जीवपइन्ना निव्वहणाराहणा जओ भणिया । पढमं तीए भंगे सा कत्तो तस्स मरणंते ॥ ४२ ॥ तेण जहासत्तीए आराहिंतेण सेसकालम्मि । मरणंते होयव्वं मुणिणा दढमप्पमत्तेण॥ ४३ ॥ परिजविया वि न सिज्झइ पहाणसेवं विणा जहा विज्जा । तह पव्वज्जा विज्जा महणंताराहणाए विणा ॥ ४४ ॥ पुव्वमणब्भत्थकमो रिउभडगहणम्मि जइ वि परिहत्थो । सुहडो विजयपडायं न हरइ जह समरसीसम्मि ॥ ४५ ॥

---

तं किमपि शुभध्यानं प्रतिपन्ना येन तत्क्षणेनापि । विध्वंसितसकलरजाः शिवसौख्यश्रीं समनुप्राप्ता ॥ ३९ ॥ इति निरूपमसुखहेतुं पर्य्यन्ताराधनाफलं श्रुत्वा । संशयव्याकुलचित्तः सविनयप्रणतो भणति शिष्यः ॥ ४० ॥ यदि प्रवचनस्य सारो मरणान्ताराधना-मुनिवराणाम् । किमिदानीं शेषकाले यतन्ते तपोज्ञानचरणेषु ॥ ४१ ॥ (गुरुराह) यावज्जीवप्रतिज्ञा निर्वहनाराधना यतो भणिता । प्रथमं तस्या भङ्गे सा कुतस्तस्य मरणान्ते ॥ ४२ ॥ तेन यथाशक्त्याराधयता शेषकालेऽपि । मरणान्ते भवितव्यं मुनिना दृढमप्रमत्तेन ॥ ४३ ॥ परिजपिताऽपि न सिद्ध्यति प्रधानसेवां विना यथा विद्या । तथा प्रव्रज्या विद्या मरणान्ताराधनाया विना ॥ ४४ ॥ पूर्वमनभ्यस्तक्रमो रिपुभटग्रहणे यद्यपि परिहस्तः । सुभटो विजयपताकां न हरति यथा समरशिरसि ॥ ४५ ॥

तह उग्गपरीसहसंकडम्मि न लहति मुणी वि मरणन्ते । आराहणविहिमणहं पुव्वमणब्भत्थसुहजोगो ॥ ४६ ॥ कयकरणा वि सकज्जं अचंतपमाइणो न साहिंति । परिवडियविरतिवुद्धी आहरणं खुड्डगो एत्थ ॥ ४७ ॥ "तथाहि" महिमण्डणाभिहाणे नयरे नाणाइगुणमणिनिहाणो । सिरिधम्मघोससूरी समोसढो वाहिरुज्जाणे ॥ ४८ ॥ पंचसयाइं मुणीणं परिवारो तस्स निम्मलगुणाणं । तप्परिवुडो य रेहइ सुरसहितो सो सुरिन्दो व्व ॥ ४९ ॥ रयणायरे व्व नवरं वडवग्गी सुरपुरम्मि राहुव्व । परितावकरो भीमो तग्गच्छे ससहरसरित्थे ॥ ७५० ॥ सिस्सो अइकलुसमई निद्धम्मो सीलपसमगुणवियलो । असमाहिकरो साहूणमासि नामेण रुद्दोत्ति ॥ ५१ ॥ मुणिजणनिन्दियकज्जे भुज्जो भुज्जो समायरंतं तं । तज्जंती करुणाए समणा इय महुरवयणेहिं ॥ ५२ ॥

---

तथोग्रपरिपहसंकटे न लभते मुनिरपि मरणान्ते । आराधनाविधिमनघं पूर्वमनभ्यस्तशुभयोगः ॥ ४६ ॥ कृतकरणा अपि स्वकार्यमत्यन्तप्रमादिनो न साधयन्ति । परिपतितविरतिबुद्धिरुदाहरणं क्षुल्लकोऽत्र ॥ ४७ ॥ 'तथाहि—महिमण्डनाभिधाने नगरे ज्ञानादिगुणमणिनिधानः । श्रीधर्मघोपसूरिः समवसृतो बहिरुद्याने ॥ ४८ ॥ पञ्चशतं मुनीनां परिवारस्तस्य निर्मलगुणानाम् । तत्परिवृतश्च राजते सुरसहितः स सुरेन्द्र इव ॥ ४९ ॥ रत्नाकर इव नवरं वडवाग्निः सुरपुरे राहुरिव । परितापकरो भीमस्तद्गच्छे शशधरसदृशे ॥ ७५० ॥ शिष्योऽतिकलुपमतिर्निर्धर्मः शीलप्रशमगुणविकलः । असमाधिकरः साधूनामासीन्नाम्ना रुद्र इति ॥ ५१ ॥ मुनिजननिन्दितकार्ये भूयो भूयः समाचरन्तं तम् । तर्जयन्ति करुणया श्रमणा इति मधुरवचनैः ॥ ५२ ॥

पवरकुलवड्ढिओ वच्छ तं सि तह दिक्खिओ सुगुरुणा । तं एवंविहस्स तुह निन्दियत्थकारित्तणमजुत्तं ॥ ॥५३॥ एवं महुरगिराए वारिज्जंतो वि विरमइ न जाव । दुच्चरियाओ निट्ठुरगिराए ता तेहिं पुण भणिओ ॥५४॥ रे दुस्सिक्ख दुरासय काहिसि जइ दुट्ठचेट्ठियाणिं । धम्मववत्थाथूरय ता गच्छा निच्छुभिस्सामो ॥५५॥ एवं च तज्जिओ सो रुट्ठो साहूण मारणनिमित्तं । सयलमुणिजोग्गजलभायणम्मि परिक्खिवति विसमुग्गं ॥ ५६ ॥ अह जाए पत्थावे पियणत्थं जाव तं जलं जइणो । गिण्हंति ताव तग्गुणतुट्ठाए देवयाए इमं भणियं ॥ ५७ ॥ भो भो समणा एत्थ जले तुम्ह दुट्ठसिस्सेण । रुद्देण विसं खित्तं ता मा एयं पिविज्जाहि ॥ ५८ ॥ एवं सोच्चा समणेहिं तं जलं तेण दुट्ठसिस्सेण । समगत्तवेलं चिय तिविहं तिविहेण वोसिरियं ॥ ५९ ॥

---

प्रवरकुलवर्द्धितो वत्स ! त्वमसि तथा दीक्षितः सुगुरुणा । तदेवंविधस्य तव निन्दितार्थकारित्वमयुक्तम् ॥ ५३ ॥ एवं मधुरगिरया वार्यमाणोऽपि विरमति न यावत् । दुश्चरितात् निष्ठुरगिरया तदा तैः पुनर्भणितः ॥ ५४ ॥ रे दुःशिक्षित? दुराशय? करिष्यसि यदि दुष्टचेष्टितमिदानीम् । धर्मव्यवस्थास्थूरक? तदा गच्छान्निक्षेप्स्यामः ॥ ५५ ॥ एवं च तर्जितः स रुष्टः साधूनां मारणनिमित्तम् । सकलमुनियोग्यजलभाजने परिक्षिपति विषमुग्रम् ॥ ५६ ॥ अथ जाते प्रस्तावे पानार्थं यावत्तज्जलं यतयः । गृह्णन्ति तावत् तद्गुणतुष्टया देवतयेदं भणितम् ॥ ५७ ॥ भो भोः श्रमणा अत्र जले युष्माकं दुष्टशिष्येण । रुद्रेण विषं क्षिप्तं तस्मान्मा एतत् पिबत ॥ ५८ ॥ एवं श्रुत्वा श्रमणैस्तज्जलं तेन दुष्टशिष्येण समम् । तद्वेलायामेव त्रिविधं त्रिविधेन व्युत्सृष्टम् ॥ ५९ ॥

अह सो मुणिजणमारणपरिणामज्जियपयंडपावसरो । तज्जम्मे च्चिय अच्चंततिव्वरोगाउलसरीरो ॥ ७६० ॥ उज्झियजिणिंददिक्खो इओ तओ परगिहेसु णिवसन्तो । बहुपावकम्मकरो भिक्खावितीए जीवन्तो ॥ ६१ ॥ पव्वज्जापरिभट्ठो अदट्ठव्वो सुदुट्ठचेट्ठो य । सो एसोत्ति जणेणं कित्तिज्जन्तो समक्खं पि ॥ ६२ ॥ अट्टदुहट्टोवगतो पए पए रुद्दज्झाणझाई य । बाहिसिहिविहुरदेहो अइकूरमई मओ सन्तो ॥ ६३ ॥ सव्वपुढवीपाउग्गपावबन्धेक्कहेउभूयासु । अच्चन्तखुद्दनिन्दियतिरिक्खजोणीसरूवासु ॥ ६४ ॥ पत्तेयं पत्तेयं एगंतरियासु अंतरगतिसु । अहिंडिय अहिंडिय जहक्कमं नरयपुढवीसु ॥ ६५ ॥ अतितिक्खदुक्खलक्खक्खणीसु घम्माइयासु । सत्तसु वि उप्पन्नो नेरइओ कयउक्कोसाउयनिबन्धो ॥ ६६ ॥

---

अथ स मुनिजनमारणपरिणामार्जितप्रचण्डपापसराः । तज्जन्मन्येवात्यन्ततीव्ररोगाकुलशरीरः ॥ ७६० ॥ उज्झितजिनेन्द्रदीक्ष इतस्ततः परगृहेषु निवसन् । बहुपापकर्मकरो भिक्षावृत्त्या जीवन् ॥ ६१ ॥ प्रव्रज्यापरिभ्रष्टोऽद्रष्टव्यः सुदुष्टचेष्टश्च । स एष इति जनेन कीर्त्यमानः समक्षमपि ॥ ६२ ॥ आर्त्तदुःखार्त्तोपगतः पदे पदे रौद्रध्यानध्यायी च । व्याधिशिखिविधुरदेहोऽतिक्रूरमतिर्मृतः सन् ॥ ६३ ॥ सर्वपृथिवीप्रायोग्यपापबन्धैकहेतुभूतासु । अत्यन्तक्षुद्रनिन्दिततिर्यग्योनिस्वरूपासु ॥ ६४ ॥ प्रत्येकं प्रत्येकमेकान्तरिकास्वन्तरगतिषु । आहिण्ड्याहिण्ड्य यथाक्रमं नरकपृथिवीषु ॥ ६५ ॥ अतितीक्ष्णदुःखलक्षखानिषु घर्म्मादिकासु । सप्तस्वप्युत्पन्नो नैरयिकः कृतोत्कृष्टायुर्निबन्धः ॥ ६६ ॥

तत्तो जलथलखहयरजोणीसु अणेगसो समुप्पन्नो । बितिचउरिन्दियजाइसु जातो य बहुसु अइबहुसो
॥ ६७ ॥ तत्तो जलजलणानिलपुढवीसुमसंखकालमुप्पन्नो । एवं वणस्सइम्मि वि नवरमणंतं तहिं कालं ॥ ६८ ॥
तत्तो बब्बरमायंगभिल्लचम्मयररयगपमुहेसु । संवुच्छो सव्वत्थ वि जणवेसो दुक्खजीवी य तहा ॥ ६९ ॥ कहिं-
पि सत्थदारिओ कहिं पि लेट्ठुचूरिओ । कहिं पि रोगदूमिओ कहिं पि विज्जुकामिओ ॥७७०॥ कहिं पि धीवरा-
हओ कहिं पि जायदाहओ । कहिं पि अग्गिदड्ढओ कहिं पि गाढबद्धओ ॥ ७१ ॥ कहिं पि गब्भसाविओ
कहिं पि सत्तुमारिओ । कहिं पि जन्तपीलिओ कहिं पि सूलकीलिओ ॥ ७२ ॥ कहिं पि वारिवूढओ कहिं
पि गड्डुछुडओ । सहंतओ महादुहं गतो य मच्चुणो मुहं ॥ ७३ ॥

---

ततो जलस्थलखेचरयोनिष्वनेकशः समुत्पन्नः । द्वित्रिचतुरिन्द्रियजातिषु जातश्च बहुष्वतिबहुशः ॥ ६७ ॥ ततो जलज्वलनानिलपृथिवीष्वसंख्यकालमुत्पन्नः । एवं वनस्पत्यामपि नवरमनन्तं तत्र कालम् ॥ ६८ ॥ ततो वर्वरमातङ्गभिल्लचर्म्मकाररजकप्रमुखेषु । समुत्पन्नः सर्वत्रापि जनद्वेष्यो दुःखजीवी च तथा ॥ ६९ ॥ कुत्रापि शस्त्रदारितः कुत्रापि लोष्टचूरितः । कुत्रापि रोगदूपितः कुत्रापि विद्युत्क्रामितः ॥ ७७० ॥ क्वापि धीवराहतः कुत्रापि जातदाहकः । कुत्राप्यग्निदग्धकः कुत्रापि गाढबध्यकः ॥ ७१ ॥ क्वापि गर्भस्रावितः कुत्रापि शत्रुमारितः । कुत्रापि यन्त्रपीलितः कुत्रापि शूलकीलितः ॥ ७२ ॥ क्वापि वारिनिमज्जितः कुत्रापि गर्त्तपातितः । सहमानो महादुःखं गतश्च मृत्योर्मुखम् ॥ ७३ ॥

इय भूरिभवपरंपरदुहसहणुप्पन्नकम्मलहुभाओ । पयणुकसायत्तेण य चुन्नउरे पवरनयरम्मि ॥ ७४ ॥ वेसमणसेट्ठिगेहिणिवसुभद्दाए य पुत्तभावेण । उप्पण्णो नियसमये गुणागरो से कयं नामं ॥ ७५ ॥ वड्डिउमाढत्तो सो गत्तेण बुद्धिवित्थरेणं पि । अह अन्नया कयाई समोसढो तत्थ तित्थयरो ॥ ७६ ॥ वन्दणवडियाए जणो गुणागरो वि य समागतो तुरियं । वन्दित्ता जयनाहं उवविट्ठो धरणिवट्ठम्मि ॥ ७७ ॥ संसयसहस्समहणी सिवसुहजणणी कुदिट्ठितमहरणी । कल्लाणरयणधरणी पयट्टिया देसणा पहुणा ॥ ७८ ॥ पडिबुद्धो पउरजणो पडिवन्नो केणवी विरइधम्मो । मिच्छत्तमुज्झिऊणं केणवि गहियं च समत्तं ॥ ७९ ॥ सो पुण गुणागरो गरुयहरिसपब्भारपुलइयसरीरो । जयगुरुकयप्पणामो समुचियपत्थावमुवलब्भ ॥ ७८० ॥

---

इति भूरिभवपरंपरादुःखसहनोत्पन्नकर्मलघुभावः । प्रतनुकपायत्वेन च चूर्णपुरे प्रवरनगरे ॥ ७४ ॥ वैश्रमणश्रेष्ठिगेहिनीवसुभद्रायां च पुत्रभावेन । उत्पन्नो निजसमये गुणाकरस्तस्य कृतं नाम ॥ ७५ ॥ वर्धितुमारब्धः स गात्रेण बुद्धिविस्तरेणापि । अथान्यदा कदाचित् समवसृतस्तत्र तीर्थंकरः ॥ ७६ ॥ वन्दनकरणाय जनो गुणाकरोऽपि च समागतस्त्वरितम् । वन्दित्वा जगन्नाथमुपविष्टो धरणिपृष्ठे ॥ ॥ ७७ ॥ संशयसहस्रमथनी शिवसुखजननी कुदृष्टितमोहरणी । कल्याणरत्नधरणी प्रवर्त्तिता देशना प्रभुना ॥ ७८ ॥ प्रतिबुद्धः प्रचुरजनः प्रतिपन्नः केनचिद् विरतिधर्मः । मिथ्यात्वमुज्झित्वा केनापि गृहीतं च सम्यक्त्वम् ॥ ७९ ॥ स पुनर्गुणाकरो गुरुहर्षप्राग्भारपुलकितशरीरः । जगद्गुरुकृतप्रणामः समुचितप्रस्तावमुपलभ्य ॥ ७८० ॥

भणिउमिमं पारद्धो भयवं साहेसु पुव्वजम्मम्मि । किमहं होंतोत्ति महन्तमेत्थ कोऊहलं मज्झ ॥ ८१ ॥ अह जयपहुणा तस्सोवयारमवलोइऊण नीसेसो । रुद्दयखुड्डुमाई परिकहितो पुव्ववुत्तन्तो ॥ ८२ ॥ इय सो सोउं भयविहुरमाणसो जायगाढपरितावो । जंपइ इमस्स पावस्स नाह किं होज्ज पच्छित्तं ॥ ८३ ॥ जयगुरुणा भणियं साहुविसयं बहुमाणपमुहसुहकिचं । मोत्तूणं नो भद्दय अन्नेणं अत्थि इह सुद्धी ॥ ८४ ॥ तो पंचसाहुसयविसयवन्दणप्पभिइविणयकिच्चपरो । गहिओ अभिग्गहो तेण घोरसंसारभीएण ॥ ८५ ॥ परिवालइ य जहुत्तं जत्थ य दिवसे । न होंति पंचसया । साहूणं पडिपुन्ना तत्थ न सो भोयणं कुणति ॥ ८६॥ इय छम्मासे पालिय अभिग्गहं तयणु संलिहियदेहो । मरिऊण बंभलोके देवत्तेणं समुप्पन्नो ॥ ८७ ॥

---

भणितुमिदं प्रारब्धो भगवन् कथय पूर्वजन्मनि । किमहं भवन्निति महदत्र कौतूहलं मम ॥ ८१ ॥ अथ जगत्प्रभुना तस्योपकारमवलोक्य निःशेषः । रुद्रक्षुल्लकादिः परिकथितः पूर्ववृत्तान्तः ॥ ८२ ॥ इति स श्रुत्वा भयविधुरमानसो जातगाढपरितापः । जल्पत्यस्य पापस्य नाथ? किं भवति प्रायश्चित्तम् ॥ ८३ ॥ जगद्गुरुणा भणितं साधुविषयं बहुमानप्रमुखशुभकृत्यम् । मुक्त्वा नो भद्र? अन्येनास्तीह शुद्धिः ॥ ८४ ॥ ततः पञ्चशतसाधुविषयवन्दनप्रभृतिविनयकृत्यपरः । गृहीतोऽभिग्रहस्तेन घोरसंसारभीतेन ॥ ८५ ॥ परिपालयति च यथोक्तं यत्र च दिवसे न भवन्ति पञ्चशताः । साधूनां प्रतिपूर्णास्तत्र न स भोजनं कुरुते ॥ ८६ ॥ इति षण्मासान् पालित्वाभिग्रहं तदनुसंलिखितदेहः । मृत्वा ब्रह्मलोके देवत्वेन समुत्पन्नः ॥ ८७ ॥

ओहिबलेणं तत्थ वि मुणिऊणं पुव्वकालवुत्तंतं । सविसेसं जयगुरुसाहूणं वन्दणाइम्मि वट्टन्तो ॥ ८८ ॥ अतिवाहिय देवत्तं तत्तो चवित्ता पुरीए चम्पाए । नरनाहचन्दरायस्स पुत्तभावेण उप्पन्नो ॥ ८९ ॥ पुव्वभवसाहुदढपक्खवायभावेण तत्थवि स धीमं । मुणिणो दट्ठुं जाइं सरेति तोसं च उव्वहति ॥ ७९० ॥ एत्तोच्चिय पियसाहुत्ति नामधेयं पिऊहिं से विहियं । तरुणत्तणमणुपत्तो पडिवज्जति सो य पव्वज्जं ॥ ९१ ॥ तत्थवि य समत्थतवस्सिलोयविस्सामणाइकरणपरो । विविहाभिग्गहगहणेक्कबद्धलक्खो अपमाई य ॥ ९२ ॥ संलेहणं करित्ता पज्जन्ते सुक्कपमुहकप्पेसु । तियससुहमणुभवित्ता जहक्कमं जाव सव्वट्ठे ॥ ९३ ॥ सव्वुक्किट्ठं सोक्खं अणुभुञ्जिय एत्थ लद्धमणुयत्तो । कयपव्वज्जो निरवज्जविहियआराहणविहाणो ॥ ९४ ॥

---

अवधिबलेन तत्रापि ज्ञात्वा पूर्वकालवृत्तान्तम् । सविशेषं जगद्गुरुसाधूनां वन्दनादौ वर्त्तमानः ॥ ८८ ॥ अतिवाह्य देवत्वं ततश्च्युत्वा पुर्य्यां चम्पायाम् । नरनाथचन्द्रराजस्य पुत्रभावेनोत्पन्नः ॥ ८९ ॥ पूर्वभवसाधुदृढपक्षपातभावेन तत्रापि स धीमान् । मुनीन् दृष्ट्वा जातिं स्मरति तोषं चोद्वहते ॥ ७९० ॥ अत एव प्रियसाधुरिति नामधेयं पितृभ्यां तस्य विहितम् । तरुणत्वमनुप्राप्तः प्रतिपद्यते स च प्रव्रज्याम् ॥ ९१ ॥ तत्रापि च समस्ततपस्विलोकविश्रामणादिकरणपरः । विविधाभिग्रहग्रहणैकबद्धलक्षोऽप्रमादी च ॥९२॥ संलेखनं कृत्वा पर्य्यन्ते शुक्रप्रमुखकल्पेषु । त्रिदशसुखमनुभूय यथाक्रमं यावत्सर्वार्थे ॥ ९३ ॥ सर्वोत्कृष्टं सौख्यमनुभुज्यात्र लब्धमनुजत्वम् । कृतप्रव्रज्यो निरवद्यविहिताराधनाविधानः ॥ ९४ ॥

निम्महियमोहजोहो मुसुमूरियभवनिमित्तकम्मंसो । असुरसुरविहियमहिमो हिमगोरं सिवपुरं पत्तो ॥ ॥ ९५ ॥ इय खुड्डगनाएणं पवज्जं उवगयावि दक्खा वि । आराहणाविहाणं काउं पारिंति न पमत्ता ॥ ९६ ॥ जे पुण जह एसोच्चिय तह पइभवविहियपवरसामन्ना । आराहणजयलच्छिं ते लीलाएच्चिय लहन्ति ॥ ९७ ॥ ता निक्कलंकपवज्जपालणा मरणकालविसयाए । आराहणाए जणगत्तणेण णिचं पि कायवा ॥ ९८ ॥ एवं सोचा सिस्सेण जम्पियं पुवमकयसामन्ना । नणु मरुदेवी सिद्धा भणियमिणं किमिह तत्तं ति ॥ ९९ ॥ "गुरुराह" पुवमभावियचित्तो आराहति जइ कोइ मरणंतं । खत्तयनिहिआहरणेण तं न सवत्थवि पमाणं ॥ ८०० ॥ 'तहाहि' जइ कीलगखिवणत्थं दरं खणंतेण भूमिवट्टम्मि । केणवि नरेण पत्तो रयणनिही कहवि देववसा ॥ १ ॥

---

निर्मथितमोहयोधो भग्नभवनिमित्तकर्मांशः । असुरसुरविहितमहिमा हिमगौरं शिवपुरं प्राप्तः ॥ ९५ ॥ इति क्षुल्लकन्यायेन प्रव्रज्यामुपगता अपि दक्षा अपि । आराधनाविधानं कर्तुं शक्नुवन्ति न प्रमत्ताः ॥ ९६ ॥ ये पुनर्यथैष एव तथा प्रतिभवविहितप्रवरश्रामण्याः । आराधनाजयलक्ष्मीं ते लीलया एव लभन्ते ॥ ९७ ॥ तस्मान्निष्कलंकप्रव्रज्यापालना मरणकालविषयायाः । आराधनाया जनकत्वेन नित्यमपि कर्त्तव्या ॥ ९८ ॥ एवं श्रुत्वा शिष्येण जल्पितं पूर्वमकृतश्रामण्या ननु मरुदेवी सिद्धा भणितमिदं किमिह तत्त्वमिति ( गुरुराह ) ॥ ९९ ॥ पूर्वमभावितचित्त आराध्यते यद्यपि कोऽपि मरणान्ताम् । खनकनिध्युदाहरणेन तन्न सर्वत्रापि प्रमाणम् ॥ ८०० ॥ तथाहि— यदि कीलकक्षिपणार्थं द्वारं खनता भूमीपृष्ठे । केनापि नरेण प्राप्ता रत्ननिधिः कथमपि देववशात् ॥ १ ॥

ता किं तेणन्नेण वि तहा खणंतेण सो लहेयव्वो । अविसेसेण महीए तम्हा सव्वत्थ नेगन्तो ॥ २ ॥ इय जइ सा मरुदेवी पुव्वमणब्भत्थकुसलकम्मा वि । सिद्धा कहंपि किं एवमेव सिज्झउ जणो सव्वो ॥ ३ ॥ पालियमूलपइन्नो तम्हा कमवड्ढमाणसुहभावो । कुज्जाराहणमंते पज्जन्तमइप्पसंगेण ॥ ४ ॥ आराहणं च विहिणा काउं पडिपुण्णमीहमाणेण । मुणिणा वा गिहिणा वा परिकम्मेयव्वओ अप्पा ॥ ५ ॥ पढमं पि रोगिणा इव विसेसकिरियत्थिणत्ति दंसेमि । परिकम्मविहीणामं पुव्वुदिट्ठं महादारं ॥ ६ ॥ तप्पडिबद्धाइं पुण पन्नरस हवन्ति संगयगुणाइं । जाइं पडिदाराइं जहक्कमं ताणि कित्तेमि ॥ ७ ॥ अरहो ।१। लिंगं ।२। सिक्खा ।३। विणय ।४। समाही ।५। मणोणुसट्ठी य ।६। अणिययविहारदारं ।७। रायद्दारं च ।८। परिणामो ।९। ॥ ८ ॥

---

तदा किं तेनान्येनापि तथा खनता सा लभ्या । अविशेषेण मह्यां तस्मात्सर्वात्र नैकान्तः ॥ २ ॥ इति यदि सा मरुदेवी पूर्वमनभ्यस्तकुशलकर्मापि । सिद्धा कथमपि किमेवमेव सिध्यतु जनः सर्वः ॥ ३ ॥ पालितमूलप्रतिज्ञस्तस्मात् क्रमवर्धमानशुभभावः । कुर्यादाराधनामन्ते पर्य्यान्तमतिप्रसङ्गेन ॥ ४ ॥ आराधनां च विहिना कर्त्तुं परिपूर्णामीहमानेन । मुनिना वा गृहिणा वा परिकर्मयितव्य आत्मा ॥ ५ ॥ प्रथममपि रोगिणेव विशेषक्रियार्थिनेति दर्शयामि । परिकर्मविधिनाम पूर्वोद्दिष्टं महाद्वारम् ॥ ६ ॥ तत्प्रतिबद्धानि पुनः पञ्चदश भवन्ति संगतगुणानि । यानि प्रतिद्वाराणि यथाक्रमं तानि कीर्त्तयामि ॥ ७ ॥ अर्हो ।१। लिङ्गं ।२। शिक्षा ।३। विनयः ।४। समाधि ।५। मनोऽनुशिष्टिश्च ।६। अनियतविहारद्वारं ।७। रागद्वारं च ।८। परिणामः ।९। ॥ ८ ॥

चाओ ।१०। मरणविहत्ती ।११। अहिगयमरणं च ।१२। सीइदारं च ।१३। तह भावणाणदारं ।१४। चरिमं संलेहणादारं ।१५। ॥ ९ ॥ अरिहो जोग्गो भन्नति सो पुण आराहणाए नायव्वो । सामन्तमन्तिसत्थाहसेट्ठि-कोडुंबियाईणं ॥ ८१० ॥ राईसरसेणावइकुमारपभिईणमहव मन्नयरो । तेसिमविरुद्धकारी विरुद्धसंसग्गिपरि-हारी ॥ ११ ॥ जो यतिनां चिन्तामणिकप्पेत्ति करेइ तीए बहुमाणं । पत्थेइ थिरणुराओ जो यतिसज्झत्त-मच्चत्थं ॥ १२ ॥ आराहणारिहेसु य जो वच्छल्लं करेति अणवरयं । भावेइ दुल्लहत्तं तीए धम्मे पमाईणं ॥ १३ ॥ आलोएइ य निच्चं मच्चुं पच्चूहमीहियत्थाणं । तस्स य निरोहसाहणमाराहणमेव भावेइ ॥ १४ ॥ अरिहन्तेसु य पूजासक्कारं कुणति निच्चमुज्जुत्तो । भावेइ य गुणगुरयं तेसिं गुणमणिकरंडाणं ॥ १५ ॥

---

त्यागो ।१०। मरणविभक्ति ।११। रधिगतमरणं च ।१२। शीतिद्वारं च ।१३। तथा भावनाद्वारं ।१४। चरिमं संलेखनाद्वारम् ।१५। ॥ ९ ॥ अर्हो योग्यो भण्यते स पुनराराधनायां ज्ञातव्यः । सामन्तमत्रिसार्थवाहश्रेष्ठिकौटुंबिकादिनाम् ॥ ८१० ॥ राजेश्वरसेनापति-कुमारप्रभृतीनामथवान्यतरः । तेषामविरुद्धकारी विरुद्धसंसर्गपरिहारी ॥ ११ ॥ यो यतीनां चिन्तामणिकल्प इति करोति बहुमानम् । पश्यति स्थिरानुरागो यो यतिसाध्यत्वमत्यर्थम् ॥ १२ ॥ आराधनार्हेषु च यो वात्सल्यं करोत्यनवरतम् । भावयति दुर्लभत्वं तस्यां धर्मेऽ-प्रमादिनाम् ॥ १३ ॥ आलोकयति च नित्यं मृत्युं प्रत्यूहमीहितार्थानाम् । तस्य च निरोधसाधनमाराधनामेव भावयति ॥ १४ ॥ अर्हत्सु च पूजासत्कारं करोति नित्यमुद्युक्तः । भावयति च गुणगुरुं तेषां गुणमणिकरण्डानाम् ॥ १५ ॥

पवयणपसंसणाए रमेइ विरमेइ धम्मनिन्दाओ । गुणगुरुगुरुभत्तीए सत्तीए सज्जई निच्चं ॥ १६ ॥ सुमणे
समणे वन्देइ सुट्ठु निन्देति णियदुच्चरियं । गुणसुट्ठिएसु रज्जइ सज्जइ सइसीलसच्चेसु ॥ १७ ॥ वज्जेति कुसं-
सग्गिं संसग्गिं कुणति सीलमन्तेहिं । निच्चं पि गुणे गिण्हंति परस्स सन्ते वि नो दोसे ॥१८॥ दुट्ठपमायपिसाए
निहणेति हणेज्ज इंदियमइंदे । ताडेइ च दुच्चरियं मणमक्कडमुक्कदुपयारं ॥ १९ ॥ नाणं सुणेइ नाणं गुणेइ नाणेण
कुणइ किच्चाइं । नाणाहिएसु रज्जइ अणुसज्जइ नाणदाणम्मि ॥ ८२० ॥ अकुसलखउवसमओ निययं कुसला-
णुबन्धओ चेव । इति गुणसत्तो सत्तो सो च्चिय आराधणा अरिहो ॥ २१ ॥ तह कुगईपहसहाए जणइत्तु
परेसि कहमवि कसाए । पसमेइ पसंतमणो जो सो आराहणा अरिहो ॥ २२ ॥

---

प्रवचनप्रशंसनायां रमते विरमति धर्मनिन्दातः । गुणगुरुगुरुभक्तौ शक्त्या सज्जति नित्यम् ॥ १६ ॥ सुमनसः श्रमणान् वन्दते सुष्ठु निन्दयति निजदुश्चरितम् । गुणसुस्थितेषु रज्यते सज्जति सदा शीलसत्ययोः ॥ १७ ॥ वर्जयति कुसंसर्गं संसर्गं करोति शीलवद्भिः । नित्यमपि गुणान् गृह्णाति परस्य सतोऽपि न दोषान् ॥ १८ ॥ दुष्टप्रमादपिशाचान् निहन्ति हन्तीन्द्रियमृगेन्द्रान् । ताडयति च दुश्चरितं मनोमर्कटं मुक्तदुष्प्रचारम् ॥ १९ ॥ ज्ञानं शृणोति ज्ञानं गुणति ज्ञानेन करोति कृत्यानि । ज्ञानाधिकेषु रज्यतेऽनुसज्जति ज्ञानदाने ॥ ८२० ॥ अकुशलक्षयोपशमको नियतं कुशलानुबन्धकश्चैव । इति गुणसक्तः शक्तः स एवाराधनार्हः ॥ २१ ॥ तथा कुगतिपथसभानान् । जनयित्वा परेषां कथमपि कषायान् । प्रशामयति प्रशान्तमना यः स आराधनार्हः ॥ २२ ॥

अणुवसमपरे वि परे कुणमाणो सम्ममुवसमोवायं । आराहणारिहत्तं लहइ च्चिय सुद्धभावातो ॥ २३ ॥ आराहणाठिएणं वि कसायसल्लं समुद्धारेयव्वं। जो पढमं वि तमुद्धरइ तदरिहो सो विनायव्वो ॥ २४ ॥ जो य न तहारिहेणमन्नो अन्नस्स तदरिहो सोवि। इयरो वि तदरिहो जइ कहमवि ववहरणणुन्नातो ॥ २५ ॥ इहरा आराहणसंठियस्स संघाणुगम्ममाणस्स । धनवइपओसकरणा मालिन्नं पवयणस्स भवे ॥ २६ ॥ संमाणदाणसिक्खावणाहिं ठिइधरियपरिजणचाई। जो सो वि तदरिहो खलु इहरा लोगम्मि 'परिवाओ ॥२७॥ तदसामत्थे पुण सव्वहा वि धम्मियविसिट्ठलोयमओ। जह तह तप्परिचाई वि तदरिहो होति विन्नेओ ॥ २८ ॥ तह पयइए विणीओ पयइए चेव साहसेक्कधणो। पयईए सुकयन्नू निच्चियनिग्गुणभवठिती य ॥ २९ ॥

---

अनुपशमपरेऽपि परे कुर्वाणः सम्यगुपशमोपायम् । आराधनार्हत्वं लभत एव शुद्धभावात् ॥ २३ ॥ आराधनास्थितेनापि कषायशल्यं समुद्धर्त्तव्यम् । यः प्रथममपि तमुद्धरति तदर्हः सोऽपि ज्ञातव्यः ॥ २४ ॥ यश्च न तथार्हेणान्योऽन्यस्य तदर्हः सोऽपि । इतरोऽपि तदर्हो यदि कथमपि व्यवहरणानुज्ञातः ॥ २५ ॥ इतरथाराधनासंस्थितस्य संघानुगम्यमानस्य । धनपतिप्रद्वेषकरणात् मालिन्यं प्रवचनस्य भवेत् ॥ २६ ॥ सन्मानदानशिक्षापनाभिः स्थितिधृतः परिजनत्यागी । यः सोऽपि तदर्हः खलु इतरथा लोके परिवादः ॥ २७ ॥ तदसामर्थ्ये पुनः सर्वथापि धार्मिकविशिष्टलोकमतः । यथा तथा तत्परित्याग्यपि तदर्हो भवति विज्ञेयः ॥ २८ ॥ तथा प्रकृत्या विनीतः प्रकृत्या चैव साहसैकधनः । प्रकृत्या सुकृतज्ञो निश्चितनिर्गुणभवस्थितिश्च ॥ २९ ॥

ततो य तव्विरत्तो पयईए चेव अप्पहासो य । पयईए अदीणो पयईए पडिपन्नसूरो य ॥३०॥ आराहणाए जो वि य ठियं जणं जणियपावपरिहारं। सोउं दट्ठुं च भवे तब्भत्तिरसिज्जमाणमणो ॥३१॥ होहमहं कहंपि पि हु कयावि कमचिन्नपुन्नसामन्नो । किं मन्ने पुत्तेहिं सव्वन्नुविहीए इय रूवो ॥३२॥ इय वासणापहाणो धीबलिओ थिरपसंत पयई य । सिद्धजणस्स बहुमओ नेओ आराहणाअरिहो ॥ ३३॥ 'अहवा' अच्चंतचंडमणवयणकायकिरिया वि-कूरकम्मावि। अणवरयं महुमेरयपिसियासणलालसमणा वि ॥ ३४॥ थीबालवुड्ढमारणचोरिक्कपरित्थिसेवणपरा वि । अलिउल्लावाभिरती वि धम्मविहिओवहारावि ॥३५॥ होऊण पुव्वकाले किं पि हु वेरग्गकारणं पप्प। पच्छा पच्छायावा परमोवसमं पवज्जंति ॥ ३६ ॥ जे ते वि हुंति आराहणाए अरिहा सुहासया धीरा। रायसुयवंक-चूली चिलाइपुत्ताइणो व्व धुवं ॥ ३७ ॥

---

ततश्च तद्विरक्तः प्रकृत्या चैवाल्पहासश्च । प्रकृत्यादीनः प्रकृत्या प्रतिपन्नशूरश्च॥३०॥ आराधनायां योऽपि च स्थितं जनं जनितपापपरि-हारम् । श्रुत्वा दृष्ट्वा च भवेत्तद्भक्तिसज्जमानमनाः ॥ ३१ ॥ भविष्याम्यहमपि कथमवि हि कदापि क्रमचीर्णपूर्णश्रामण्यः । किं मन्ये पुत्रैः सर्वज्ञविधिनेति रूपः ॥ ३२ ॥ इति वासनाप्रधानो धीबलितः स्थिरप्रशान्तप्रकृतिश्च । सिद्धजनस्य बहुमतो ज्ञेय आराधनार्हः ॥ ३३ ॥ अथवा, अत्यन्तचण्डमनोवचनकायक्रिया अपि क्रूरकर्माणोऽपि । अनवरतं मधुमेरकपिशिताशनलालसमनसोऽपि ॥ ३४ ॥ स्त्रीबालवृद्धमारणचौर्यपरस्त्रीसेवनपरा अपि । अलीकोल्लापाभिरतयोऽपि धर्मविधेरपहारिणोऽपि ॥ ३५ ॥ भूत्वा पूर्वकाले किमपि हि वैराग्यकारणं प्राप्य । पश्चात्पश्चातापात् परमोपशमं प्रव्रजन्ति ॥ ३६ ॥ ये तेऽपि भवन्त्याराधनाया अर्हाः शुभाशया धीराः राजसुतवंकचूलिश्चिलातिपुत्रादय इव ध्रुवम् ॥ ३७ ॥

तहाहि सुविभत्ततियचउप्पहचच्चरदेवउलभवणरमणिज्जे । सिरिपुरनगरे राया अहेसि नामेण विमलजसो ॥ ३८ ॥ वइरिकरिकुंभनिब्भेयलग्गरुहिरारुणुब्भडच्छायो । परिकुवियजमकडक्खो व्व जस्स खग्गो रणे सहति ॥ ३९ ॥ जस्स य जिणमुणिचलणुप्पलेसु भसलत्तणं समुवहति । भत्तिवसेण य मणिमउडकिरणदित्तिंडिक्कियं सीसं ॥ ४० ॥ तस्स य भज्जा निरुवमरूवाइगुणोवहसियसुरदयिया । सयलंतेउरपवरा नामेण सुमंगला देवी ॥ ४१ ॥ जमलगजायत्तणओ पुत्तो नामेण पुप्फचूलो से । धूया य पुप्फचूला दोन्निवि अन्नोन्ननिद्धाणि ॥ ४२ ॥ नवरं अणत्थसत्थं उप्पायंतो पुरम्मि सव्वत्थ । भन्नइ स पुप्फचूलो जणेण किर वंकचूलित्ति ॥ ४३ ॥ इमेण चिय नामेणं संपत्तो सो य पसिद्धिमन्नदिणे । तद्दुवालंभायन्नणरुट्ठेणं सो नरिंदेणं ॥४४॥

---

तथाहि—सुविभक्तत्रिकचतुष्पथचत्वरदेवकुलभवनरमणीये । श्रीपुरनगरे राजाऽऽसीन्नाम्ना विमलयशाः ॥३८॥ वैरिकरिकुम्भनिर्भेदलग्नरुधिरारुणोद्भटच्छायः । परिकुपितयमकटाक्ष इव यस्य खड्गो रणे राजते ॥ ३९ ॥ यस्य जिनमुनिचरणोत्पलेषु भसलत्वमुद्वहति । भक्तिवशेन मणिमुकुटकिरणदीप्रकृतं शीर्षम् ॥४०॥ तस्य च भार्या निरूपमरूपादिगुणोपहसितसुरदयिता । सकलान्तःपुरप्रवरा नाम्ना सुमंगला देवी ॥ ४१ ॥ यमलकजातत्वात् पुत्रो नाम्ना पुष्पचूलस्तस्य । पुत्री च पुष्पचूला द्वावप्यन्योन्यस्निग्धौ ॥ ४२ ॥ नवरमनर्थसार्थमुत्पादयन् पुरे सर्वत्र । भण्यते स पुष्पचूलो जनेन किल वंकचूलिरिति ॥ ४३ ॥ अनेनैव नाम्ना संप्राप्तः स प्रसिद्धिमन्यदिने । तदुपालम्भाकर्णनरुष्टेन स नरेन्द्रेण ॥ ४४ ॥

निव्विसओ आणत्तो ताहे नियपरिजणेण परियरिओ। तीए विय भइणीए सहिओ नयराउ नीहरिओ ॥ ४५ ॥ लंघित्ता नियदेसं वच्चंतो पउरगिरिसणाहाए। हरिनहराहयकुंजरविमुक्कसिक्कारभीमाए ॥ ४६ ॥ नीरंधगरुयतरुवरपडिरुद्धाइच्चकंतिपसराए। पसरंतसरहसहरिसरवसवणपलाणसीहाए ॥ ४७ ॥ सीहावलोयणाउलमयउलकीरंतदरिपवेसाए। वेसाए व्व सयावि हु महाभुयंगेहिं कलियाए ॥ ४८ ॥ अडवीए निवडिओ सो कत्थवि य अदिस्समाणमग्गाए। तण्हाछुहाकिलिंतो य जंपिउं एवमाढत्तो ॥ ४९ ॥ रे पुरिसा उच्चतरुंमि आरुहित्तावलोयह दिसा तो। किं अत्थि एत्थ कत्थवि जलासओ वसिममह वावि ॥ ५० ॥ तव्वयणेणारूढा पुरिसा उच्चम्मि पवरतरुसिहरे। अवलोइउं पवत्ता दिसिवलयं णिउणदिट्ठीए ॥ ५१ ॥

---

निर्विषय आज्ञप्तस्तदा निजपरिजनेन परिवृतः। तयापि च भगिन्या सहितो नगरान्निःसृतः ॥ ४५ ॥ लंघित्वा निजदेशं व्रजन् प्रचुरगिरिसनाथायाम्। हरिनखाहतकुंजरविमुक्तशीत्कारभीमायाम् ॥ ४६ ॥ नीरन्ध्रगुरुतरुवरप्रतिरुद्धादित्यकान्तिप्रसरायाम्। प्रसरत्सरभसहर्षरवश्रवणपलानसिंहायाम् ॥ ४७ ॥ सिंहावलोकनव्याकुलमृगकुलकुर्वद्दरिप्रवेशायाम्। वेश्यायामिव सदापि हि महाभुजंगैः कलितायाम् ॥ ४८ ॥ अटव्यां निपतितः स कुत्रापि चादृश्यमानमार्गायाम्। तृष्णाक्षुधाक्लिश्यंश्च जल्पितुमेवमारब्धः ॥ ४९ ॥ रे पुरुषा! उच्चैस्तरौ आरुह्यावलोकत दिशस्ततः। किमस्त्यत्र कुत्रापि जलाशयो वा सीमा अथवापि ॥ ५० ॥ तद्वचनेनारूढाः पुरुषा उच्चैः प्रवरतरुशिखरे। अवलोकितुं प्रवृत्ता दिग्वलयं निपुणदृष्ट्या ॥ ५१ ॥

अह थेवभूमिभागे मसिकोइलगवलसामलसरीरा । जलणं पज्जालिन्ता भिल्ला आलोइया तेहिं ॥ ५२ ॥ सिट्ठं च इमं नरवइसुयस्स तेणावि जंपियं भद्दा । गच्छह एसिं समीवे पुच्छह मग्गं व सिमदुत्तं ॥ ५३ ॥ इय सोऊण पुरिसा गया समीवम्मि तेसि भिल्लाणं । आपुच्छिउं पवत्ता मग्गं भिल्लेहिं त्तो भणिया ॥ ५४ ॥ कत्तो तुब्भे एत्थागया तहा कस्स सत्तिया किं वा । देसांतरं समीहह गंतुं साहेह ताव इमं ॥ ५५ ॥ पुरिसेहिं जंपियं सिरिपुराओ नामेण वंकचूलित्ति । विमलजसरायपुत्तो पिउ अवमाणाउ नीहरिओ ॥ ५६ ॥ परदेसं वच्चंतो इहागतो तस्स सेवगा अम्हे । मग्गस्स पुच्छणट्ठा तुम्हसमीवं समणुपत्ता ॥ ५७ ॥ भिल्लेहिं जंपियं भो तं दंसह अम्ह नरवइस्स सुयं । पडिवन्नं पुरिसेहिं वलिऊण य दंसिओ कुमारो ॥ ५८ ॥

---

अथ स्तोकभूमिभागे मषिकोकिलगवलश्यामलशरीराः । ज्वलनं प्रज्वालयन्तो भिल्ला आलोकितास्तैः ॥ ५२ ॥ शिष्टं चेदं नरपतिसुतस्य तेनापि जल्पितं भद्राः । गच्छतैषां समीपे पृच्छत मार्गं वसामो द्रुतम् ॥ ५३ ॥ इति श्रुत्वा पुरुषा गताः समीपे तेषां भिल्लानाम् । आप्रष्टुं प्रवृत्ता मार्ग्गं भिल्लैस्ततो भणिताः ॥ ५४ ॥ कुतो यूयमत्रागतास्तथा कस्य सत्काः किं वा । देशान्तरं समीहध्वे गन्तुं कथयत तावदिदम् ॥ ५५ ॥ पुरुषैर्जल्पितं श्रीपुरान्नाम्ना वंकचूलिरिति । विमलयशोराजपुत्रः पितुरपमानान्निःसृतः ॥ ५६ ॥ परदेशं व्रजन्निहागतस्तस्य सेवका वयम् । मार्ग्गं प्रच्छनार्थां युष्मत्समीपं समनुप्राप्ताः ॥ ५७ ॥ भिल्लैर्जल्पितं भोस्तं दर्शयतास्माकं नरपतेः सुतम् । प्रतिपन्नं पुरुषैर्वलित्वा च दर्शितः कुमारः ॥ ५८ ॥

अह दूराउ च्चिय मुक्ककंडकोदण्डपमुहसत्थगणा । भिल्ला नमिउं कुमरं चिंतेउमिमं समाढत्ता ॥ ५९ ॥ एवं विहसुंदररायलक्खणालंकिओ इमो अम्हा जइ । कहवि होइ सामी ता जायति सव्वसंपत्ती ॥ ६० ॥ इय चिन्तिऊण तेहिं निडालतडघडियपाणिकोसेहिं । सविणयपणयं भणियं कुमार विन्नविन्नियं सुणसु ॥ ६१ ॥ चिरसमुवज्जियपुन्नेण नूणं तुम्हारिसा पवरपुरिसा । दीसंति ता पसीयह आगच्छह अम्हपल्लीए ॥ ६२ ॥ कुणह नियपायपंकयपवित्तियाए य तीए रज्जं च । सामिवियलाणं अम्हं एत्तो सामी तुमं चेव ॥ ६३ ॥ इय सप्पणयब्भत्थणपल्हत्थियनियकुलववत्थेण । पडिवन्नं कुमारेणं विसयासंगीणं किमकिच्चं ॥ ६४ ॥ अह परियणेण सहिओ पहिट्ठचित्तेहिं तेहिं भिल्लेहिं । दंसिज्जमाणमग्गो पडुच्च पल्लिं पयट्टो सो ॥ ६५ ॥

---

अथ दूरादेव मुक्तबाणकोदण्डप्रमुखशस्त्रगणाः । भिल्ला नत्वा कुमारं चिन्तितुमिदं समारब्धाः ॥ ५९ ॥ एवंविधसुन्दरराजलक्षणालंकृतोऽयमस्माकं यदि । कथमपि भवति स्वामी तदा जायते सर्वसंपत्तिः ॥ ६० ॥ इति चिन्तयित्वा तैर्ललाटतटघटितपाणिकोशैः । सविनयप्रणयं भणितं कुमार ! विज्ञपनीयं शृणु ॥ ६१ ॥ चिरसमुपार्जितपुण्येन नूनं युष्मादृशाः प्रवरपुरुषाः । दृश्यन्ते तस्मात्प्रसीदतागच्छतास्मत्पल्ल्याम् ॥ ६२ ॥ कुरुत निजपादपंकजपवित्रितायाश्च तस्या राज्यं च । स्वामिविकलानामस्माकमितः स्वामी त्वं चैव ॥ ६३ ॥ इति सप्रणयाभ्यर्थनं पर्यस्तनिजकुलव्यवस्थेन । प्रतिपन्नं कुमारेण विषयासङ्गिनां किमकृत्यम् ॥ ६४ ॥ अथ परिजनेन सहितः प्रहृष्टचित्तैस्तैर्भिल्लैः । दर्श्यमानमार्गो आश्रित्य पल्लिं प्रवृत्तः सः ॥ ६५ ॥

अच्चंतनिविडदुमदुग्गमेण सणियं पहेण गच्छंतो। सीहगुहापल्लीए तीए अदूरम्मि संपत्तो ॥ ६६ ॥ दिट्ठा य कुमारेणं दंसणमेत्ते वि दिन्नभूरिभया। विसमगिरिदुग्गलग्गा कयन्तजणणि व्व सा झत्ति ॥ ६७ ॥ 'अपि य' एगत्थ निहियकुंजरमहंतदंतोवरइयपरिवेढा। अन्नत्थ मंसविक्कयमिलन्तजणजणियहलबोला ॥ ६८ ॥ एगत्थ वंदपग्गहियपहियकीरंतकरुणरुन्नरवा। अन्नत्थ विणासियजंतुरुहिरविलफिलियमहि वट्ठा ॥६९॥ एगत्थ घोरसरघुरुहरन्तकोलेयनिवहदुप्पेच्छा। अन्नत्थुल्लुंचियपिसियभक्खणुम्मिलियसउणिकुला ॥ ७० ॥ एगत्थ परोप्परवइरभावजुज्झंतभीमभिल्लभडा अन्नत्थ लक्खविंधणपयट्टएगग्गधाणुक्का ॥ ७१ ॥ जत्थ य दुहत्तजणमारणम्मि धम्मं वयन्ति निक्करुणा। गिज्जइ य परममंडणमकित्तिमं परजुवइसंगो ॥ ७२ ॥

---

अत्यन्तनिविडद्रुमदुर्गमेन शनकैः पथा गच्छन्। सिंहगुहायाः पल्यास्तस्या अदूरे संप्राप्तः ॥ ६६ ॥ दृष्टा च कुमारेण दर्शनमात्रेऽपि दत्तभूरिभया। विषमगिरिदुर्गलग्ना कृतान्तजननीव सा झटिति ॥ ६७ ॥ अपि च' एकत्र निहतकुञ्जरमहद्दन्तोपरचितपरिवेढा। अन्यत्र-मांसविक्रयमिलज्जनजनितकौलाहला ॥ ६८ ॥ एकत्र वंधप्रगृहीतपक्षिकुर्वत्करुणरौद्ररवा। अन्यत्र विनाशितजन्तुरुधिरचिक्किलितमहीपृष्ठा ॥ ६९ ॥ एकत्र घोरसरघोरुहरत्कोलेयनिवहदुष्प्रेक्षा। अन्यत्रोलुंचितपिशितभक्षणोन्मिलितशकुनिकुला ॥ ७० ॥ एकत्र परस्परवैरभावयुध्यमानभीमभिल्लभटा। अन्यत्र लक्ष्यविन्धनप्रवृत्तैकाग्रधानुष्का ॥ ७१ ॥ यत्र च दुःखार्त्तजनमारणे धर्मं वदन्ति निष्करुणाः। गृह्यते च परममण्डनमकृत्रिमं परयुवतिसंगः ॥ ७२ ॥

सलहिज्जइ मइविभवो विसिट्ठजणवंचणम्मि दढवेरं । बुज्झइ हियभासिम्मि तव्विरीए य मित्तत्तं ॥ ७३ ॥ जह तह भासित्तणमवि वन्निज्जइ वयणकोसलत्तेण । सत्तवियलो त्ति भन्नइ नयाणुवत्ती विमूढेहिं ॥ ७४ ॥ इय एवंविहलोएण संकुलाए य तीए पल्लीए । अच्चन्तपाववसगो नरयकुडीए व्व स पविट्ठो ॥ ७५ ॥ ठवितो य स बहुमाणं चिर पल्लीवइपयम्मि भिल्लेहिं । नियपरक्कमवसओ जातो अचिरेण पल्लिवई ॥ ७६ ॥ अवगणिय-कुलायारो अविचिन्तितजणगधम्मववहारो । अवहत्थियलज्जभरो विस्सुमरियसाहुधम्मगिरो ॥ ७७ ॥ वर-वारणो व्व अणिवारणो सया तेण भिल्ललोएण । परिचरिओ अणवरयं पाणिवहाईसु वट्टंतो ॥ ७८ ॥ पच्चासन्न-पुरागरमडंबकव्वडविणासणुज्जुत्तो । थीबालवुड्ढवीसंभघायदिन्नावहाणो य ॥ ७९ ॥

---

श्लाघ्यते मतिविभवो विशिष्टजनवञ्चने दढवैरम् । बुध्यते हितभाषिणि तद्विपरीते च मित्रत्वम् ॥ ७३ ॥ यथा तथा भाषित्वमपि वर्ण्यते वचनकौशलत्वेन । सत्त्वविकल इति भण्यते नयानुवर्त्तिर्विमूढैः ॥ ७४ ॥ इत्येवंविधलोकेन संकुलायां च तस्यां पल्याम् । अत्यन्तपापवशगो नरककुट्यामिव स प्रविष्टः ॥ ७५ ॥ स्थापितश्च सबहुमानं किल पल्लिपतिपदे भिल्लैः । निजपराक्रमवशाज्जातोऽचिरेण पल्लिपतिः ॥ ७६ ॥ अवगणितकुलाचारोऽविचिन्तितजनकधर्मव्यवहारः । अपहस्तितलज्जाभारो विस्मृतसाधुधर्मगिरः ॥ ७७ ॥ वरवारण इवानिवारणः सदा तेन भिल्ललोकेन । परिचरितोऽनवरतं प्राणिवधादिषु वर्त्तमानः ॥ ७८ ॥ प्रत्यासन्नपुरागरमडंबकर्वटविनाशनोद्युक्तः । स्त्रीबालवृद्धविश्रम्भघातदत्तावधानश्च ॥ ७९ ॥

निच्चं जूयपसंगी निच्चं चिय मज्जमंसउवजीवी तत्थेव य जायरई कालं वोलेति लीलाए ॥ ८० ॥ अह अण्णया कयाइ वच्चंता कहवि सत्थपब्भट्ठा । कइवयसिस्सपरिवुडा संपत्ता तत्थ आयरिया ॥ ८१ ॥ जातो य तम्मि समए निवडंतुद्दामसलिलपब्भारो । तंडवियसिहंडिकुलो पढमो चिय पाउसारंभो ॥ ८२ ॥ रेहन्ति जम्मि पल्लवपसाहिया साहिणो महीवट्ठं । अवगुंठियं व छज्जइ निरंतरं हरियपडएण ॥८३॥ गिरिसिहिरेहिंतो तुंगलोलकल्लोलरवनिवहेण जहिं । गिम्हं व सवंतीओ महानईउ पलोट्टंति ॥८४॥ जम्मि य पउरजलाउलमहिमंडल-दुग्गमग्गा परिभग्गा । दूराउ चिय सुमरियदइया पहिया नियत्तंति ॥ ८५ ॥ इय एवं विहरूवं वरिसायालं पलोइउं सूरी समणे । सुगुणपहाणे महुरगिराए इमं भणति ॥ ८६ ॥

---

नित्यं द्यूतप्रसंगी नित्यमेव मद्यमांसोपजीवी । तत्रैव च जातरतिः कालं गमयति लीलया ॥ ८० ॥ अथान्यदा कदाचिद् व्रजन्तः कथमपि सार्थप्रभ्रष्टाः । कतिपयशिष्यपरिवृताः संप्राप्तास्तत्राचार्य्याः ॥ ८१ ॥ जातश्च तस्मिन् समये निपतदुद्दामसलिलप्राग्भारः । ताण्डवितशिखण्डिकुलः प्रथम एव प्रावृडारम्भः ॥ ८२ ॥ राजन्ते यस्मिन् पल्लवप्रसाधिताः शाखिनो महीपृष्ठम् । अवगुण्ठितमिव राजते निरन्तरं हरितपटलेन ॥ ८३ ॥ गिरिशिखरेभ्यस्तुंगलोलकल्लोलरवनिवहेन यत्र । ग्रीष्ममिव स्रवन्त्यो महानद्य उपलुठन्ति ॥ ८४ ॥ यस्मिंश्च प्रचुरजलाकुलमहिमण्डलदुर्गमार्ग्गात् परिभग्नाः । दूरादेव स्मृतदयिताः पथिका निवर्त्तन्ते ॥ ८५ ॥ इत्येवंविधरूपं वर्षाकालं प्रलोक्य सूरिः श्रमणान् । सुगुणप्रधानान् मधुरगिरयेदं भणति ॥ ८६ ॥

भो भो महाणुभावा उब्भिन्नतणंकुरा मही जाता । कुंथुपिप्पीलियपउरा ता एत्तो जुज्जइ न गंतुं ॥ ८७ ॥ जम्हा जिणेहिं कहिया सारो धम्मस्स एत्थ जीवदया । तव्विरहम्मि य दिक्खा निरत्थिया कुनिवसेवव्व ॥ ८८ ॥ एत्तोच्चियय वासासुं सुप्पडिलीणंगुवंगवावारा । कुम्मुव्व महामुणिणो एगट्ठाणम्मि निवसंति ॥ ८९ ॥ ता जामो पल्लीए इमाए किर एत्थ वंकचूलित्ति । विमलजसभूवइसुओ सुम्मइ भिल्लाण नाहोत्ति ॥ ९० ॥ तं मंग्गित्ता वसहिं अइलंघेमो इमं वरिसकालं । एवं च निक्कलंकं अणुचिण्णं होति सामण्णं ॥ ९१ ॥ पडिवन्नं समणेहिं तउ गया वंकचूलिणो गेहे । गव्वुग्गीवेण मणागमेत्तयं तेण पणिवइया ॥ ९२ ॥ दिन्नासीसेण य मुणिवरेण भणियं अहो महाभाग । अम्हे सत्थब्भट्ठा संपइ गंतुं च असमत्था ॥ ९३ ॥

---

भो भो महानुभावा ? उद्भिन्नतृणांकुरा मही जाता । कुंथुपिपीलिकप्रचुरा तस्मादितो न युज्यते गंतुम् ॥ ८७ ॥ यस्माज्जिनैः कथिता सारो धर्म्मस्य जीवदया । तद्विरहे च दीक्षा निरर्थिका कुनृपसेवावत् ॥ ८८ ॥ अत एव च वर्षासु सुप्रतिलीनाङ्गोपाङ्गव्यापाराः । कुर्म्म इव महामुनय एकस्थाने निवसन्ति ॥ ८९ ॥ तस्माद्यामः पल्ल्यामस्यां किलात्र वंकचूलिरिति । विमलयशोभूपतिसुतः श्रूयते भिल्लानां नाथ इति ॥ ९० ॥ तं मंगित्वा वसतिमतिलंघिष्याम इदं वर्षाकालम् । एवं च निष्कलंकमनुचीर्ण्णं भवति श्रामण्यम् ॥ ९१ ॥ प्रतिपन्नं श्रमणैस्ततो गता वंकचूलेर्गेहे । गर्वोद्ग्रीवेन मनाङ्मात्रं तेन प्रणिपतिताः ॥ ९२ ॥ दत्ताशिषा च मुनिवरेण भणितमहो-महाभाग ? । वयं सार्थभ्रष्टाः संप्रति गन्तुं चासमर्थाः ॥ ९३ ॥

जिणसासणसरवरराजहंसनरनाहविमलजसपुत्तं । सोऊण तुमं इह इ समागया ता महाभाग ॥ ९४ ॥ उवणेहिं किंपि वसहिं चाउम्मासं जहा इह बसामो । पयमेत्तं पि न गंतुं कप्पति एत्तो तवस्सीणं ॥ ९५ ॥ अह पावपरिगएण वि अणज्जसंगतिसमुत्थदोसाओ । तेण भणियं भयवं नो वसिउं जुज्जए एत्थ ॥९६॥ जेण इह मंसासी पाणिवहाभिरयमाणसो कूरो । लोगो णज्जो खुद्दो न साहुसंवासजोगो त्ति ॥ ९७ ॥ तो मुणिवइणा भणियं अहो महाभाग किमिह लोगेण । जीवाण रक्खणं चिय कायव्वं सवजत्तेणं ॥ ९८ ॥ कुंथुंपिवीलियपडलाउलम्मि निव हरियसलिलकलियम्मि । भूमितले वचंता जइणो धम्माउ सस्संति ॥ ९९ ॥ ता दंसेसु निवासं साहिज्जं कुणसु अम्ह धम्मम्मि । उत्तमकुलप्पसूयाण दूसणं पत्थणाभंगो ॥ १०० ॥

---

जिनशासनसरोवरराजहंसनरनाथविमलयशःपुत्रम् । श्रुत्वा त्वामिह च समागतास्तस्मान्महाभाग ? ॥ ९४ ॥ उपनय किमपि वसतिं चातुर्मासं यथेह वसामः । पदमात्रमपि न गन्तुं कल्पत इतस्तपस्विनाम् ॥ ९५ ॥ अथ पापपरिगतेनाप्यनार्य्यसंगतिसमुत्थदोपात् । तेन भणितं भगवन्नो वसितुं युज्यतेऽत्र ॥ ९६ ॥ येनेह मांसाशी प्राणिवधाभिरतमानसः क्रूरः ! लोकोऽनार्य्यः क्षुद्रो न साधुसंवासयोग्य इति ॥ ९७ ॥ ततो मुनिपतिना भणितमहो महाभाग ? किमिह लोकेन । जीवानां रक्षणमेव कर्त्तव्यं सर्वयत्नेन ॥ ९८ ॥ कुन्थुपिपीलिकापटलाकुले नृप ? हरितसलिलकलिते । भूमितले व्रजन्तो यतयो धर्म्मात् स्रंसन्ति ॥ ९९ ॥ तस्माद् दर्शय निवासं साहाय्यं कुर्वस्माकं धर्मे । उत्तमकुलप्रसूतानां दूषणं प्रार्थनाभंगः ॥ १०० ॥

एवं सोचा नरवइसुएण भणियं कयंजलिउडेण । भयवं देमो वसहिं परं न एत्थावसंतेहिं ॥ १ ॥ तुम्हेहिं थेव मेत्तावि मज्झ लोयस्स धम्मसंबंधा । कहियव्वा नूनं कहा किंतु सकज्जम्मि जइयव्वं ॥ २ ॥ जम्हा धम्मे तुब्भं निज्जइ सव्वजीवपरिरक्खा । असच्चवयणविरत्ती परधणगिहिणीपरिच्चाओ ॥ ३ ॥ महुमज्जमंसपरिभोगवज्जणं निच्चमिंदियजओ य । इय करंते य धुवं सीयइ अम्हाण परिवारो ॥ ४ ॥ अहह कहं सकुलक्कमसंबद्धजिणिंदधम्मसव्वस्सं । विस्सुमरइ दुस्संगइगसिओ वि हु अज्जवि न एस ॥ ५ ॥ इय चिंततेण मुणीसरेण पडिवज्जिया ववत्था से । धम्मविवरमधम्मीजणम्मि जुत्तं चिय उवेहा ॥ ६ ॥ तो वंकचूलिणा पणमिऊण तेसिं समप्पिया वसही । सज्झायज्झाणणिरया ठिया य ते तत्थ भयवंतो ॥ ७ ॥

---

एवं श्रुत्वा नरपतिसुतेन भणितं कृताञ्जलिपुटेन । भगवन् २ दद्मो वसतिं परं नात्रावसद्भिः ॥ १ ॥ युष्माभिः स्तोकमात्रापि मम लोकस्य धर्मसम्बद्धा । कथितव्या नूनं कथा किन्तु स्वकार्ये यतितव्यम् ॥ २ ॥ यस्माद् धर्म्मे युष्माकं दृश्यते सर्वजीवपरिरक्षा । असत्यवचनविरतिः परधनगृहिणीपरित्यागः ॥ ३ ॥ मधुमद्यमांसपरिभोगवर्जनं नित्यमिन्द्रियजयश्च । इति कुर्वेति च ध्रुवं सीदत्यस्माकं परिवारः ॥ ४ ॥ अहह कथं स्वकुलक्रमसम्बद्धजिनेंद्रधर्म्मसर्वस्वम् । विस्मरति दुःसंगतिग्रसितोऽपि ह्यद्यापि नैषः ॥ ५ ॥ इति चिन्तयता मुनिपतिना प्रतिपन्ना व्यवस्था तस्य । धर्मविवरणमधर्मिजने युक्तमेवोपेक्षात् ॥ ६ ॥ ततो वंकचूलिना प्रणम्य तेभ्यः समर्पिता वसतिः । स्वाध्यायध्याननिरताः स्थिताश्च ते तत्र भगवन्तः ॥ ७ ॥

कुव्वंति विविहदुक्करतवचरणमणुत्तरं अहिज्जंति । नयभंगगहणमागममणुपरियट्टंति य तदत्थं ॥ ८ ॥ भावेंति भावणा पालिंति वयाइं निरइयाराइं । मुणिणो महाणुभावा सुगुरुसमीवट्ठिया संता ॥ ९ ॥ तत्तो संथववसथेवुप्पन्नभत्तिणा वंकचूलिणा । सम्मं णियपहाणपरियणो वाहरिऊण य इमं भणितो ॥ १० ॥ हंभो देवाणुपिया खत्तियकुलसंभवं ममं सोचा । माहणवणियप्पमुहो विसिट्ठलोगो इहं एही ॥ ११ ॥ तम्हा एत्तो न गिहम्मि जीवघाओ न मंसपरिभोगो । नो मज्जपाणकीला कायव्वा किंतु पल्लिबहिं ॥ १२ ॥ एवं च कए एएवि साहुणो दूरमुक्कविचिकिच्छा । गिण्हंति तुम्हभवणेसु भत्तपाणं जहावसरं ॥ १३ ॥ जह आणवेइ सामी तह काहामो त्ति तेहिं पडिवन्नं । वोलाविंति य दिवसे मुणिणो वि कज्जउज्जुत्ता ॥ १४ ॥

---

कुर्वन्ति विविधदुष्करतपश्चरणमनुत्तरमधीयते । नयभङ्गगहनमागममनुवर्त्तन्ते च तदर्थम् ॥ ८ ॥ भावयन्ति भावनाः पालयन्ति व्रतानि निरतिचाराणि । मुनयो महानुभावाः सुगुरुसमीपस्थिताः सन्तः ॥ ९ ॥ ततः संस्तववशस्तोकोत्पन्नभक्तिना वंकचूलिना । सम्यक् निजप्रधानपरिजनो व्याहृत्य चायं भणितः ॥ १० ॥ भो भो देवानुप्रियाः ? क्षत्रियकुलसंभवं मां श्रुत्वा । ब्राह्मणवणिक्प्रमुखो विशिष्टलोक इहैति ॥ ११ ॥ तस्मादितो गृहे न जीवघातो न मांसपरिभोगः । नो मद्यपानक्रीडा कर्तव्या किन्तु पल्लिबहिः ॥ १२ ॥ एवं च कृत एतेऽपि साधवो दूरमुक्तविजुगुप्साः । गृह्णन्ति युष्मद्भवनेषु भक्तपानं यथावसरम् ॥ १३ ॥ यथा ज्ञापयति स्वामी तथा करिष्याम इति तैः प्रतिपन्नम् । गमयन्ति च दिवसान् मुनयोऽपि कार्योद्युक्ताः ॥ १४ ॥

अह मुणिवइणा नाउं विहारकालं ममत्तरहिएण । सेज्जायरोत्ति विहिणा कहियमिमं वंकचूलिस्स ॥ १५ ॥ भो नरवइसुय ? तुहवसहिदाणसाहेज्जमेक्कमासज्ज । एत्तियदिणाइं वुच्छा एत्थं अम्हे समाहीए ॥ १६ ॥ एत्तो पुण पडिपुण्णा वट्टति अवही विहारसमओ य । संपत्तो लक्खिज्जति इमेहिं पच्चक्खलिंगेहिं ॥ १७ ॥ पेच्छसु वइउं क्कंता कच्छा उच्छूणमिन्तं जंतेहिं । सव्वन्तो सगडेहिं अक्कंता सयलमग्गावि ॥ १८ ॥ थेवसलिलाउ पव्वयनईउ वसभा वि जायदढथामा । सुक्कसलिला य पंथा गामा पच्चायचिक्खल्ला ॥ १९ ॥ ता भो महाजस तुमं परमुवयारि त्ति भन्नसे एवं । गामन्तरगमणट्ठा अणुजाणसु संपयं अम्हे ॥ २० ॥ जम्हा गोउलसारइयमेहभमरउलसउणिसुमुणीणं । हुन्ती अनियत्ताओ वसहीओ सहावओ चेव ॥ २१ ॥

---

अथ मुनिपतिना ज्ञात्वा विहारकालं ममत्वरहितेन । शय्यातर इति विधिना कथितमिदं वंकचूलेः ॥ १५ ॥ भो नरपतिसुत ? तव वसतिदानसहायमेकमासाद्य । इयद्दिनान्युषिता अत्र वयं समाधिना ॥१६॥ इतः पुनः प्रतिपूर्णा वर्त्ततेऽवधिर्विहारसमयश्च । संप्राप्तो लक्ष्यत एभिः प्रत्यक्षलिंगैः ॥ १७ ॥ पश्य व्रजितुं क्रान्ताः कक्षा इक्षूणामागच्छद्गच्छद्भिः सर्वतः शकटैराक्रान्ताः । सकलमार्गा अपि ॥१८॥ स्तोकसलिलाः पर्वतनद्यो वृषभा अपि जात दृढस्थामाः । शुष्कसलिलाश्च पन्थानो ग्रामाः प्रत्यागचिकिलाः ॥१९॥ तस्माद् भो महायशस्त्वं परमोपकारीति भण्यस एवम् । ग्रामान्तरगमनार्थमनुजानीहि सांप्रतमस्मान् ॥ २० ॥ यस्माद् गोकुलशारदिकमेघभ्रमरकुलशकुनिसुमुनीनाम् । भवन्त्योऽनियत्ता वसतयः स्वभावतश्चैव ॥ २१ ॥

इय भणिउं मुणिवइणो गंतुं संपट्ठिया सह मुणीहिं। तेसिमणुव्वयणट्ठा पल्लिवई पट्ठिओ ताहे ॥ २२ ॥ अह सूरीहिं समं चिय ताव गयो जाव नियसीमंतं। तो वंदिऊण सूरिं पयंपिउं एवमाढत्तो ॥ २३ ॥ भयवं एत्तो उवरिं एसा परदेससत्तिया सीमा। ता गच्छह वीसत्था अहंपि सगिहम्मि वच्चामि ॥ २४ ॥ वज्जरियं मुणिवइणा नरवइसुय जा तए सह ववत्था। धम्माकहणसरूवा आसी सा संपयं पुन्ना ॥ २५ ॥ ता तुज्झ अणुन्नाए धम्मुवएसं पयंपिउं किं पि। वंछ त्थि वच्छ वुच्चउ किंवा पुव्वं पिव निसेहो ॥२६॥ उच्चालियचलणा एत्थ सूरिणो केत्तियं कहिस्संति। इय चिंतिऊण तेणं पयंपियं भणसु सुकरं ति॥ २७ ॥ एत्थन्तरम्मि सूरी सविसेससुयोवओगओ णाउं। जेहिं नियमेहिं जायइ इमस्स धम्मुम्मुहा वुद्धी ॥ २८ ॥

---

इति भणित्वा मुनिपतयो गन्तुं संप्रस्थिताः सह मुनिभिः। तेषामनुव्रजनार्थं पल्लिपतिः प्रस्थितस्तदानीम् ॥ २२ ॥ अथ सूरिभिः सममेव तावद्गतो यावन्निजसीमान्तम्। ततो वन्दित्वा सूरिं प्रजल्पितुमेवमारब्धः ॥२३॥ भगवन्नित उपरिमेषा परदेशसत्का सीमा। तस्माद् गच्छत विश्वस्ता अहमपि स्वगृहं व्रजामि ॥२४॥ कथितं मुनिपतिना नरपतिसुत? या त्वया सह व्यवस्था। धर्म्मांकथनस्वरूपाऽऽसीत्स संप्रति पूर्णा ॥ २५ ॥ तस्मात् त्वदनुज्ञया धर्मोपदेशं प्रजल्पितुं किमपि। वांछास्ति वत्स? उच्यतां किं वा पूर्वमिव निषेधः ॥ २६ ॥ उच्चलितचरणा अत्र सूरयः कियत् कथयिष्यन्ति। इति चिन्तित्वा तेन प्रजल्पितं भण सुकरमिति ॥ २७ ॥ अत्रान्तरे सूरिः सविशेषश्रुतोपयोगतो ज्ञात्वा। यैर्नियमैर्जायतेऽस्य धर्म्मोन्मुखा बुद्धिः ॥ २८ ॥

जत्तो पच्चक्खं चिय उप्पज्जइ आवयापडिग्घाओ । मुणइ य एयं णियमा नियमाण फलं इमाण त्ति ॥२९॥ तो कहइ जहा भद्दय जीवे घाओ न ताव दायव्वो । जाव न सत्तट्ठपए पच्छा हुत्तं नियत्तो सि ॥ ३० ॥ एगो एसो नियमो वीओ पुण मा अनायनामाणि । भक्खिहसि फलाणि तुमं अच्चन्तछुहाभिभूओ वि ॥ ३१ ॥ तइओ पुण गरुयनरिंदअग्गमहिसी न कामियव्व त्ति । भोत्तव्वं नेव य कायमंसमेसो चउत्थो त्ति ॥ ३२ ॥ एए चउरोवि तुमं जा जीवं सव्वजत्तओ नियमे । पालेज्जसु एयं चिय जम्हा पुरिसाण पुरिसवयं ॥ ३३ ॥ किंच, माणेक्ककणग मुत्ताहलाइं महिलाण मंडणं एयं । पडिवन्नपालणं पुण सप्पुरिसाणं अलंकारो ॥ ३४ ॥ छिज्जउ सीसं परिगलउ संपया बंधवा वि विहडंतु । पडिवन्नपालणेसु पुरिसाण जं होइ तं होउ ॥ ३५ ॥

---

यस्मात् प्रत्यक्षमेवोत्पद्यत आपत्प्रतिघातः । जानाति चैष नियमान्नियमानां फलमेषामिति ॥ २९ ॥ ततः कथयति यथा भद्र ! जीवे घातो न तावद् दातव्यः । यावन्न सप्ताष्टौ पदान् पश्चाद् शीघ्रं निवृत्तोऽसि ॥ ३० ॥ एक एष नियमो द्वितीयः पुनर्माऽज्ञातनामानि । भक्षिष्यसि फलानि त्वमत्यन्तक्षुधाभिभूतोऽपि ॥ ३१ ॥ तृतीयः पुनर्गुरुनरेन्द्राग्रमहिषी न कामयितव्येति । भोक्तव्यं नैव च काकमांस-मेष चतुर्थ इति ॥ ३२ ॥ एतान् चतुरोऽपि त्वं यावज्जीवं सर्वयत्नान्नियमान् । पालयस्वैतदेव यस्मात् पुरुषाणां पुरुषव्रतम् ॥ ३३ ॥ किञ्च, माणिक्यकनकमुक्ताफलानि महिलानां मण्डनमेतत् । प्रतिपन्नपालनं पुनः सत्पुरुषाणामलंकारः ॥ ३४ ॥ छिनत्तु शीर्षं परिग-लतु संपदा बान्धवा अपि विघटन्ताम् । प्रतिपन्नपालनेषु पुरुषाणां यद्भवति तद्भवतु ॥ ३५ ॥

सदसदविसेसणं पि हु एत्तोच्चिय वुच्चइ इह नराणं। अन्नह सममिम पंचिंदियत्तणे होज्ज कह भेदो ॥ ३६ ॥
इय मुणिवइणा भणिए सम्ममभिग्गहचउक्कमादाय। काऊणं च पणामं भिल्लवई पडिगतो सगिहं ॥ ३७ ॥
सिस्सजणेण परिवुडा मुणिवइणो वि य जहाभिमयदेसं। इरियासमिइजुत्ता सणियं गंतुं पयट्टत्ति ॥ ३८ ॥
इयरस्स य पावपओयणेसु अणवरयकरणपउणस्स। नाणाविहवसणसयाउलस्स वच्चन्ति दियहाइं ॥ ३९ ॥
अह अन्नया कयाई अत्थाणीमंडवे निसण्णेण। तेणं पयंपियमिमं चिरमिह ववसायरहियस्स ॥ ४० ॥ वोलंति
वासरा मे ता भो पुरिसा पुरं व नगरं वा। गामं सत्थं वुचियं सव्वत्थ पलोइउं एह ॥ ४१ ॥ जेण तयं लुंटेउं
वच्चामो सेसकज्जचाएण। महुमहणं पि विमुंचति लच्छी ववसायपरिहीणं ॥ ४२ ॥

---

सदसद्विशेपणमपि ह्यत एवोच्यत इह नराणाम्। अन्यथा समे पञ्चेन्द्रियत्वे भवेत् कथं भेदः ॥३६॥ इति मुनिपतिना भणिते सम्यगभिग्रहचतुष्कमादाय। कृत्वा च प्रणामं भिल्लपतिः प्रतिगतः स्वगृहम् ॥ ३७ ॥ शिष्यजनेन परिवृता मुनिपतयोऽपि यथाभिमतं देशम्। ईर्यासमितियुक्ताः शनैर्गन्तु प्रवृत्ता इति ॥३८॥ इतरस्य च पापप्रयोजनेष्वनवरतकरणप्रगुणस्य। नानाविधव्यसनशताकुलस्य व्रजन्ति दिवसाः ॥ ३९ ॥ अथान्यदा कदाचिदास्थानीमण्डपे निषण्णेन। तेन प्रजल्पितमिदं चिरमिह व्यवसायरहितस्य ॥ ४० ॥ गच्छन्ति वासरा मे तस्माद् भो पुरुषाः पुरं वा नगरं वा। ग्रामं सार्थं वोचितं सर्वत्र प्रलोकितुमित ॥ ४१ ॥ येन तकं लुण्ठितुं व्रजाम शेषकार्यत्यागेन। मधुमथनमपि विमुञ्चति लक्ष्मीर्व्यवसायपरिहीनम् ॥ ४२ ॥

आयन्निऊण एवं तहत्ति पडिसुणियसासणा झत्ति। पुरिसा जहुत्तठाणाइं हेरिऊणागया बिन्ति ॥ ४३ ॥ नाह निसामेहि महासत्थो बहुसारवत्थुपडिपुण्णो। अमुगपहेण एही दोण्हं दिवसाणमुवरिम्मि ॥ ४४ ॥ ता जइ वद्वावंधं काउं अच्छह अणागयं तुब्भे। ता पावेह जहिच्छियलच्छी विछडुमचिरेण ॥ ४५ ॥ एवं सोचा कइव-यदिणाणमुचियं सहायमादाय पाहेज्जं। निजपरिजणपरिकिन्नो पल्लिवती तं गतो ठाणं॥ ४६ ॥ सो पुण सत्थो अवसउणदोसओ तं पहं विमोत्तूण। मग्गंतरेण लग्गो पत्तो य समीहियपएसं ॥ ४७ ॥ भिल्लाहिवो य तप्प-हपलोयणं कुणति अणिमिसच्छीहिं। नवरं पुव्वाणीयं संबलगं निट्ठियं सव्वं ॥ ४८ ॥ ताहे विच्छायमुहो पीडि-ज्जंतो छुहाइपडिबलिओ। पत्तो पल्लिसमीवे तत्तो गंतुं अवारंतो ॥ ४९ ॥

---

आकर्ण्यैवं तथेति, प्रतिश्रुतशासना झटिति। पुरुषा यथोक्तस्थानानि दृष्ट्वागता ब्रुवन्ति ॥ ४३ ॥ नाथ? निशामय महासार्थो बहुसा-रवस्तुप्रतिपूर्णः। अमुना पथाऽऽगमिष्यति द्वयोर्दिवसयोरुपरि ॥ ४४ ॥ तस्माद्यदि कक्षाबद्धं कृत्वा तिष्ठताऽनागते यूयम्। तदा प्राप्नुत यथेच्छितलक्ष्मीं विशदामचिरेण॥४५॥ एवं श्रुत्वा कतिपयदिनानामुचितं सहायमादाय पाथेयम्। निजपरिजनपरिकीर्णः पल्लिपतिस्तं गतः स्थानम् ॥ ४६ ॥ स पुनः सार्थोऽपशकुनदोषात् तं पन्थानं विमुच्य। मार्गान्तरेण लग्नः प्राप्तश्च समीहितप्रदेशम् ॥ ४७ ॥ भिल्लाधि-पश्च तत्पथप्रलोकनं करोत्यनिमिषाक्षिभिः। नवरं पूर्वानीतं संवलकं निष्ठितं सर्वम् ॥ ४८ ॥ तदा विच्छायमुखः पीड्यमानः क्षुधया प्रति-वलितः। प्राप्तः पल्लिसमीपे ततो गन्तुमसमर्थः ॥ ४९ ॥

सिसिरतरुछायाए नवकिसिलयसत्थरे समकिलंतो । पमुक्कनीसहंगो विस्सामं काउमाढत्तो ॥ ५० ॥ परिजणपुरिसा य गया सव्वतो कंदमूलफलहेउं । अह एगत्थ पएसे तेहिं अवलोयमाणेहिं ॥ ५१ ॥ फारफलभारभज्जिरसाहासयसंकुलो महासाही । किंपागनामधेओ दिट्ठो अच्चन्ततुट्ठेहिं ॥५२॥ गहियाणि जहिच्छाए फलाणि तत्तो विपाकपिंगाणि । उवणीयाणि य सिरिवंकचूलिणो विणयपणएहिं ॥ ५३ ॥ भणियं च तेण हंतो फलाणि एयाणि किमभिहाणाणि । दीसन्तसुंदराइं न कयाइवि दिट्ठपुव्वाइं ॥ ५४ ॥ तेहिं भणियं सामी न याणिमो नामधेयमेयाणं । पागवसेणं केवलमणुमाणेमो रसं पवरं ॥ ५५ ॥ पल्लिपइणा वुत्तं हवंति जइ अमयनिविसेसाणि । अमुणियनामाणि इमाणि तहवि भुंजामि न फलाणि ॥ ५६ ॥

---

शिशिरतरुच्छायायां नवकिशलयसंस्तरे समक्लान्तः । प्रमुक्तो निःसहाङ्गो विश्रामं कर्तुमारब्धः ॥ ५० ॥ परिजनपुरुषाश्च गताः सर्वतः कन्दमूलफलहेतोः । अथैकत्र प्रदेशे तैरवलोकमानैः ॥ ५१ ॥ स्फारफलभारभंगुरशाखाशतसंकुलो महाशाखी । किंपाकनामधेयो दृष्टोऽत्यन्ततुष्टैः ॥ ५२ ॥ गृहीतानि यथेच्छं फलानि ततो विपाकपिङ्गानि । उपनीतानि च श्रीवंकचूलये विनयप्रणतैः ॥ ५३ ॥ भणितं च तेन हन्त फलान्येतानि किमभिधानानि । दृश्यमानसुन्दराणि न कदाचिदपि दृष्टपूर्वाणि ॥ ५४ ॥ तैर्भणितं स्वामिन्? न जानीमो नामधेयमेतेषाम् । पाकवशेन केवलमनुमिनुमो रसं प्रवरम् ॥ ५५ ॥ पल्लिपतिनोक्तं भवन्ति यद्यमृतनिर्विशेषाणि । अज्ञातनामानीमानि तथापि भुंजामि न फलानि ॥ ५६ ॥

तच्चेलावत्तगमेगमेव मोत्तुं च छुहकिलंतेहिं । आढत्ताइं ताइं भोत्तुं पुरिसेहिं सेसेहिं ॥ ५७॥ मुहमहुरेसु तेसु विसएसुं व परिणइम्मि विरसेसुं । भुंजेउं सुत्तेसुं विसवसओ चेयणा नट्ठा ॥५८॥ अह पमिल्लाणच्छिजुया अन्तो च्चिय मुज्झमाणनिस्सासा । निद्दाइउं पवत्ता सुहा सेज्जाए पसुत्तव्व ॥ ५९ ॥ अह तज्जीवं घेत्तुं चोरो इव दिणयरो गतो अत्थं । तग्गमणं पिव पक्खीहिं पिसुणियं वाउलरवेण ॥ ६० ॥ कुणमाणो जीयलोयं कुंकुमरसरंजियं व सव्वत्तो । कयचक्कवायविहुरो संझाराओ पवित्थरिओ ॥ ६१ ॥ गवलगुलियासमप्पहपडसंछाइयतणुव्व पंसुलिया । ताविच्छगुच्छकसिणा वियंभिया तिमिररिंछोली ॥ ६२ ॥ निच्चंवि राहुगसिज्जंतचंदप्पभट्ठसगलपडलं व । एक्कसरियाए सव्वत्थ पसरियं तारयाजालं ॥ ६३ ॥

---

तच्चैलावर्त्तकमेकमेव मुक्त्वा च क्षुधाक्रान्तैः । आरब्धानि तानि भोक्तुं पुरुषैः शेषैः ॥ ५७ ॥ मुखमधुरेषु तेषु विषयेष्विव परिणतौ विरसेषु । भुक्त्वा सुप्तेषु विषवशतश्चेतना नष्टा ॥ ५८ ॥ अथ प्रम्लानाक्षियुगला अन्त एवोज्झ्यमाननिःश्वासाः । निद्रायितुं प्रवृत्ताः सुखात् शय्यायां प्रसुप्ता इव ॥ ५९ ॥ अथ तज्जीवं गृहीत्वा चौर इव दिनकरो गतोऽस्तम् । तद्गमनमपि च पक्षिभिः पिशुनितं व्याकुलरवेण ॥ ६० ॥ कुर्वाणो जीवलोकं कुंकुमरसरंजितमिव सर्वत्र । कृतचक्रवाकविधुरः संध्यारागः प्रविस्तीर्ण्णः ॥ ६१ ॥ गवलगुलिकासमप्रभापटसंच्छादिततनुरिव पांशुलिता । तापिच्छगुच्छकृष्णा विजृम्भिता तिमिरर्क्षपक्तिः ॥ ६२ ॥ नित्यमपि राहुग्रस्यमानचन्द्रप्रभ्रष्टशुक्लपटलमिव । एकस्मिन्नेव समये सर्वत्र प्रसृतं तारकाजालम् ॥ ६३ ॥

तो तिजयविजयदिक्खियवम्महमुणिसयणफलिहफलयं व । तियसभवणंगणुच्छंगपुन्नकलहो य कलसो व ॥६४॥ गयणसरोवरवियसंतसहसपत्तं व रयणिरमणीए । रोयणत्थो रथचक्को व्व उग्गओ तुहिणकिरणो वि ॥ ६५ ॥ ताहे गमणणुकूलं वेलं कलिऊण पल्लिनाहेण । सुत्तत्ति मंनमाणेण बोहिया ते गुरुगिराए ॥ ६६ ॥ पुणरुत्तं जंपिया वि हु न जाव थेवंपि देन्ति पडिवयणं । ताव समीवे ठाऊण निउणमवलोइया सव्वे ॥ ६७ ॥ निन्नट्ठजीवियव्वे सव्वे दट्ठूण चिंतियं तेण । अमुणियनामफलाणं उवयोगफलं अहो एयं ॥ ६८ ॥ अहमवि एयमवत्थं इमाइं भोत्तुं फलाणि वच्चंतो । जइ निक्कारणवच्छलमुणिवइनियमो न मे हुन्तो ॥ ६९ ॥ ते गुरुणो गुणनिहिणो तमतरुसिहिणो जयंतु जा जीवं । जेहिं नियमप्पदाणच्छलेण जीयं च मे दिन्नं ॥ ७० ॥

---

ततस्त्रिजगद्विजयदीक्षितमन्मथमुनिस्वजनपरिघफलकमिव । त्रिदशभवनाङ्गनोत्संगपूर्णकलभ इव कलश इव ॥ ६४ ॥ गगनसरोवरविकसत्सहस्रपत्रमिव रजनिरमण्या । रोपनार्थो रथचक्र इवोद्गतस्तुहिनकिरणोऽपि ॥ ६५ ॥ तदा गमनानुकूलां वेलां कलयित्वा पल्लिनाथेन । सुप्ता इति मन्यमानेन बोधितास्ते गुरुगिरया ॥ ६६ ॥ पुनरुक्तजल्पिता अपि हि न यावत् स्तोकमपि ददति प्रतिवचनम् । तावत्समीपे स्थित्वा निपुणमवलोकिताः सर्वे ॥६७॥ निर्नष्टजीवितव्यान् सर्वान् दृष्ट्वा चिन्तितं तेन । अज्ञातनामफलानामुपयोगस्य फलमहो एतत् ॥ ६८ ॥ अहमप्येतामवस्थामिमानि भुक्त्वा फलान्यव्रजिष्यत् । यदि निष्कारणवत्सलमुनिपतिनियमो न ममाऽभविष्यत् ॥ ६९ ॥ ते गुरवो गुणनिधयस्तमस्तरुशिखिनो जयन्तु यावज्जीवम् । यैर्नियमप्रदानच्छलेन जीवितं च मह्यं दत्तम् ॥७०॥

इय सुचिरं गुरुमुववूहिऊण अच्चन्तसोगविहुरंगो । तप्पहरणाइउवगरणमेगठाणम्मि ठविऊण ॥ ७१ ॥ भडचडयपरिखित्तो पुव्विं भमिऊण पल्लिमज्झम्मि । कह संपइ एगागी तत्थवि मयसव्वपरिवारो ॥ ७२ ॥ दंसिस्सामि मुहमहं लोगाणं पयडमेव वच्चंतो । इय चिंततो चलिओ जाए रयणीए मज्झम्मि ॥ ७३ ॥ अह सिग्घं चिय पत्तो निययगिहे खग्गमेत्तयसहाओ । केणावि अनज्जंतो सेज्जाभवणम्मि य पविट्ठो ॥ ७४ ॥ पेच्छइ य पज्जलन्तप्पईवपसरन्तकंतिपडलेण । सेज्जाए नियभज्जं पुरिसेण समं सुहपसुत्तं ॥ ७५ ॥ ताहे भालयलसमुल्लसंतरंगन्ततिबलिविगरालो । दन्तग्गभागनिट्ठुरदट्ठोट्ठो गाढकोवेण ॥ ७६ ॥ विप्फारियफारारुणनयणुब्भडकंतिपडलपल्लवियं । आयढिऊण खग्गं चिंतेउमिमं समाढत्तो ॥ ७७ ॥

---

इति सुचिरं गुरुमुपवृंह्य अत्यन्तशोकविधुराङ्गः । तत्प्रहरणाद्युपकरणमेकस्थाने स्थापयित्वा ॥ ७१ ॥ भटचटकपरिवृत्तः पूर्वं भ्रान्त्वा पल्लिमध्ये । कथं संप्रत्येकाकी तत्रापि मृतसर्वपरिवारः ॥ ७२ ॥ दर्शयिष्यामि मुखमहं लोकानां प्रकटमेव व्रजन् । इति चिन्तन् चलितो जाते रजन्या मध्ये ॥ ७३ ॥ अथ शीघ्रमेव प्राप्तो निजगृहे खड्गमात्रसहायः । केनाप्यदृश्यमानः शय्याभवने च प्रविष्टः ॥ ७४ ॥ पश्यति च प्रज्वलत्प्रदीवप्रसरत्कान्तिपटलेन । शय्यायां निजभार्यां पुरुषेण समं सुखप्रसुप्ताम् ॥ ७५ ॥ तदा भालतलसमुल्लसद्रंगत्त्रिवलिविकरालः । दन्ताग्रभागनिष्ठुरदष्टोष्ठो गाढकोपेन ॥ ७६ ॥ विस्फारितस्फारारुणनयनोद्भटकान्तिपटलपल्लवितम् । आकृष्य खड्गं चिन्तितुमिदं समारब्धः ॥ ७७ ॥

को अज्ज एस कीणासवयणमणुसरिउमिच्छइ वरागो । जे मइ जीवंते वि हु मम भज्जं सेवइ अणज्जो ॥७८॥ किं वा इमावि पावा मम भज्जा चत्तलज्जमज्जाया । पुरिसाहमेण केण वि सद्धिं एवं पसुत्तत्ति ॥ ७९ ॥ एत्थ ठियाणि दोन्नि वि इमाणि खंडेमि मंडलग्गेण । अहवा लोयविरुद्धे इत्थीए वहे कहं एस ॥ ८० ॥ विक्कंतुक्कडपरचक्ककरिघडाडोवविहडणपयंडो । वावारिज्जइ बहुसमरपत्तकित्ती महाखग्गो ॥ ८१ ॥ तो एयं चिय एक्कं हणामि इति जाव देइ नो घायं । ता चिरगहियाभिग्गहमणुसुमरति झत्ति स महप्पा ॥ ८२ ॥ ताहे पच्चोसक्किय सत्तट्ठप्पयाइं जाव पहावति । उवरिं पीढिउखलणे खग्गेण खडक्कियं ताव ॥ ८३ ॥ अह भाउजायादेहभारपीडिज्जमाणबाहाए । विहडंतनिविडनिद्दाभराए भगिणीए तं सोच्चा ॥ ८४ ॥

---

कोऽद्यैष कीनाशवदनमनुसर्त्तुमिच्छति वराकः । यो मयि जीवत्यपि हि मम भार्यां सेवतेऽनार्य्यः ॥ ७८ ॥ किं वेयमपि पापा मे भार्या त्यक्तलज्जामर्य्यादा । पुरुषाधमेन केनापि सार्द्धमेवं प्रसुप्तेति ॥ ७९ ॥ अत्र स्थितौ द्वावपीमौ खण्डयामि मण्डलाग्रेण । अथवा लोकविरुद्धे स्त्रिया वधे कथमेषः ॥ ८० ॥ विक्रान्तोत्कटपरचक्रकरिघटाटोपविघटनप्रचण्डः । व्याप्रीयते बहुसमरप्राप्तकीर्त्तिर्महाखड्गः ॥ ८१ ॥ तस्मादेनमेवैकं हन्मीति यावद् ददाति नो घातम् । तावच्चिरगृहीताभिग्रहमनुस्मरति झटिति स महात्मा ॥ ८२ ॥ तदा प्रत्यावृत्य सप्ताष्टपदानि यावत् प्रधावति । उपरि पीढिकोखलने खड्गेन खटत्कृतं तावत् ॥ ८३ ॥ अथ भ्रातृजायादेहभारपीड्यमानबाह्वा । विघटमाननिविडनिद्राभरया भगिन्या तच्छ्रुत्वा ॥ ८४ ॥

चिरकालं जीवउ मज्झ भाउगो वंकचूलिनामो सो । सज्झसवसप्पवुद्धाए तीए इ विजंपियं सहसा ॥ ८५ ॥ आयन्निऊण एवं विचिंतियं वंकचूलिणा ताहे । अहह कहं मम भगिणी सा एसा पुप्फचूलत्ति ॥ ८६ ॥ जीए अचंतगाढपणयवसओ ममं सरंतीए । सुहिसयणजणणिजणगाइणो वि पुव्वपरिचत्ता ॥ ८७ ॥ हा कहमेय-मियाणिं हणिऊणं निययजीवियब्भहियं । अइगरुयपावकारी जीवंतो हं सयमलज्जो ॥ ८८ ॥ कत्थ व पसत्थ-तित्थे गयस्स केणव तवोविसेसेण । हुंता सुद्धी भइणीविणासजायाउ पावाओ ॥ ८९ ॥ इति चिन्तिऊण भइणीए कंठमासज्ज मंनुभरविहुरो । रोविउमारद्धो णिययपावचेट्ठाए संतत्तो ॥ ९० ॥ कह कह वि पुप्फचूलाए विम्हयपक्खित्तचित्तपसराए । उववेसिऊण सेज्जाए वंकचूली इमं भणितो ॥ ९१ ॥

---

चिरकालं जीवतु मे भ्राता वंकचूलिनामा सः । साध्वसावशप्रवुद्धया तया चापि जल्पितं सहसा ॥८५॥ आकर्ण्यैवं विचिन्तितं वंक-चूलिना तदानीम् । अहह कथं मम भगिनी सैषा पुष्पचूलेति ॥ ८६ ॥ ययात्यन्तगाढप्रणयवशतो मां सरन्त्या । सखिस्वजनजननी जनकादयोऽपि पूर्वं परित्यक्ताः ॥ ८७ ॥ हा कथमेतामिदानीं हत्वा निजजीविताभ्यधिकाम् । अतिगुरुपापकारी जीवन्नहं स्वयमलज्जः ॥ ८८ ॥ कुत्र वा प्रशस्ततीर्थे गतस्य केन वा तपोविशेषेण । भविष्यन्ती विशुद्धिर्भगिनीविनाशजातात् पापात् ॥ ८९ ॥ इति चिन्तित्वा भगिन्याः कण्ठमासाद्य मन्युभरविधुरः । रोदितुमारब्धो निजपापचेष्टया संतप्तः॥९०॥ कथं कथमपि पुष्पचूलया विस्मयप्रक्षिप्तचित्तप्रसरया । उपवेश्य शय्यायां वंकचूलिरयं भणितः ॥ ९१ ॥

भाउग विच्छायमुहो तत्थ वि नीसेसपरिजणविहीणो । तत्थवि पछन्नो च्चिय गिहे किमेवं पविट्ठोऽसि ॥९२॥ किं वा जंबूणयसेलसारसत्तो वि गरुयपयई वि । सहसच्चिय मं अवलंबिऊण एवं परुन्नो सि ॥ ९३ ॥ किंच तुह आगमणम्मि पडिभवणदुवारवद्धधवलधया । हल्लप्फलियजणाउलरछा पल्ली इमा हुंता ॥ ९४ ॥ अच्चंताणिट्ठसमुब्भवे वि गाढावयानिवडणे वि । दूरे परुन्नमन्नह मुहरागो वि हु न ते हुंतो ॥ ९५ ॥ तो तेण तीए कहियो सव्वो परियणविणासवुत्तन्तो । परपुरिसबुद्धिवावारियासिपडिखलणवत्ता वि ॥ ९६ ॥ एवं च जंपियं भइणि नेव सोएमि परिजणविणासं । सोएमि पुण इमं जं तुमं मए इय हया हुंता ॥ ९७ ॥ एत्तोच्चिय इण्हिं पि हु वइयरमिममेव सुमरमाणो हं । बाहप्पवाहमित्तं खलिउं न तरामि नयणेसु ॥ ९८ ॥

---

भ्रातः ! विच्छायमुखस्तत्रापि निःशेषपरिजनविहीनः । तत्रापि प्रच्छन्न एव गृहे किमेवं प्रविष्टोऽसि ॥ ९२ ॥ किम्वा जाम्बूनदशैलसारसत्त्वोऽपि गुरुप्रकृतिरपि । सहसैव मामवलंब्यैवं प्ररुदितोऽसि ॥ ९३ ॥ किंच तवागमने प्रतिभवनद्वारबद्धधवलध्वजा । त्वरिताजनाकुलरथ्या पल्लिरियं भवति ॥ ९४ ॥ अत्यन्तानिष्टसमुद्भवेऽपि गाढापन्निपतनेऽपि । दूरे प्ररुदितमन्यथा मुखरागोऽपि हि न ते भविता ॥ ९५ ॥ ततस्तेन तस्यै कथितः सर्वः परिजनविनाशवृत्तान्तः । परपुरुषबुद्धिव्यापारितासिप्रतिस्खलनवार्त्तापि ॥ ९६ ॥ एवं च जल्पितं भगिनि ? नैव शोचामि परिजनविनाशम् । शोचामि पुनरिदं यत्त्वं मयेति हता भविता ॥ ९७ ॥ अत एवेदानीमपि हि व्यतिकरमिदमेव स्मर्यमाणोऽहम् । वाष्पप्रवाहमात्रं स्खलितुं न शक्नोमि नयनयोः ॥ ९८ ॥

केण पुण कारणेणं एवं काऊण पुरिसनेवच्छं । भाउजायाए समं भइणि पसुत्तासि कहसु ममं ॥ ९९ ॥ तीए भणियं भाउग तुमए गयम्मि विजयजत्ताए । एत्थागया नडा नच्चणट्ठया तेहिं पुट्ठा हं ॥ १००० ॥ अच्छति इह पल्लिवती न व त्ति तो चिंतियं मए एयं । जइ नत्थि त्ति कहिस्सं ता सोचा कोइ रिपुपुरिसो ॥ १ ॥ साहिस्सति सीमालाणं तुम्हपडिबद्धगाढवेराणं । ते पुण लद्धोगासा मा पल्लिं विद्दविस्संति ॥ २ ॥ तेण मए भणियमिमं अच्छति सो पल्लिमउडमाणिक्को । सयमेव वंकचूली नवरं कज्जन्तरासत्तो ॥ ३ ॥ कं वेलं पेच्छणयं दंसेमो मे पयंपियं तेहिं । वुत्तं च मए रयणीए जेण सो णाउलो नियइ ॥ ४ ॥ पारद्धं तेहिं तहेव तयणु कयपुरिसचारुनेवच्छा । भाउजायाए समं तुमं व तहियं निसन्नाहं ॥ ५ ॥

---

केन पुनः कारणेनैवं कृत्वा पुरुषनैपथ्यम् । भ्रातृजायया समं भगिनि[2] प्रसुप्तासि कथय माम् ॥ ९९ ॥ तया भणितं भ्रातस्त्वयि-गते विजययात्रायै । अत्रागता नटा नर्तनार्थं तैः पृष्टाहम् ॥ १००० ॥ आस्त इह पल्लिपतिर्नवेति ततश्चिन्तितं मयैतत् । यदि नास्तीति कथयिष्यामि तदा श्रुत्वा कोऽपि रिपुपुरुषः ॥ १ ॥ कथयिष्यति सीमालानां युष्मत्प्रतिबद्धगाढवैराणाम् । ते पुनर्लब्धावकाशा मा पल्लिं विद्रविष्यन्ति ॥ २ ॥ तेन मया भणितमिदमास्ते स पल्लिमुकुटमाणिक्यः । स्वयमेव वंकचूलिर्नवरं कार्यान्तरासक्तः ॥ ३ ॥ कां वेलां प्रेक्षणकं दर्शयामो मह्यं प्रजल्पितं तैः । उक्तं च मया रजन्यां येन सोऽनाकुलः पश्यति ॥ ४ ॥ प्रारब्धं तैस्तथैव तदनु कृतचारुपुरुष-नैपथ्या । भ्रातृजायया समं त्वमिव तत्र निषण्णाहम् ॥ ५ ॥

अह मज्झरत्तसमए उचियं दाउं नडाण दायव्वं । निद्दाघुम्मिरनयणा इमाए सद्धिं पसुत्ताम्हि ॥ ६ ॥ एत्तो उवरिं न मुणेमि किंपि नवरं खडक्कयं सोचा । जीवउ भाया सुचिरं ति जंपमाणी विउद्धा हं ॥ ७ ॥ एवं सोचा ईसिं पसन्तसोगो पुणो पुणो तेसिं । नियमाणं फलं एयं ति चिन्तयन्तो गमति कालं ॥ ८ ॥ अह परिवारविरहओ पुरागरे लुंटिउं अपारन्तो । दट्ठूण परियणं सीयमाणमुप्पन्नसंतावो ॥ ९ ॥ खत्तखणणं विमोत्तूणं एत्तो मे नत्थि जीवणोवाओ । इय निच्छिऊण एगो वि सो गतो नयरिमुज्जेणिं ॥ १० ॥ धणवन्तलोयमन्दिरपवेसनीहरणदारपडिदारे । पेहित्ता य पविट्ठो मुसणट्ठा गरुयगेहम्मि ॥ ११ ॥ अह तम्मि नवरि दीसंतबाहिराकारसुंदरे सोचा । कलहं परोप्परं महिलियाण चिंतेउमारद्धो ॥ १२ ॥

---

अथ मध्यरात्रसमय उचितं दत्वा नटेभ्यो दातव्यम् । निद्राघूर्मितनयनानया सार्द्धं प्रसुप्ताऽस्मि ॥ ६ ॥ इत उपरि न जानामि किमपि केवलं खटत्कृतं श्रुत्वा । जीवतु भ्राता सुचिरमिति जल्पन्ती विबुद्धाहम् ॥ ७ ॥ एवं श्रुत्वेषत् प्रशान्तशोकः पुनः पुनस्तेषाम् । नियमानां फलमेतदिति चिन्तयन् गमयति कालम् ॥८॥ अथ परिवारविरहतः पुराकरान् लुण्टितुमशक्नुवन् । दृष्ट्वा परिजनं सीदन्तमुत्पन्नसंतापः ॥ ९ ॥ खात्रखननं विमुच्येतो मे नास्ति जीवनोपायः । इति निश्चित्यैकोऽपि स गतो नगरीमुज्जयिनीम् ॥ १० ॥ धनवल्लोकमन्दिरप्रवेशनिस्सरणद्वारप्रतिद्वाराणि । दृष्ट्वा च प्रविष्टो मोषणार्थाय गुरुगेहे ॥ ११ ॥ अथ तस्मिन् केवलं दृश्यमानबाह्याकारसुन्दरे श्रुत्वा । कलहं परस्परं महिलानां चिन्तितुमारब्धः ॥ १२ ॥

नूणं न तह बहुधणं अत्थि गिहे एत्थ कलहकरणाओ। छुल्लुच्छलंति ऊणाइं जेण लोए वि पयडमिणं ॥१३॥ संते पि हु थोयधणे मुट्ठे का होज्ज मज्झ संपत्ती। नहि बिंदुणा भरिज्जइ अइगरुएणावि नईनाहो ॥ १४ ॥ इय तं मोत्तूण घरं स महप्पा सयलनयरिपयडाए। गणियाए देवदत्ताए मंदिरम्मि गतो झत्ति ॥ १५ ॥ खत्तं च पाडिऊणं कयकरणो रयणरम्मभित्तिम्मि। वासभवणे पविट्ठो अच्छिन्नजलंतदीवम्मि ॥ १६ ॥ दिट्ठा य सुहप-सुत्ता सेज्जाए गाढकोढसुढिएण। एगेण नरेण समं सा गणिया भीसणंगेण ॥ १७ ॥ अहह कहं एवंविहधण वित्थाराविं पेछ दविणट्ठा। कुट्ठिं पि अभिगमंती एसा इय वट्टति अणज्जा ॥ १८ ॥ अहवा अहं अणज्जो जो एत्तो वि हु धणं समीहामि। ता पज्जतं इमिणा परमिस्सरगिहमणुसरामि ॥ १९ ॥

---

नूनं न तथा बहुधनमस्ति गृहेऽत्र कलहकरणात्। क्षुल्ला उच्छलन्त्यूना येन लोकेऽपि प्रकटमिदम् ॥१३॥ सत्यपि हि स्तोकधने मुषिते का भवेन्मे संपत्तिः। नहि बिन्दुना भ्रियतेऽतिगुरुणापि नदीनाथः ॥ १४ ॥ इति तं मुक्त्वा गृहं स महात्मा सकलनगरीप्रकटायाः। गणि-काया देवदत्ताया मन्दिरे गतो झटिति ॥ १५ ॥ खात्रं च पाडित्वा कृतकरणो रत्नरम्यभित्तौ। वासभवने प्रविष्टोऽछिन्नज्वलद्दीपे ॥ १६ ॥ दृष्टा च सुखं प्रसुप्ता शय्यायां गाढकोष्ठसुदिग्धेन। एकेन नरेण समं सा गणिका भीषणाङ्गेन ॥ १७ ॥ अहह कथमेवंविधधन विस्तरापि पश्य द्रविणार्थम्। कुष्ठिमप्यभिगच्छन्त्येषेति वर्त्ततेऽनार्य्या ॥ १८ ॥ अथवाहमनार्य्यो य इतोऽपि हि धनं समीहे। तस्मा-त्पर्य्याप्तमनया परमेश्वरगृहमनुसरामि ॥ १९ ॥

ताहे समग्गवणियप्पहाणसेट्ठिस्स मंदिरे खत्तं । पाडित्ता सणियगती झत्ति पविट्ठो भवणमज्झे ॥ २० ॥ पेच्छइ च तहिं सेट्ठिं करसंपुडधरियखडियसंपुडयं । पुत्तेण समं लेक्खगमणुक्खणं चिय करेमाणं ॥२१॥ एत्थ य एगम्मि विसोयगम्मि कहमवि अपुज्जमाणम्मि । रुट्ठो जंपति रे रे कुलकवलणकयन्त ॥ २२॥ अवसर दिट्ठिपहाओ मा गेहे मज्झ वसिहिसि खणमवि । एत्तियमेत्तत्थखयं नाहं पिउणो वि हु सहिस्सं ॥ २३ ॥ एवं पयंपमाणं उब्भडकोवारुणच्छिविछोहं । तं पेच्छिऊण चिंतति पल्लिवई विम्हिओ संतो ॥ २४ ॥ जो एगविसोयगविप्पणासमवलोइऊण पुत्तमवि । निस्सारिउं समीहति सो जइ मुसियं गिहं मुणति ॥ २५ ॥ ता नूणं मरइ धणविप्पणासवसजायहियसंघट्टो । एवं च किविणपिउणो न मारणं जुज्जइ इमस्स ॥ २६ ॥

---

तदा समग्रवणिक्प्रधानश्रेष्ठिनो मन्दिरे खात्रम् । पाडित्वा शनैर्गतिर्झटिति प्रविष्टो भवनमध्ये ॥ २० ॥ प्रेक्षते च तत्र श्रेष्ठिनं करसंपुटधृतखडिकासंपुटकम् । पुत्रेण समं लेख्यकमनुक्षणमेव कुर्वाणम् ॥ २१ ॥ अत्र चैके विशोपके कथमप्यपूर्यमाने । रुष्टः श्रेष्ठी जल्पति रे रे कुलकवलनकृतान्त ! ॥२२॥ अपसर दृष्टिप्रभातो मा गृहे मम वत्स्यसि क्षणमपि । इयन्मात्रमर्थक्षयं नाहं पितुरपि हि सहिष्ये ॥२३॥ एवं प्रजल्प्यमानमुद्भवकोपारुणाक्षिविक्षोभम् । तं प्रेक्ष्य चिन्तति पल्लिपतिर्विस्मितः सन् ॥ २४ ॥ य एकविशोपकविप्रनाशमवलोक्य पुत्रमपि । निस्सारयितुं समीहते स यदि मुषितं गृहं जानाति ॥ २५ ॥ तदा नूनं म्रियते धनविप्रनाशवशजातहृदयसंघट्टः । एवं च कृपणपितुर्न मारणं युज्यतेऽस्य ॥ २६ ॥

वच्चामि मंदिरे नरवइस्स गिण्हामि वंछियं तत्तो । न हु विरमइ तण्हा वारणस्स तणुवियरनीरेण ॥ २७ ॥ एवं परिभावेंतस्स तस्स रयणी विराममणुपत्ती । अरुणो वि प्फुरिओ पुव्वदिसि मुहे घुसिणतिलउ व्व ॥२८॥ अथ सणियं चिय तत्तो नियत्तिउं सो गओ अरन्नम्मि । पुट्ठसरीरं गोहं घेत्तुं च समागतो नयरिं ॥ २९ ॥ मुक्का य तेण तप्पुच्छबद्धदढदोरगेण अप्पाणं । संजमिऊणं गोहा निवभवणारोहणनिमित्तं ॥ ३० ॥ निठुरचरणावट्ठंभओ य सा लंघिऊण गिहभित्तिं । पासायं आरूढो पल्लिवई तयणु तुट्ठमणो ॥ ३१ ॥ तं उज्झिऊण सणियं आढत्तो पविसिउं भवणमज्झे । तव्वेलं पुण तत्थ रन्नो उवरिं विहियकोवा ॥ ३२ ॥ मणिभूसणकंतिकडप्पनिहियतिमिरा नरेंदवरभज्जा । सेज्जागया पलोइय संजंपिउमेवमारद्धा ॥ ३३ ॥

---

व्रजामि मन्दिरे नरपतेर्गृह्णामि वांच्छितं तस्मात् । नहि विरमति तृष्णा वारणस्य तणुविरलनीरेण ॥ २७ ॥ एवं परिभावतयस्तस्य रजनी विराममनुप्राप्ता । अरुणोऽपि स्फुरितः पूर्वदिङ्मुखे घुसृणतिलक इव ॥ २८ ॥ अथ शनैरेव ततो निवृत्त्य स गतोऽरण्ये । पुष्टशरीरां गोधां गृहीत्वा च समागतो नगरीम् ॥ २९ ॥ मुक्ता च तेन तत्पुच्छबद्धदृढरज्ज्वात्मानम् ? संयम्य गोधा नृपभवनारोहणनिमित्तम् ॥ ३० ॥ निष्ठुरचरणावष्टम्भाच्च सा लंघित्वा गृहभित्तिम् । प्रासादमारूढः पल्लिपतिस्तदनुतुष्टमनाः ॥ ३१ ॥ तामुज्झित्वा शनैरारब्धः प्रवेष्टुं भवनमध्ये । तद्वेलां पुनस्तत्र च राज्ञ उपरि विहितकोपा ॥ ३२ ॥ मणिभूषणकान्तिकटप्रनिहततिमिरा नरेन्द्रवरभार्या । शय्यागता प्रलोक्य संजल्पितुमेवमारब्धा ॥ ३३ ॥

को भद्द ? तुमं चोरो म्हि वंकचूलित्ति भुवणजणपयडो। मणिकणगचोरणट्ठा इहागओ तेण इय भणिते ॥३४॥ परिवुत्तं देवीए न तुमं चोरो हिरन्नमाईणं। चोरिउमिच्छसि निग्घिण जेणं मम संपयं हिययं॥ ३५ ॥ तेणं पयंपियं सुयणु मा तुमं एवमुल्लवसु जेण। को सुचिरजीवियत्थी फणिपहुमणिमभिलसति घेत्तुं ॥ ३६ ॥ अह तस्स मयणसच्छहसरीरसुंदेरहरियहिययाए। इत्थीसहावओ च्चिय अच्चन्तं तुच्छबुद्धीए ॥ ३७ ॥ कुलगंजणावलोयणपरंमुहाए अणंगविहुराए। तीए भणियं भद्दय दूरुज्झियपडिसयविगप्पो ॥ ३८ ॥ अभिगमसु ममं परिसेसा तुह चिन्तियत्थ संपत्ती। एत्तो च्चिय नीसेसा सविसेसा होहिइ अचिरा ॥३९॥ किं नो पेच्छसि अच्चंतनिम्मलुम्मिल्लरयणपहपसरं। आभरणमालियं एत्थ सुहग एयाए तं सामी ॥ ४० ॥

---

को भद्र ? त्वं चौरोऽस्मि वंकचूलिरिति भुवनजनप्रकटः। मणिकनकचोरणार्थमिहागतस्तेनेति भणिते ॥३४॥ प्रत्युक्तं देव्या न त्वं चौरो हिरण्यादीनाम्। चोरितुमिच्छसि निर्घृण ! येन मम सांप्रतं हृदयम् ॥ ३५ ॥ तेन प्रजल्पितं सुतनु ? मा त्वमेवमुल्लपय येन। कः सुचिरजीवितार्थी फणिप्रभुमणिमभिलषति गृहीतुं ॥ ३६ ॥ अथ तस्य मदनसदृशशरीरसुन्दरहृतहृदयया। स्त्रीस्वभावादेवात्यन्तं तुच्छबुद्ध्या ॥ ३७ ॥ कुलकजनावलोकनपरांमुखयानङ्गविधुरया। तया भणितं भद्र ? दूरोज्झितप्रतिश्रयविकल्पः ॥ ३८ ॥ अभिगच्छ मां परिशेषा तव चिन्तितार्थ संप्राप्तिः। इत एव निश्शेषा सविशेषा भविष्यत्यचिरात् ॥ ३९ ॥ किं न प्रेक्षसे अत्यन्तनिर्म्मलोन्मिलितरत्नप्रभाप्रसराम्। आभरणमालिकामत्र सुभग ! एतायास्त्वं स्वामी ॥ ४० ॥

इय तीए गिरं सोऊण जंपियं वंकचूलिणा सुयणु। कासि तुमं किमिहच्छसि को वा तुह पाणनाहोत्ति ॥४१॥ तीए भणियं भद्दय महानरिंदस्स अग्गमहिसी हं। कयकोवा नरनाहे एवं एत्थावसामि त्ति ॥४२॥ पुव्वग्गहियाभिग्गहमणुसरिऊणं पयंपियं तेण। जइ नरवइणो भज्जा ता मह जणणिव्व होसु तुमं॥४३॥ ता मा महाणुभावे पुणरवि एवं समुल्लविज्जासि। मइलिज्जति जेण कुलं कुलप्पसूयाण तमकिच्चं॥४४॥ अहह महामुद्ध किमेवमणुचियं वाउलो व्व वाहरसि। इय निब्भच्छंतीए तीए सकोवाए भणिओ सो ॥ ४५ ॥ जं सुमिणे वि न पेच्छसि भूवइभज्जं पि तमहुणा पत्तं। किं मूढ नोवभुंजसि पडिभणियं तेण एत्ताहे ॥ ४६ ॥ अम्ब विमुंचग्गहं मणसावि हु चिंतियं न जुत्तमिमं। वरमुग्गविसखइयं मा कयमेवं विहमकज्जं ॥ ४७ ॥

---

इति तस्या गिरं श्रुत्वा जल्पितं वंकचूलिना सुतनु?। कासि त्वं किमिहास्से को वा तव प्राणनाथ इति ॥४१॥ तया भणितं भद्र? महानरेन्द्रस्याग्रमहिष्यहम्। कृतकोपा नरनाथे एवमत्रावसामीति ॥ ४२ ॥ पूर्वगृहीताभिग्रहमनुस्मृत्य प्रजल्पितं तेन। यदि नरपतेर्भार्य्या तदा मम जननीव भवसि त्वम् ॥ ४३ ॥ तस्मान्मा महानुभावे पुनरप्येवं समुल्लपसि। मलिनीयते येन कुलं कुलप्रसूतानां तदकृत्यम् ॥ ४४ ॥ अहह महामुग्ध? किमेवमनुचितं वातुल इव व्याहरसि। इति निर्भर्त्सयन्त्या तया सकोपया भणितः सः॥४५॥ यां स्वप्नेऽपि न प्रेक्षसे भूपतिभार्य्यामपि तामधुना प्राप्ताम्। किं मूढ? नोपभुञ्जसे प्रतिभणितं तेन तदानीम् ॥ ४६ ॥ अम्ब? विमुञ्चाग्रहं मनसापि हि चिन्तितुं न युक्तमिदम्। वरमुग्रविषं खादितं मा कृतमेवं विधमकार्य्यम् ॥ ४७ ॥

वयणपडिकूलणावससविसेसविसप्पमाणकोवाए। पयडक्खरेहिं भणियं देवीए तं पडुच इमं ॥४८॥ होसि वसे मज्झ तुमं हयास नूणं विडम्बिओ संतो। जाइस्सइ सग्गं नग्गखवणओ नवरि विग्गुत्तो ॥ ४९ ॥ अह तेणं सा भणिया अम्बा अम्बत्ति पुव्वमुल्लविउं। तुममेव संपयं कहं जायं भणिऊण सेवेमि ॥ ५० ॥ एयं च तदुल्लावं कडगंतरितो समग्गमवि सोचा। देवीपसायणट्ठा चिरागओ चिंतए राया ॥ ५१ ॥ अच्छरियमहो सम्माणदाणनंदिज्जमाणहियया वि। नावत्थाणं बंधइ इत्थी एगत्थ पुरिसम्मि ॥ ५२ ॥ जेण सुकुलुग्गया वि हु अणुरत्तमणं ममं वि मोत्तूण। अमुणिज्जंतं पि जणं कामिउमिच्छइ इमा एवं ॥ ५३ ॥ धी धी पडिबंधो सव्वहेव रामासु सुहविरामासु। अहह कहं सुकुला वि हु विहुरे खिप्पंति एयाहिं ॥ ५४ ॥

---

वचनप्रतिकूलनावशसविशेषविसर्प्यमाणकोपया। प्रकटाक्षरैर्भणितं देव्या तमाश्रित्येदम् ॥ ४८ ॥ भवसि वशे मम त्वं हताश ? नूनं विडम्बितः सन्। यास्यति स्वर्गं नग्नक्षपणकः केवलं विमुक्तः ॥ ४९ ॥ अथ तेन सा भणिताम्बाम्बेति पूर्वमुपलप्य। त्वामेव सांप्रतं कथं जायां भणित्वा सेवयामि ॥ ५० ॥ एतच तदुल्लापं कटकान्तरितः समग्रमपि श्रुत्वा। देव्याः प्रसादनार्थं चिरागतश्चिन्तति राजा ॥५१॥ आश्चर्यमहो सन्मानदानन्नन्द्यमानहृदयापि। नावस्थानं बध्नाति स्त्री एकत्र पुरुषे ॥५२॥ येन सुकुलोद्गतापि हि अनुरक्तमानसं मामपि मुक्त्वा। अज्ञायमानमपि जनं कामितुमिच्छतीयमेवम् ॥ ५३ ॥ धिग् धिक् प्रतिबन्धः सर्वथैव रामासु शुभविरामासु। अहह कथं सुकुला अपि हि विधुरे क्षिप्यन्त एताभिः ॥ ५४ ॥

अज्ज वि कोवि सुपुरिसो एसो चोरो न जो मुयइ मेरं। पत्थिज्जंतो वि इमीए सामभेयाइभणिईहिं ॥५५॥ अज्जवि रयणाधारा धरणी अज्जवि न एइ कलिकालो। दीसंति जेण एवंविहाइं वरपुरिसरयणाइं ॥ ५६ ॥ जे किर करिकुंभत्थलमेक्कपहारेण चेव खंडंति। ते वि हु अवलालोयणसरपहरहया किलस्संति ॥ ५७ ॥ एसो य महासत्तो इमीए इयं पत्थिओ वि थेवं पि। सववत्थं नो थूरइ ता इत्तो होति दट्ठवो ॥ ५८ ॥ इय जाव निवो चिंतइ ताव विणिच्छयकएण देवीए। भणियं किं रे नियमा नो काहिसि मज्झ वयणंति ॥ ५९ ॥ तेणावि जंपियं सहरिसेण एवं ति अह परुट्ठाए। वाहरियं देवीए रे पुरिसा रायसव्वस्सं ॥ ६० ॥ हीरंतं किमुवेक्खह धावह एसो इहावसइ चोरो। इअ सोचा सवत्तो समागया जामरक्खभडा ॥ ६१ ॥

---

अद्यापि कोऽपि सुपुरुष एष चौरो न यो मुञ्जति मर्य्यादाम्। प्रार्थ्यमानोऽप्यनया सामभेदादिभणितिभिः ॥ ५५ ॥ अद्यापि रत्नाधारा धरण्यद्यापि नैति कलिकालः। दृश्यन्ते येनैवंविधानि वरपुरुषरत्नानि ॥ ५६ ॥ ये किल करिकुम्भस्थलमेकप्रहारेण चैव खण्डन्ति। तेऽपि ह्यवलालोचनशरप्रहारहता क्लिश्यन्ते ॥ ५७ ॥ एष च महासत्त्वोऽनयेति प्रार्थितोऽपि स्तोकमपि। स्वव्यवस्थां नाक्रमति- तस्मादितो भवति द्रष्टव्यः ॥ ५८ ॥ इति यावन् नृपश्चिन्तति तावद्विनिश्चयकृतेन देव्या। भणितं किं रे नियमान्न करिष्यसि मद्वचनमिति ॥ ५९ ॥ तेनापि जल्पितं सहर्षेणैवमित्यथ प्ररुष्टया। व्याहृतं देव्या रे पुरुषा ? राजसर्वस्वम् ॥६०॥ ह्रन्तं किमुपेक्षत धावतैष इहावसति चौरः। इति श्रुत्वा सर्वतः समागता जामारक्षकभटाः ॥ ६१ ॥

असिचक्कचावहत्था न जा पहारं कुणंति ता रन्ना। भणिया हंहो चोरं ममं व रक्खेज्जह इमं ति ॥६२॥ अह तेहिं पडिरुद्धो अखुभियचित्तो महागइंदो व। विगमेइ वंकचूली रयणिं करकलियकरवालो ॥ ६३ ॥ देवीए विहियकोवो सेज्जाभवणे गतो च नरनाहो। कह कहवि लद्धनिद्दो पासुत्तो पच्छिमनिसाए ॥ ६४॥ अह जायम्मि पहाये वज्जंतेसुं पहायतूरेसु। अवसरनिवेयगेणं पढियमिमं मागहसुएण ॥ ६५ ॥ अप्पडिहयपयावो समत्थतेयस्सितेयनिम्महणो। अक्खंडमंडलधरो पडिहयदोसायरपयासो ॥ ६६ ॥ पवियंभमाणकमलायरो य अचले पइट्ठिओ उदए। समग्गपयासपरो जयसि तुमं देव सूरो व ॥ ६७ ॥ सुणिऊण इमं राया कयपाभाइयसमग्गकायव्वो। अत्थाणे आसीणो निसिवित्तंतं सुमरमाणो ॥ ६८ ॥

---

असिचक्रचापहस्ता न यावत् प्रहारं कुर्वन्ति तावद् राज्ञा। भणिता भो भोश्चौरं मामिव रक्षतेममिति ॥ ६२ ॥ अथ तैः प्रतिरुद्धोऽक्षुमितचित्तो महागजेन्द्र इव। विगमयति वंकचूली रजनीं करकलितकरवालः ॥ ६३ ॥ देव्या विहितकोपः शय्याभवने गतश्च नरनाथः। कथं कथमपि लब्धनिद्रः प्रसुप्तः पश्चिमनिशायाम् ॥ ६४ ॥ अथ जाते प्रभाते वाद्यमानेषु प्रभाततूर्येषु। अवसरनिवेदकेन पठितमिदं मागधसुतेन ॥६५॥ अप्रतिहतप्रतापः समस्ततेजस्वितेजोनिर्मथनः। अखण्डमण्डलधरः प्रतिहतदोषाकरप्रकाशः ॥६६॥ प्रविजृम्भमानकमलाकरश्चाचले प्रतिष्ठित उदये। समग्रप्रकाशपरो जयसि त्वं देव सूर्य इव ॥६७॥ श्रुत्वेदं राजा कृतप्राभातिकसमग्रकर्त्तव्यः। आस्थान आसीनो निशावृत्तान्तं स्मरन् ॥ ६८ ॥

एत्थंतरम्मि पुरिसेहिं वंकचूली कयपणामेहिं । सो देव एस चोरोत्ति जंपमाणेहिं उवणीतो ॥ ६९ ॥ दट्ठूण य से रूवं विम्हइयमणेणं चिंतियं रन्ना । एवंविहाए कह आगिईए चोरो हवेज्जइ सो ॥ ७० ॥ जइ सच्चं चिय चोरो ता किं देवीए नो कयं वयणं । पायं न भिन्नचित्ताण होंति कत्थवि जओ खलणा ॥ ७१ ॥ अहवा किमणेण विगप्पिएण इममेव ताव पुच्छामि । इति चिंतिऊण सुसिणिद्धचक्खुणा पेक्खिओ रन्ना ॥ ७२ ॥ तेण य कयप्पणामो दवावियं आसणं च उचियं से । तहियं आसीणो सो पुट्ठो सयमेव नरवइणा ॥ ७३ ॥ हंहो देवाणुप्पिय को सि तुमं किम्व असरिसं कम्मं । अचन्तनिंदणिज्जं पारद्धं तेण तो भणियं ॥ ७४ ॥ सीयन्तपरियणब्भत्थियाणं पुरिसाण खीणविहवाण । न हु णवरि कायराणं गरुयाण वि चलइ मइविहवो ॥ ७५ ॥

---

अत्रान्तरे पुरुपैर्वंकचूलिः कृतप्रणामैः । स देव[2] एष चौर इति जल्प्यमानैरुपनीतः ॥६९॥ दृष्ट्वा च तस्य रूपं विस्मयितमनसा चिन्तितं राज्ञा । एवं विधया कथमाकृत्या चौरो भवति सः ॥ ७० ॥ यदि सत्यमेव चौरस्तदा किं देव्या न कृतं वचनम् । प्रायो न भिन्नचित्तानां भवति कुत्रापि यतः स्खलना ॥ ७१ ॥ अथवा किमनेन विकल्पितेनेममेव तावत् पृच्छामि । इति चिन्तित्वा सुस्निग्धचक्षुषा प्रेक्षितो राज्ञा ॥७२॥ तेन च कृतः प्रणामो दापितमासनं चोचितं तस्य । तत्रासीनः स पृष्टः स्वयमेव नरपतिना ॥७३॥ भो भो देवानुप्रिय ? कोऽसि त्वं किम्वासदृशं कर्म । अत्यन्तनिन्दनीयं प्रारब्धं तेन ततो भणितम् ॥ ७४ ॥ सीदत्परिजनाभ्यर्थितानां पुरुपाणां क्षीणविभवानाम् । नहि केवलं कातराणां गुरूणामपि चलति मतिविभवः ॥ ७५ ॥

कोसि तुमं जं च तए पुट्ठं तत्थवि न किं पि वत्तवं। एवं विहकिरियाए पायडिए णियसरूवम्मि ॥ ७६ ॥ देरन्ना भवियं मा भणसु एरिसं होसि तं न सामन्नो। ता अच्छउ ताव इमं कहेसु रयणीए वित्तंतं ॥ ७७ ॥ देवीए उल्लावो नूणं रन्ना वियाणिओ सवो। इति निच्छिऊण तेणं पयंपियं देव निसुणेसु ॥७८॥ तुह गेहं मुसिउमणो अहं पविट्ठो तहिं च देवीए। दिट्ठो कहिं पि एत्तो वि देव अन्नो न वित्तंतो ॥ ७९ ॥ पुणरुत्त पुच्छिओ वि जाव इमं चिय संजपइ महप्पा। सप्पुरिसयाए तुट्ठेण ताव भणियं नरिंदेण ॥ ८० ॥ तो भद्द वरेसु वरं तुट्ठो हं तुज्झसुद्धचेट्ठाए। तो वंकचूलिणा भालबद्धकरपाणिकोसेण ॥ ८१ ॥ विन्नत्तं एसो चिय देव वरो सवहा न कायवो। देविं पडुच कोवो जं सा जणणी मए भणिया ॥ ८२ ॥

---

कोऽसि त्वं यच्च त्वया पृष्टं तत्रापि न किमपि वक्तव्यम्। एवं विधक्रियया प्रकटिते निजस्वरूपे ॥ ७६ ॥ राज्ञा भणितं मा भणेदृशो भवसि त्वं न सामान्यः। तस्मादास्तामिदं कथय रजनिवृत्तान्तम् ॥ ७७ ॥ देव्या उल्लापो नूनं राज्ञापि ज्ञातः सर्वः। इति निश्चिन्त्य तेन प्रजल्पितं देव ? निशृणुस्व ॥ ७८ ॥ तव गृहं मोषितुमना अहं प्रविष्टस्तत्र च देव्या। दृष्टः कथमपीतोऽपि देव ? अन्यो न वृत्तान्तः ॥ ७९ ॥ पुनरुक्तं पृष्टोऽपि हि यावदिदमेव संलपति महात्मा। सत्पुरुषतया तुष्टेन तावद् भणितं नरेन्द्रेण ॥ ८० ॥ भो भद्र ? वृणुष्व वरं तुष्टोऽहं तव शुद्धचेष्टया। ततो वंकचूलिना भालबद्धपाणिकोशेन ॥८१॥ विज्ञप्तमेष एव देव ? वरः सर्वथा न कर्त्तव्यः। देवीमाश्रित्य कोपो यस्मात्सा जननी मया भणिता ॥ ८२ ॥

पडिवन्नमिमं रन्ना तओ वियंभंतगाढपणएण । पुत्तेव पक्खवायं अच्चंतं उव्वहंतेण ॥ ८३ ॥ ठविओ महंत सामंतसंतिए सो पयम्मि दिन्नो य । करितुरयरयणविहवो समप्पियो सेवगजणो य ॥ ८४ ॥ एवं च पत्तविहवो सो चिंतइ ते समग्गगुणनिहिणो । एरिसकल्लाणाणं निबंधणं सूरिणो जाया ॥ ८५ ॥ कहमन्नहा तहाहं जीवंतो कह व मज्झ सा भइणी । कह वा इण्हिं एवंविहं च लच्छिं अणुहवन्तो ॥ ८६ ॥ हा मन्दबुद्धिणो मह परंमुहस्सवि महाणुभावेहिं । कहमुवयरियं तेहिं परोवयारेक्कनिरएहिं ॥ ८७ ॥ ते च्चिय चिंतामणिणो कप्पहुमाकामधेणुणो य धुवं । नवरं निप्पुण्णेणं मए न मुणिया मणागंपि ॥ ८८ ॥ इय ते च्चिय मुणिवइणो सुहेव्व सयणेव्व जणणिजणगेव्व । देवेव्व सुमरमाणो अणवरयं गमइ दियहाइं ॥ ८९ ॥

---

प्रतिपन्नमिदं राज्ञा ततो विजृम्भद्गाढप्रणयेन । पुत्र इव पक्षपातमत्यन्तमुद्वहमानेन ॥ ८३ ॥ स्थापितो महासामन्तसत्के स पदे दत्तश्च । करितुरंगरत्नविभवः समर्पितः सेवकजनश्च ॥ ८४ ॥ एवं च प्राप्तविभवः स चिन्तति ते समग्रगुणनिधयः । ईदृशकल्याणानां निबन्धनं सूरयो जाताः ॥ ८५ ॥ कथमन्यथा तदाहं जीवन् कथं वा मम सा भगिनी । कथं वेदानीमेवंविधं च लक्ष्मीमनुभवन् ॥८६॥ हा मन्दबुद्धेर्मम पराङ्मुखस्यापि महानुभावैः । कथमुपरितं तैः परोपकारैकनिरतैः ॥ ८७ ॥ त एव चिन्तामणयः कल्पद्रुमाः कामधेनवश्च ध्रुवम् । केवलं निःपुण्येन मया न ज्ञाता मनागपि ॥ ८८ ॥ इति तानेव मुनिपतीन् सुखानिव स्वजनानिव जननीजनकानिव । देवानिव स्मर्यमाणोऽनवरतं गमयति दिवसान् ॥ ८९ ॥

अह अन्नम्मि अवसरे दमघोसनाम सूरिणो दिट्ठा । अच्चंतपहिट्ठेणं पणिवइया ते य भत्तीए ॥ ९० ॥ जोगो त्ति कलिय तेहिं उवइट्ठो अरिहधम्मपरमत्थो । अणुहवसिद्धो त्ति परप्पमोयओ तेण गहितो य ॥ ९१ ॥ जाया य समीवग्गामवत्तिणा परमधम्मकुसलेण । जिणदाससावगेणं सह मेत्ती तेण य समं सो ॥ ९२ ॥ नयभूरिभंगगंभीरमणुदिणं आगमं निसुणमाणो । वच्छल्लं कुणमाणो सयणेसुव तुल्लधम्मेसु ॥ ९३ ॥ निव्वत्तिंतो जिणमंदिरेसु सव्वायरेण पूयाई । पुव्वग्गहियाभिग्गहनिवहं च सयावि चिंतित्तो ॥ ९४ ॥ जह भणियं जिणधम्मं परिपालिन्तो पमायविरहेण । सज्जणसलाहणिज्जं सामंतसिरिं समणुहवति ॥ ९५ ॥ अन्नम्मि य पत्थावे नरवइवयणाओ पउरबलकलिओ । कामरुयनरिंदं पइ चलिओ सो विजयजत्ताए ॥ ९६ ॥

---

अथान्यस्मिन्नवसरे दमघोषनामाः सूरयो दृष्टाः । अत्यन्तप्रहृष्टेन प्रणिपतितास्ते च भक्त्या ॥ ९० ॥ योग्य इति कलित्वा तैरुपदिष्टोऽर्हद्धर्मपरमार्थः । अनुभवसिद्ध इति परमप्रमोदात्तेन गृहीतश्च ॥ ९१ ॥ जाता च समीपग्रामवर्त्तिना परमधर्मकुशलेन जिनदासश्रावकेण सह मैत्री तेन च समं सः ॥ ९२ ॥ नयभूरिभंगगम्भीरमनुदिनमागमं निश्रूयमाणः । वात्सल्यं कुर्वाणः स्वजनेष्विव तुल्यधर्मेषु ॥ ९३ ॥ निर्वर्त्तयन् जिनमन्दिरेषु सर्व्वादरेण पूजादिः । पूर्वगृहीताभिग्रहनिवहं च सदापि चिन्तन् ॥ ९४ ॥ यथा भणितं जिनधर्मं परिपालयन् प्रमादविरहेण । स्वजनश्लाघनीयं सामन्तश्रीं समनुभवति ॥ ९५ ॥ अन्यस्मिंश्च प्रस्तावे नरपतिवचनात् प्रचुरबलकलितः । कामरुचनरेन्द्रंप्रति चलितः स विजययात्रायै ॥ ९६ ॥

कालक्कमेण पत्तो रिउणो देसस्स सीमभागम्मि । एत्थतरम्मि पत्तो पडिसत्तू वि हु तत्तो तत्थ ॥ ९७ ॥ ढलंतचारुचामरं फुरंतछत्तडामरं । धडंतसंदणो हयं समुल्ललंत जोहयं ॥ ९८ ॥ दुक्कन्तमत्तवारणं भडाण तुट्ठिकारणं । हिंसन्तआसघट्टयं पढंतभूरिभट्टयं ॥ ९९ ॥ रसंततारतूरयं चोइज्जमाणसूरयं । वज्जंतजुद्धढक्कयं अन्नोन्नमुक्कहक्कयं ॥ ११०० ॥ चुवंतचित्तविंधयं अन्नोन्नघायसंधयं । संनद्धबद्धकक्खयं नदन्त जाडसंखयं ॥१॥ फुरन्ततिक्खखग्गयं दलाण ताण लग्गयं । पयंडकोवकारणं परोप्परं महारणं ॥२॥ तओ य नट्ठकायरं हयासजोहकुंजरं । पहारजालजज्जरं पडंतदेहपंजरं ॥ ३ ॥ किरासिजं महाबलं परेसिं संतियंबलं । रणागयं समग्गयं खणेणं तं पि भग्गयं ॥ ४ ॥

---

कालक्रमेण प्राप्तो रिपोर्देशस्य सीमाभागे । अत्रान्तरे प्राप्तः प्रतिशत्रुरपि हि ततस्तत्र ॥ ९७ ॥ चलच्चारुचामरं स्फुरच्छत्रडामरम् । घटमानस्यन्दनहयं समुल्लसद्योधकम् ॥ ९८ ॥ दुष्क्रान्तमत्तवारणं भटानां तुष्टिकारणम् । हसन्नश्वघट्टकं पठद्भूरिभट्टकम् ॥ ९९ ॥ रसत्तारतूर्यकं चोद्यमानशूरकम् । वाद्युद्धढक्कमन्योन्यमुक्तहक्ककम् ॥ ११०० ॥ च्युव्यमानचित्तविन्धकमन्योन्यधातसन्घकम् । संनद्धबद्धकक्षकं नदज्जाड्य संखयन् ॥ १ ॥ स्फुरत्तीक्ष्णखड्गकं दलत्तान लग्नकम् । प्रचण्डकोपकारणं परस्परं महारणम् ॥ २ ॥ ततश्च नष्टकायरं हताश्वयोधकुञ्जरम् । प्रहारजालजर्जरं पततदेहपञ्जरम् ॥ ३ ॥ किलासीद्यतमहाबलं परेषां सतकं बलम् । रणागतं समग्रकं क्षणेन तदपि भग्नकम् ॥ ४ ॥

जो आसि रणंगणुक्कडो राया कामरुओ महाभडो। अह सो वि खणेण निज्जिओ लहुपाणेहिं कओ विवज्जिओ ॥ ५ ॥ वंकचूली वि खरपहरभिन्नंगतो विजिय पडिपक्खु। समराउ लहु निग्गतो पत्तु उज्जेणिनयरीए। घायाउरो ॥ ६ ॥ तस्स आगमणितुट्ठो दढं नरवरो वेज्जसत्थेण। से वणचिकिच्छा कया नेव जाया मणागंपि नीरोगया ॥ ७ ॥ रोहपत्तावि विहडन्ति घाया पुणो चत्त जीयासतो । तेण धुवमप्पणो तो पुणो सोगगग्गिरसरो भूवई ॥८॥ भणति वेज्जे अहो मज्झ सेणावई जेण केणावि। दिव्वोसहेणं लहुं होइ नीरोगु तं देह पत्तो वहुं ॥ ९ ॥ तयणु वेज्जेहिं सत्थाइं संचिंतिऊण निऊणवुद्धीए। अवरोप्परं निच्छिउं कायमंसोसहं संसियं सोहणं तस्स घायव्वणाणं वसं रोहणं। अह जिणधम्मणुरत्तिण निरुवमत्तिण कायमंसु पडिसिद्धु ति नवरि जीविउ वच्चउ नियमु म मुच्चउ तो वि एउ सुमरत्तएण ॥ १० ॥

---

य आसीद् रणाङ्गनोत्कटो राजा कामरुचो महाभटः। अथ सोऽपि क्षणेन निर्जितो लघुप्राणैः कृतो विवर्जितः ॥ ५ ॥ वंकचूलिरपि खरप्रहारभिन्नाङ्गो विजित प्रतिपक्षः। समराल्लघु निर्गतः प्राप्तरुज्जयिनीनगरायां घातातुरः ॥ ६ ॥ तस्यागमनतुष्टो दृढं नरवरो वैद्यसार्थेन। तस्य व्रणचिकित्सा कृता नैव जाता मनागपि नीरोगता ॥ ७ ॥ रोहप्राप्तोऽपि विघटन्ते घाताः पुनस्त्यक्त जीविताशः । तेन ध्रुवमात्मनः ततःपुनः। शोकगद्गद् स्वरो भूपतिः ॥८॥ भणति वैद्यानहो मम सेनापतिर्येन केनापि। दिव्यौषधेन लघु भवति नीरोगस्तं ददत प्राप्तः वहु ॥९॥ तदनु वैद्यैः शास्त्राणि संचिन्तित्वा निपुणबुद्ध्या। अपरोपरं निश्चित्य काकमासौषधं शंसितं सोभनम्। तस्य घातव्रणानां वशं रोहणम्। अथ जैनधर्मानुरतिना निरुपममतिना काकमांसं प्रतिषिद्धमिति केवलं जीवितं व्रजतु नियमं मा मुञ्चतु ततोऽपि एतत्स्मर्यमाणेन १०

अह जइ पुण निब्भरपणयजुत्तजिणदासवयणाओ। कुणति ओसहमिमं ति रन्ना पुरिसं पेसित्तु ॥११॥ गामाउ आहूओ इंतो पुण देविदुगं पेच्छिऊण। रोयंतं जिणदासो पुच्छति कीस रुयह ताहिं च संलत्तं ॥१२॥ भुयनाहाणं सोहम्मकप्पदेवीणमिण्हि अम्हाणं। मरिऊण वंकचूली अभुत्तमंसो हवइ नाहो ॥ १३ ॥ जइ पुण तुहवयणातो कहंपि किर कायमंसमसिही सो। ता नूणं भग्गनियमो पडिही अन्नत्थ कुगईए ॥ १४ ॥ एएण कारणेणं रोएमो निब्भरं महाभाग?। एयं च तुमं सोचा जं जुत्तं तं करेज्जासु ॥१५॥ आयन्निऊण एवं विम्हियचित्तो गतो स उज्जेणिं। दिट्ठो य वंकचूली नरवइवयणाणुरोहेण ॥१६॥ भणितो य सुहग? नो कीस कुणसि तं कायमंसपरिभोगं। जायारोग्गसरीरो पायच्छित्तं चरेज्जासि ॥ १७ ॥

---

अथ यदि पुनर्निर्भरप्रणययुक्तजिनदासवचनात्। करोत्यौषधमिममिति राज्ञा पुरुषं प्रेष्य ॥ ११ ॥ ग्रामादाहूतो गच्छन् पुनर्देवीद्विकं प्रेक्ष्य। रुदन्तं जिनदासः पृच्छति कथं रुदित तामिश्च संलप्तम् ॥ १२ ॥ भुवननाथानां सौधर्मकल्पदेवीनामिदानीमस्माकम्। मृत्वा वंकचूलिरभुक्तमांसो भवति नाथः ॥ १३ ॥ यदि पुनस्तवचवचनात् कथमपि किल काकमांसमत्स्यति सः। तदा नूनं भग्ननियमः पत्स्यत्यन्यत्रकुगतौ ॥ १४ ॥ एतेन कारणेन रुदिवो निर्भरं महाभाग?। एतच्च त्वं श्रुत्वा यद्युक्तं तत् कुर्यादाशु ॥ १५ ॥ आकर्ण्यैवं विस्मितचित्तो गतः स उज्जयिनीम्। दृष्टश्च वंकचूलिर्नरपतिवचनानुरोधेन ॥ १६ ॥ भणितश्च सुभग? नो कस्मात् करोषि त्वं काकमांसपरिभोगम्। जातारोग्यशरीरः प्रायश्चित्तं चरिष्यसि ॥ १७ ॥

तेणं पयंपियं धम्ममित्त एवं तुमंपि उवइससि । जाणन्तनियमभंगे पायच्छित्तं कं गुणं जणइ ॥ १८ ॥ जइ नियमं भंजित्ता तप्पायच्छित्तमणुचरेयव्वं । ता पढमं चिय जुत्तो नो काउं नियमभंगो त्ति ॥ १९ ॥ तो कहियं नरवइणो जिणदासेणं देव अवि चएइ । जीवियव्वं न पुणो नियमं चिरग्गहियं ॥ २० ॥ एत्तो पारत्तहियं तो कीरउ देव वंकचूलिस्स । निच्छियभाविरमरणे किमकिच्चेणं कएणिमिणा ॥ २१ ॥ एवं वुत्ते रन्ना सुयनिहिणो साहुणो समाहूय । पज्जंतविहिसणाहो कहाविओ धम्मपरमत्थो ॥ २२ ॥ अह सो साहुसमीवे आलोइय ससयलपुव्वदुच्चरिओ । खामिय समग्गजीवो विसेसपडिवन्नवयनिवहो ॥ २३ ॥ पंचपरमेट्ठिमंतं परिवत्तंतो समुज्झियाहारो । मरिऊण अच्चुयम्मि देवो जातो महिड्ढीओ ॥ २४ ॥

---

तेन प्रजल्पितं धर्म्ममित्र? एवं त्वमप्युपदिशसि । जानन्नियमभङ्गे प्रायश्चित्तं कं गुणं जनयति ॥ १८ ॥ यदि नियमं भंक्त्वा तत्प्रायश्चित्तमनुचरितव्यम् । तदा प्रथममेव युक्तो न कर्तुं नियमभंग इति ॥ १९ ॥ ततः कथितं नरपतये जिनदासेन देव? अपि त्यजति । जीवितव्यं न पुनर्नियमं चिरगृहीतम् ॥ २० ॥ इतः परत्रहितं तस्माद् करोतु देव? वंकचूलेः । निश्चितभाविमरणे किमकृत्येन कृतेनानेन ॥ २१ ॥ एवमुक्ते राज्ञा श्रुतनिधीन् साधून् समाहूय । पर्य्यन्तविधिसनाथोऽकथयद् धर्मपरमार्थः ॥ २२ ॥ अथ स साधुसमीपे आलोचितस्वसकलपूर्वदुश्चरितः । क्षामितसमग्र जीवो विशेष प्रतिपन्न व्रतनिवहः ॥ २३ ॥ पञ्चपरमेष्ठिमन्त्रं परिवर्त्तमानः समुज्झिताहारः । मृत्वाच्युते देवो जातो महर्द्धिकः ॥ २४ ॥

जिणदाससावगो वि य सग्गामदुत्तं पुणो णियत्तंतो । तं तह देवीजुगलं रोयंतं पच्छिउं भणति ॥ २५ ॥ मंसम्मि अभुत्ते चिय किं तुब्भे रुयह ताहिं तो कहियं । स विसेसविहियधम्मो देवो अन्नत्थ सो जातो ॥२६॥ अम्हे निपुन्ना उ संपयमवि पाणनाहरहिया । जम्हा तह ठियाओ सोगं तेणं करेमो त्ति ॥ २७ ॥ अह जिणदासो दिव्वं देवेड्ढिं वंकचूलिणा लद्धं । जिणधम्मपहावेणं नाउं एवं विचिंतेति ॥ २८ ॥ नमिर परमपेमुब्भन्तदेविंदुब्भडकणककिरीडुग्घट्टपायारविंदो । जयइ जिणसमूहो देसिउ जेणधम्मो सिवसुरपुरलच्छी हत्थदाणेक्कदच्छो ॥ २९ ॥ खणमवि परिसुद्धं पालिऊणंतकाले कलिकलिलमसेसं खालिउं जप्पभावा । पवरगइमुवेंती वंकचूलिव्व जीवा स जयउ जयपुज्जो वीयरागाण धम्मो ॥ ३० ॥

---

जिनदासश्रावकोऽपि च स्वग्रामं द्रुतं पुनर्निवृत्तः । तं तत्र देवीयुगलं रुदन्तं दृष्ट्वा भणति ॥ २५ ॥ मांसेऽभुक्त एव कि युवां रुदितस्ताभ्यां तदा कथितम् । स विशेषविहितधर्मो देवोऽन्यत्र स जातः ॥ २६ ॥ वयं निःपुण्याः तु सांप्रतमपि प्राणनाथरहिताः । यस्मात्तथा स्थिताः शोकं तेन कुर्व इति ॥ २७ ॥ अथ जिनदासो दिव्यां देवर्द्धिं वंकचूलिना लब्धाम् । जिनधर्मप्रभावेन ज्ञात्वैवं विचिन्तयति ॥ २८ ॥ नमित परमप्रेमोद्भक्तदेवेन्द्रविन्दोद्भटकनककिरीटोद्घृष्टपादारविन्दः । जयति जिनसमूहो देशितुं । जैनधर्मः, शिवसुरपुरलक्ष्मी हस्तदानैकदक्षः ॥ २९ ॥ क्षणमपि परिशुद्धं पालित्वान्तकाले, कलिकलिलमशेषं क्षालित्वा यत्प्रभावात् प्रवरगतिमुपेन्ति वंकचूलिरिव जीवाः स जयतु जगत्पूज्यो वीतरागाणां धर्मः ॥ ३० ॥

इय वंकचूलिचरियं निवेइयं संपयं परिकहेमि। पुव्वं चिय उक्खित्तं चिलाइपुत्तस्स वित्तंतं॥३१॥भूमिपइट्ठियनयरे नामेणं आसि जन्नदेवो त्ति। विप्पो पंडियमाणी जिणसासणखिंसणासत्तो॥३२॥जो जेण जिप्पइ इहं सो सिस्सो तस्स इति पइन्नाए। वायम्मि निज्जिओ पवरबुद्धिणा साहुणा सो य ॥ ३३ ॥ पव्वाविओ य णवर पव्वज्जं देवयाए उज्झन्तो। पडिसिद्धो अह जातो निचणो साहुधम्ममि ॥ ३४ ॥ तहवि दुजातिमएणं दुगुंछभावं मणागमुव्वहति। पडिवोहियो य तेणं नीसेसो नियसयणजणो ॥ ३५ ॥ भज्जा पुण तस्स परूढगाढपेम्माणुवंधदोसेण। काराविउं समीहति तं पवज्जा परिच्चायं ॥ ३६ ॥ सो पुण निच्चलचित्तो सद्धम्मपरो गमेति दियहाइं अह अन्नवासरम्मि दिन्नं से कम्मणं तीए ॥ ३७ ॥

---

इति वंकचूलिचरित्रं निवेदितं सांप्रतं परिकथयामि। पूर्वमेवोत्क्षिप्तं चिलातिपुत्रस्स वृत्तान्तम् ॥ ३१ ॥ भूमिप्रतिष्ठितनगरे नाम्नासीद् यज्ञदेव इति। विप्रः पण्डितमानी जिनशासननिन्दनासक्तः ॥३२॥ यो येन जीयतेऽत्र स शिष्यस्तस्येति प्रतिज्ञया। वादे निर्जितः प्रवरबुद्धिना साधुना स च ॥ ३३ ॥ प्रव्राजितश्च केवलं प्रव्रज्यां देवतयोज्झन्। प्रतिषिद्धोऽथ जातः सुनिश्चलः साधुधर्मे ॥ ३४ ॥ तथापि द्विजातिमदेन जुगुप्साभावं मनागुद्वहति। प्रतिबोधितश्च तेन निश्शेषो निजक स्वजनजनः ॥ ३५ ॥ भार्य्या पुनस्तस्य प्ररूढगाढप्रेमानुवन्धदोषेण। कारयितुं समीहति तत्प्रव्रज्यापरित्यागम् ॥ ३६ ॥ स पुनर्निश्चलचित्तः सद्धर्मपरो गमयति दिवसानी। अथान्यवासरे दत्तं तस्मै कार्म्मणं तया ॥ ३७ ॥

तद्दोसेण मरिऊणं देवलोए सुरो समुप्पन्नो । इयरी वि य पव्वइया तन्निवेएण संतत्ता ॥ ३८ ॥ आलोयणं अकाउं मया समाणीसुरेसु उप्पन्ना । अह जन्नदेवजीवो चइऊणं रायगिहे नयरे ॥ ३९ ॥ धणसत्थवाहगेहे चिलाइनामाए दासचेडीए । तेण दुगुंछादोसेण पुत्तभावं समणुपत्तो ॥ ४० ॥ विहियं य जणेणं से चेलाइ पुत्तो त्ति गुत्तमभिहाणं । इयरी वि ततो चइउं तस्सेव धाणस्स भज्जाए ॥ ४१ ॥ पंचण्हं सुयाणुवरिं नामेणं सुंसुमा सुया जाया । सो य चिलाई पुत्तो बालग्गाहो कओ तीसे ॥ ४२ ॥ अच्चन्तकलहकारि त्ति दुव्विणोओ त्ति सत्थवाहेण । निच्छूढो गेहाओ परियडमाणो गओ पल्लिं ॥ ४३ ॥ आराहिओ य वाढं पल्लिवई गाढविणयओ तेण । अह पल्लिवइम्मि मए मिलिऊणं चोरनिवहेण ॥ ४४ ॥

---

तद्दोषेण मृत्वा देवलोके सुरः समुत्पन्नः । इतरापि च प्रव्रजिता तन्निर्वेदेन संतप्ता ॥ ३८ ॥ आलोचनमकृत्वा मृत्वा सामान्यसुरेषूत्पन्ना । अथ यज्ञदेवजीवश्च्युत्वा राजगृहे नगरे ॥ ३९ ॥ धनसार्थवाहगृहे चिलातिनाम्न्या दासचेट्याः । तेन जुगुप्सादोषेण पुत्रभावं समनुप्राप्तः ॥ ४० ॥ विहितं च जनेन तस्य चिलातिपुत्र इति गोत्रमभिधानम् । इतरापि ततश्च्युत्वा तस्यैव धन्यस्य भार्य्यायाम् ॥४१॥ पञ्चानां सुतानामुपरि नाम्ना शुंशुमा सुता । जाता स च चिलातिपुत्रो बालग्रहः कृतस्तस्याः ॥ ४२ ॥ अत्यन्तकलहकारीति दुर्विनीत इति सार्थवाहेन । निःसारितो गृहात् पर्यटमानो गतः पल्लिम् ॥ ४३ ॥ आराधितश्च वाढं पल्लिपतिर्गाढविनयात् तेन । अथ पल्लिपतौ मृते मिलित्वा चौरनिवहेन ॥ ४४ ॥

जोंगो त्ति कलिय विहिओ पल्लीनाहो महाबलो सो च। अच्चंतनिग्घिणो हणति गामपुरनयरसत्थाई ॥४५॥ एगम्मि य पत्थावे तेणं चोराण एयमुवइट्ठं। रायगिहम्मि नयरे सत्थवाहो अत्थि धणनामो ॥ ४६ ॥ तस्स य धूया नामेण सुंसुमा सा य मज्झ तुब्भ धणं। ता एह तत्थ जामो अवहरिउं तं वएमो त्ति ॥ ४७ ॥ पडिवन्नं चोरेहिं रयणीए ततो गया य रायगिहे। ओसोयणाइं च दाउं झत्ति पविट्ठा धणस्स गिहे ॥ ४८॥ मुट्ठं चोरेहिं गिहं गहिया सा सुंसुमा वि इयरेण। सत्थवाहो सुयसहिओ अन्नत्थ लहुं अवक्कंतो ॥ ४९ ॥ पाविय समीहियत्थो सट्ठाणं पट्ठिओ य पल्लीवती। अह उग्गयम्मि सूरे पंचहिं वि सुएहिं परिकिन्नो ॥ ५० ॥ दढदेहवद्धकवओ नरवईबहुसुहडपरिवुडो सिग्घं। तम्मग्गेणं लग्गो धूयानेहेण सत्थहो ॥ ५१ ॥

---

योग्य इति कलित्वा विहितः पल्लिनाथो महाबलः स च। अत्यन्तनिर्घृणो हन्ति ग्रामपुरनगरसार्थानि ॥ ४५ ॥ एकस्मिन् च प्रस्तावे तेन चौराणामिदमुपदिष्टम्। राजगृहे नगरे सार्थवाहोऽस्ति धननामा ॥ ४६ ॥ तस्य च दुहिता नाम्ना शुंशुमा सा च मम युष्माकं धनम्। तस्मादागच्छत तत्र यामोऽवहर्तुं तां वयमिति ॥ ४७ ॥ प्रतिपन्नं चौरै रजन्यां ततो गताश्च राजगृहे। अवस्वापनीं च दत्त्वा झटिति प्रविष्टा धनस्य गृहे ॥ ४८ ॥ मुषितं चौरैर्गृहं गृहीता सा शुंशुमापीतरेण। सार्थवाहः सुतसहितोऽन्यत्र लघु अपक्रान्तः ॥ ४९ ॥ प्राप्तसमीहितार्थः स्वस्थानं प्रस्थितश्च पल्लिपतिः। अथोद्गते सूर्ये पञ्चभिरपि सुतैः परिकीर्णः ॥ ५० ॥ दृढदेहबद्धकवचः नरपतिबहुसुभटपरिवृतः शीघ्रम्। तन्मार्गेण लग्नो दुहितृस्नेहेन सार्थवाहः ॥ ५१ ॥

भणिया य रायसुहडा धणेण धूयं ममं नियत्तेह। दव्वं तुम्हं दिन्नं इय भणिए धाविया सुहडा ॥५२॥ इंते य ते पलोइय नट्ठा चोरा धणं विमोत्तूण। घेत्तूण य तं सुहडा जहागयं पडिगया सव्वे ॥ ५३ ॥ सुयसहितो सत्थाहो गंतुं एक्को परं समारद्धो। संपत्तो य समीवे अचिरेण चिलाइपुत्तस्स ॥ ५४ ॥ मा होउ इमा कस्सवि इति सीसं सुंसुमाए घेत्तूण। सो सिग्घमवक्कंतो विमणो बलिओ य सत्थाहो ॥ ५५ ॥ अह अडवीए मज्झे चिलाइ पुत्तेण परिभमन्तेणं। दट्ठूण साहुमेगं उस्सगट्ठियं महासत्तं ॥ ५६ ॥ जंपियमहो महामुणि संखेवेणं कहेसु मह धम्मं। इहरा तुज्झ वि सीसं फलं व असिणा लुणिस्सामि ॥ ५७ ॥ मुणिणा उ निब्भएणवि उवयारं से मुणित्तु भणियमिणं। उवसमविवेयसंवरपयतियं धम्मसव्वस्सं ॥ ५८ ॥

---

भणिताश्च राजसुभटा धनेन दुहितारं मम निवर्त्तयत। द्रव्यं युष्मभ्यं दत्तमिति भणिते धाविताः सुभटाः ॥५२॥ आयतश्च तान् प्रलोक्य नष्टाश्चौरा धनं विमुच्य। गृहीत्वा च तं सुभटाः यथागतं प्रतिगताः सर्वे ॥ ५३ ॥ सुतसहितः सार्थवाहो गन्तुमेकः परं समारब्धः। संप्राप्तश्च समीपेऽचिरेण चिलातिपुत्रस्य ॥ ५४ ॥ मा भवित्वियं कस्यपीति शीर्षं शुंशुमाया गृहीत्वा। स शीघ्रमपक्रान्तो विमना वलितश्च सार्थवाहः ॥ ५५ ॥ अथाटव्यामध्ये चिलातिपुत्रेण परिभ्रमता। दृष्ट्वा साधुमेकमुत्सर्गस्थितं महासत्त्वम् ॥ ५६ ॥ जल्पितमहो महामुने संक्षेपेण कथय मे धर्मम्। इतरथा तवापि शीर्षं फलमिवासिना छेदयिष्यामि ॥ ५७ ॥ मुनिना तु निर्भयेनाप्युपकारं तस्य ज्ञात्वा भणितमिदम्। उपशमविवेकसम्वरःपदत्रयं धर्मसर्वस्वम् ॥ ५८ ॥

घेत्तुं च इमं सम्मं एगंते सो वि विचिंतिउं लग्गो। उवसमसद्दत्थो घडइ सवकोहाइ चायम्मि ॥ ५९ ॥ सो कुद्धस्स कहं मे ता कोहाई मए परिचत्ता। परिहारे धणसयणाण होति नूणं विवेगो वि॥६०॥ता किं खग्गेणं मे किं वा सीसेण मज्झ एत्ताहे। इंदियमणसंवरणे य संवरो णिच्छियं घडति ॥६१॥ ता तं पि अहं काहं इति चिंतन्तो विमुक्क असिसीसो । नासग्गनिहियदिट्ठी निरुद्धमण कायवावारो ॥ ६२ ॥ परिभावेंतो पुणरुत्तमेव एयाणि तिन्निवि पयाणि। काउस्सग्गेण ठितो सुनिचलो कंचणगिरिव ॥ ६३ ॥ अह रुहिरगंधलुद्धाहिं कुलिसतिक्खग्गचंडतुंडाहिं। मुइंगलियाहिं लहुं सवत्तो भोत्तुमारद्धो॥ ६४ ॥ अपि य, आपायसीसं सयलं पि देहं सूइंगलियाहिं विभक्खिऊणं। विणिम्मियं चालणियासम्माणं तहा वि झाणाउ न कंपिओ सो॥ ६५ ॥

---

गृहीत्वा चेदं सम्यगेकान्ते सोऽपि विचिन्तितुं लग्नः। उपशमशब्दार्थो घटते सर्वक्रोधादि त्यागे ॥ ५९ ॥ स क्रुद्धस्य कथं मम तस्मात् क्रोधादयो मया परित्यक्ता। परिहारे धनस्वजनानां भवति नूनं विवेकोऽपि ॥ ६० ॥ तस्मात् किं खड्गेन मे किम्वा शिष्येन ममेदानीम्। इन्द्रियमनस्संवरणे च संवरो निश्चितं घटते ॥ ६१ ॥ तस्मात्तदप्यहं करिष्यामीति चिन्तन् विमुक्तासिशिरः। नासाग्रनिहितदृष्टिर्निरुद्धमनः कायव्यापारः॥ ६२ ॥ परिभावयन् पुनः पुनरेवैतानि त्रीणि अपि पदानि। कायोत्सर्गेणं स्थितः सुनिश्चलः कांचनगिरिरिव ॥ ६३ ॥ अथ रुधिरगन्धलुब्धाभिः कुलिशतीक्ष्णाग्रचण्डतुण्डाभिः। रक्तपिपीलिकाभिर्लघु सर्वतो भोक्तुमारब्धः ॥ ६४ ॥ 'अपि च' आपादशिरं सकलमपि देहं रक्तपिपीलिकाभिर्विभज्य। विनिर्मितं चालनीसमानं तथापि ध्यानान्न प्रकंपितः सः ॥ ६५ ॥

पयंडतुण्डाहिं पिवीलियाहिं खद्धे सरीरम्मि मुणिस्स तस्स । छिद्दाइं रेहंति समत्थपावनिस्सारदाराणि व दीहराणि ॥ ६६ ॥ अड्ढाइएहिं दियहेहिं धीमं सम्मं समाराहिय उत्तिमट्ठं । सुरालयं सो सहसारनामं पत्तो सुचारित्तधणो महप्पा ॥ ६७ ॥ अच्चंतचंडमणवयणकायइच्चाइ जं पुरा वुत्तं । तं साहरणं भणियं एत्तो पगयं निसामेह ॥ ६८ ॥ सुविणिच्छियपरमत्थो अणज्जजणकज्जवज्जणुज्जुत्तो । इय गुणवंतो आराहणाए अरिहो हवेज्ज गिही ॥ ६९ ॥ किंतु सुदंसणमूलं पंचाणुव्वयसमन्नियं तह य । तिगुणव्वउववेयं चउसिक्खावयसणाहं च ॥ ७० ॥ समणोवासयविसयं धम्मं परिपालिउं निरइचारं । दंसणपमुहेक्कारस पडिमाओ तह य फासित्ता ॥ ७१ ॥

---

प्रचण्डतुण्डाभिः पिपीलिकाभिः खादिते शरीरे मुनेस्तस्य । छिद्राणि राजन्ते समस्तपापनिःसारद्वाराणीव दीर्घकाणि ॥ ६६ ॥ सार्धद्विदिवसैर्धीमान् सम्यग् समाराध्योत्तमार्थम् । सुरालयं स सहस्रारनामानं प्राप्तः सुचारित्रधनो महात्मा ॥ ६७ ॥ अत्यन्तचण्डमनोवचनकाय इत्यादि यत्पुरोक्तम् । तदुदाहरणं भणितमितः प्रकृतं निशामयत ॥ ६८ ॥ सुविनिश्चितपरमार्थोऽनार्य्यजनकार्यवर्जनोद्युक्तः । इति गुणवानाराधनाया अर्हो भवेद् गृही ॥६९॥ किन्तु सुदर्शनमूलं पञ्चानुव्रतसमन्वितं तथा च । त्रिगुणव्रतोपपेतं चतुःशिक्षाव्रतसनाथं च ॥ ७० ॥ श्रमणोपासकविषयं धर्मं परिपाल्य निरतिचारम् । दर्शनप्रमुखैकादश प्रतिमास्तथा च स्पृष्ट्वा ॥ ७१ ॥

बलविरियाणं हाणिं वियाणिउं कुणति अन्तकालम्मि । आराहणं जिणाणाणुसारओ सुद्धपरिणामो ॥ ७२ ॥ संविग्गं गीयत्थं साहू विव गुरुजणं समासज्ज । पंचसमिओ तिगुत्तो अणिगूहियसत्तबलविरिओ ॥७३॥ पइ-दिण पवड्ढमाणुत्तरोत्तरच्चन्तपरमसंवेगो । सम्ममवगम्म रम्मं सुत्तत्थेहिं जिणिंदमतं ॥ ७४ ॥ तप्पारतंतजोगा अणुसोयं वज्जिऊण जत्तेण । पडिसोयलद्धलक्खो जुत्तो य पमायपरिहारे ॥ ७५ ॥ संते बलम्मि अणहे संते विरियम्मि चरणकरणखमे । संते पुरिसक्कारे संतम्मि परक्कमे तह य ॥ ७६ ॥ चरिऊण चिरं चरणं बलविरि-याईसु हायमाणेसु । (दक्खो) हछं पच्छिमकालम्मि चेव आराहणं कुज्जा ॥ ७७ ॥ इहरा बलविरियाईसु संतेसु वि अहिलसेज्ज जो मूढो । आराहणमिह तमहं मन्ने सामन्ननिव्विण्णं ॥ ७८ ॥

---

बलवीर्ययोर्हानिं विज्ञाय करोत्यन्तकाले । आराधनां जिनाज्ञानुसारात् शुद्धपरिणामः ॥ ७२ ॥ संविग्नं गीतार्थं साधुरपि गुरुजनं समासाद्य । पञ्चसमितित्रिगुप्तोऽनिगूहितसत्त्वबलवीर्यः ॥ ७३ ॥ प्रतिदिनं प्रवर्द्धमानोत्तरोत्तरात्यन्तपरमसंवेगः । सम्यगवगम्य रम्यं सूत्रार्थाभ्यां जिनेंद्रमतम् ॥७४॥ तत्पारतन्त्र्ययोगादनुश्रोतं वर्जित्वा यत्नेन । प्रतिश्रोतलब्धलक्षो युक्तश्च प्रमादपरिहारे ॥७५॥ सति बलेऽनघे सति वीर्ये चरणकरणक्षमे । सति पुरुषाकारे सति पराक्रमे तथा च ॥ ७६ ॥ चरित्वा चिरं चरणं बलवीर्यादिषु हीयमानेषु । दक्षः पश्चिमकाले चैवाराधनां कुर्यात् ॥ ७७ ॥ इतरथा बलवीर्यादिषु सत्स्वप्यभिलसेद् यो मूढः । आराधनमिह तमहं मन्ये श्रामण्यनिर्विण्णम् ॥ ७८ ॥

जइ पुण वाही होज्जा सिग्घं पारद्धधम्मविग्घकरी । माणुसतेरिच्छियतियससंभवा अहव उवसग्गा ॥७९॥ अणुकूला वा सत्तू चारित्त धणावहारिणो होंति । दुब्भिक्खं वा गाढं अडवीए विप्पणट्ठत्तं ॥ ८० ॥ जंघाबलं व हीएज्ज होज्ज वि गेलन्नमिंदियाणं वा । अपुव्वधम्मगुणअज्जणम्मि सत्ती व न हवेज्जा ॥ ८१ ॥ अन्नम्मि वावि एयारिसम्मि आगाढकारणे जाए । आराहणं करेज्ज ता सिग्घं चिय न चयणिज्जं ॥ ८२ ॥ जे पुण सयं कुसीला कुसीलसंगम्मि चेव हरिसपरा । निच्चंपि चंडदंडा नहु ते आराहणा अरिहा ॥ ८३ ॥ तह पयइ निग्घिणमणा-कसायकलुसा पवड्ढियामरिसा । अणियत्तचित्ततण्हा मोहोवहया नियाणकडा ॥ ८४ ॥ जे वि य अच्चासायणनिरया जिणसिद्धसूरिपमुहाणं । परवसणदंसणुप्पज्जमाणमाणसपमोया य ॥ ८५ ॥

---

यदि पुनर्व्याधिर्भवेत् शीघ्रं प्रारब्धधर्मविघ्नकरी । मानुषतिर्यक्त्रिदशसंभवा अथवोपसर्गाः ॥ ७९ ॥ अनुकूला वा सत्यचारित्र धनापहारिणो भवन्ति । दुर्भिक्षं वा गाढाटव्यां विप्रनष्टत्वम् ॥ ८० ॥ जंघाबलं वा हीयेत् भवेदपि ग्लानत्वमिंद्रियाणां वा । अपूर्वधर्मगुणार्जने शक्तिर्वा न भवेत् ॥ ८१ ॥ अन्यस्मिन् वाप्येतादृश आगाढकारणे जाते । आराधनां कुर्यात् तदा शीघ्रमेव न त्यजनीयम् ॥८२॥ ये पुनः स्वयं कुशीलाः कुशीलसङ्गे चैव हर्षपराः । नित्यमपि चण्डदण्डा नहि त आराधनार्हाः ॥ ८३ ॥ तथा प्रकृतिनिर्घृणमनसः कपायकलुपाः प्रवर्धितामर्षाः । अनियत्तचित्ततृष्णा मोहोपहता निदानकृताः ॥८४॥ येऽपि चात्याशातनानिरता जिनसिद्धसूरिप्रमुखानाम् । परव्यसनदर्शनोत्पद्यमानमानसप्रमोदाश्च ॥ ८५ ॥

सद्दाइविसयगिद्धा मद्धम्मपरम्मुहा पमायपरा । सव्वत्थ निरणुतावा न ते वि आराहगा होंति ॥८६॥ तह जे न केवलं चिय अधम्मवंता सयं सहावेण । जे वि य पच्चूहपरा धम्मपराणं पराणं पि ॥ ८७ ॥ चेइयसाहारण-दव्वदोहदुट्ठा ठिया य रिसिघाए जे । जे य जिणवरागम उस्सुत्तपरुवणवरा य ॥ ८८ ॥ सरयससिलच्छि सच्छह जिणसासणजसविणासगा जे य । जे वि य वइणीविद्धंसकारिणो किर महापावा ॥ ८९ ॥ परलोगनिप्पि-वासा इह लोगे चेव सुट्ठु पतिवद्धा । निच्चं पसत्तचित्ता अट्ठारसपावठाणेसु ॥ ९० ॥ जं च विसिट्ठजणाणं असंमयं जं च धम्मसत्थाणं । तत्थ वि जे गाढरया पडिसिद्धाराहणा तेसिं ॥ ९१ ॥ सत्थग्गि विसविसूइय-सावयसलिलाइवसणपत्तो जो । आह स कहमाराहओ सिग्घं मारिन्ति एयाइं ॥ ९२ ॥

---

शब्दादिविषयगृद्धाः सद्धर्म्मपराङ्मुखाः प्रमादपराः । सर्वत्र निरनुतापा नैतेऽप्याराधका भवन्ति ॥ ८६ ॥ तथा येन केवलमेवाधर्म्मवन्तः स्वयं स्वभावेन । येऽपि च प्रत्यूहपरा धर्मपराणां पराणामपि ॥८७॥ चैत्यसाधारणद्रव्यद्रोहदुष्टाः स्थिताश्चर्षिघाते ये । ये च जिनवरागमोत्सूत्रप्ररूपणपराश्च ॥ ८८ ॥ शरच्छशिलक्ष्मीस्वच्छजिनशासनयशोविनाशका ये च । येऽपि च व्रतिनीविध्वंसकारिणः किल महापापाः ॥ ८९ ॥ परलोकनिर्पिपासा इह लोके चैव सुष्ठु प्रतिबद्धाः । नित्यं प्रसक्तचित्ता अष्टादशपापस्थानेषु ॥ ९० ॥ यच्च विशिष्टजनानामसंमतं यच्च धर्म्मशास्त्राणाम् । तत्रापि ये गाढरताः प्रतिषिद्धाराधना तेषाम् ॥ ९१ ॥ शस्त्राग्निविषविसूचिकाश्वापदसलिलादिव्यसनप्राप्तो यः । आह, स कथमाराधकः शीघ्रं म्रियंत एतानि ॥ ९२ ॥

'गुरुराह' नणु संखेवाराहणमाराहइ सो वि पुव्वभणियमिणं। जह महुराया जह वा सुकोसलो रायरिसि पवरो ॥ ९३ ॥ 'अवि य' जो किर धीवलकलिओ उवसग्गप्पभवभयममन्नंतो। झत्ति ओवट्ठियमेत्ते उवसग्गे अह व पत्ते वि ॥९४॥ जावज्जवि किर सवरो ताव च्चिय आयहियविइण्णमणो। सम्मं अमूढलक्खो जीवियमरणेसु य समाणो ॥ ९५ ॥ अवि संभवंतमरणे रणे व्व सुहडो अभिन्नमुहरागो। आराहणं संक्खेवओ वि कुज्जा महासत्तो ॥ ९६ ॥ इय सुत्तवुत्तजुत्तीजुत्ताए संवेगरंगसालाए। परिकम्मविहीपामोक्खचउमहामूलदाराए ॥ ९७ ॥ आराहणाए पन्नरसपडिदारमयस्स पढमदारस्स। वित्थर उपरिकहियं पढममिमं अरिहदारंति ॥९८॥ आराहणाए अरिहो निदंसिओ संपयं च जेण सो। लिंगिज्जइ लिंगेणं लेसुद्देसेण तं भणिमो ॥ ९९ ॥

---

'गुरुराह' ननु संक्षेपाराधनामाराधति सोऽपि पूर्वभणितामिमाम्। यथा मधुराजा यथा वा सुकौशलो राजर्षिप्रवरः ॥ ९३ ॥ 'अपि च' यः किल धीवलकलित उपर्गः प्रभवभयममन्यमानः। झटित्युपस्थितमात्रानुपसर्गानथवा प्राप्तोऽपि ॥ ९४ ॥ यावदद्यापि किल स वरात्तावदेव आत्महितवितीर्णमनाः। सम्यगमूढलक्षो जीवितमरणयोः च समानः ॥ ९५ ॥ अपि संभवन्मरणे रण इव सुभटोऽभिन्नमुखरागः। आराधनां संक्षेपादपि कुर्यान्महासत्त्वः ॥ ९६ ॥ इति सूत्रोक्तयुक्तियुक्तायां संवेगरङ्गशालायाम्। परिकर्मविधिप्रमुखचतुर्महा मूलद्वारायाम् ॥९७॥ आराधनायां पञ्चदश प्रतिद्वारमयस्य प्रथमद्वारस्य। विस्तरतः परिकथितं प्रथममिदमर्हद्वारमिति ॥९८॥ आराधनायामर्हो निदर्शितः सांप्रतं च येनैपः। लिङ्गयते लिङ्गेन लेशोद्देशेन तं भणामः ॥ ९९ ॥

निच्चकरणीय जोगा परलोयपसाहगा जिणुदिट्ठा । जे आसि पुरा अह ताण चेव सविसेसमत्तम्मि ॥१२००॥ सम्मं उज्जमणं जं संवेगरसाइरेगओ गाढं । आराहणाअरिहत्ते आराहणलिंगमिणमेव ॥ १ ॥ उस्सग्गियं च तं सावगस्स निक्खित्तसत्थमुसलत्तं । ववगयमालावन्नगविलेवणुव्वट्टणत्तं च ॥ २ ॥ अप्पडिकम्मसरीरत्तणं च पइरिक्कदेसवत्तित्तं । लज्जाछायणमेत्तोवहित्त समभावभावित्तं ॥ ३ ॥ पाएण पडिखणं पि हु सामाइयपोसहाइनिरयत्तं पडिबंधचाइत्तं तह भवनेगुण्ण भावित्तं ॥ ४ ॥ सद्धम्मकम्मउज्जयजणवज्जियसन्निवेसवज्जित्तं । कामवियारुप्पायगदव्वाणं वि अणभिलासित्तं ॥ ५ ॥ निच्चं गुरुजणवयणाणुरागसंभिन्नसत्तधाउत्तं । परिमियफासुयपाणन्नभोगवत्तित्तमणुदियहं ॥ ६ ॥

---

नित्यं करणीययोगाः परलोकप्रसाधका जिनोद्दिष्टाः । य आसन् पुरा अथ तेषां चैव सविशेषमात्मनि ॥१२००॥ सम्यगुद्यमनं यत्संवेगरसातिरेकतो गाढम् । आराधनार्हत्व आराधणालिङ्गमिदमेव ॥१॥ औत्सर्गिकं च तत् श्रावकस्य निक्षिप्तशस्त्रमुसलत्वम् । व्यपगतमालावर्णककविलेपनोद्वर्त्तनत्वं च ॥ २ ॥ अप्रतिकर्मशरीरत्वं च प्रतिरिक्तदेशवर्त्तित्वम् । लज्जाच्छादनमात्रोपधित्वं समभावभावित्वम् ॥ ३ ॥ प्रायेण प्रतिक्षणमपि हि सामायिकपोषधादिनिरतत्वम् । प्रतिबन्धत्यागित्वं तथा भवनैर्गुण्यभावित्वं ॥ ४ ॥ सद्धर्मकर्म्मोद्यतजनवर्जितसन्निवेशवर्जित्वम् । कामविकारोत्पादकद्रव्याणामप्यनभिलाषित्वम् ॥५॥ नित्यं गुरुजनवचनानुरागसंभिन्नसप्तधातुत्वम् । परिमितप्रासुकपानान्नभोगवृत्तित्वमनुदिवसम् ॥ ६ ॥

एमाइ गुणब्भासत्तणं खु आराहगस्स इह गिहिणो। लिंगमह जइणो वि हु सामन्नेणं इमं णेयं ॥ ७ ॥ मुहणंतग ॥ १ ॥ रयहरणं ॥ २ ॥ वोसट्ठसरीरया ॥ ३ ॥ अचेलुक्कं ॥ ४ ॥ सिरलोय ॥ ५ ॥ पंचभेयोउस्सग्गियलिंगकप्पो सो ॥ ८ ॥ संजमजत्ता साहण चिंध जणपच्चओ ठिईकरणं। गिहिभावविवेगो चिय लिंगग्गहणे गुणा होंति ॥ ९ ॥ तं लिंगं जहाजायं अव्वभिचारी सरीरपडिवद्धं। उवही पुण थेराणं चोद्दसहा सुत्तणिद्दिट्ठो ॥ १० ॥ सीसोवरिकायपमज्जणाय मुहमरुतमाईरक्खट्ठा। रयरेणुरक्खणट्ठा दिट्ठं मुहणंतगं मुणिणो ॥ ११ ॥ दारं ॥ रयसेयाणमग्गहणं मद्दवसुकुमारया लहुत्तं च। जत्थेए पंचगुणा तं रयहरणं पसंसंति ॥ १२ ॥ इरियाट्ठाणे निक्खेवविवेगे तह य निसियणो सयणे। उव्वत्तणमाईसुं पमज्जणट्ठाए रयहरणं ॥ १३ ॥

---

एवमादि गुणाभ्यासत्वं खल्वाराधकस्येह गृहिणो। लिङ्गमथ यतेरपि हि सामान्येनेदं ज्ञेयम् ॥ ७ ॥ मुखानन्तक ॥ १ ॥ रजोहरणं ॥ २ ॥ व्युत्सृष्टशरीरता ॥ ३ ॥। अचेलत्वं ॥ ४ ॥ शिरलोचं ॥ ५ ॥ पञ्चभेदौत्सर्गिकलिङ्गकल्पः स ॥ ८ ॥ संयमयात्रासाधनं चिह्नं जनप्रत्ययः स्थितिकरणम्। गृहीभावविवेक एव लिङ्गग्रहणे गुणा भवन्ति ॥ ९ ॥ तल्लिङ्गं यथाजातमव्यभिचारी शरीरप्रतिबद्धम्। उपधिः पुनः स्थविराणां चतुर्दशधा सूत्रनिर्दिष्टः ॥ १० ॥ शिररुपरिकायप्रमार्जनाय मुखमरुदादिरक्षणार्थम्। रजोरेणुरक्षणार्थं दिष्टं मुखानन्तकं मुनेः ॥ ११ ॥ 'द्वारं' रजः स्वेदानामग्रहणं मार्दवसुकुमारता लघुत्वं च। यत्रैते पञ्च गुणास्तं रजोहरणं प्रशंसन्ति ॥ १२ ॥ ऐर्यास्थाने निक्षेपविवेके तथा च निसीदने शयने। उद्वर्त्तनादिषु प्रमार्ज्जनार्थं रजोहरणम् ॥ १३ ॥

दारं ॥ अब्भंगसिणाणुव्वट्टणाणि तह केसमंसु संठप्पं । वज्जेइ दंतमुहनासियच्छिभमुहाइसंठवणं ॥ १४ ॥ जल्लमल्लदिद्धदेहो लुक्खो कयलोयविगयसिरसोहो । जो रूढनक्खरोमो सो गुत्तो बंभचेरम्मि ॥१५॥ दारं ॥ जुन्नेहिं मलिणेहिं य पमाणजुत्तेहिं थोवमुल्लेहिं । चेलेहिं संतेहिं वि जियरक्खट्ठा अचेलक्कं ॥ १६ ॥ गंथचाओ लाघवमप्पा पडिलेहणा गयभयत्तं । वेसासियं च रूवं अणायरो देहसोक्खेसु ॥ १७ ॥ जिणपडिरूवं विरियायारो रागादिदोसपरिहरणं । इच्चेव साइबहुया अचेलक्के गुणा होंति ॥ १८ ॥ दारं ॥ पयडमहासत्तत्तं जिणवहुमाणो तदुत्तकरणेणं । दुक्खसहत्तं नरगाइ भावणाए य निव्वेओ ॥ १९ ॥ आणक्खिया य लोएण अप्पणो होति धम्मसद्धावि । न य सुहसंगो पच्छा पुरकम्मविवज्जणं चेव ॥ २० ॥

---

'द्वारम्' अभ्यङ्गस्नानोद्वर्त्तनानि तथा केशश्मश्रुसंस्थाप्यम् । वर्जेति दन्तमुखनासिकाक्षिभ्रुवादिसंस्थापनम् ॥ १४ ॥ जल्यमल्यदिग्धदेहशुष्कक्रतलोचविगतशिरःशोभः । यो रूढनखरोमः स गुप्तो ब्रह्मचर्ये ॥ १५ ॥ 'द्वारम्' जीर्णैर्मलिनैश्च प्रमाणयुक्तैः स्तोकमौल्यैः । चेलैः सद्भिरपि जीवरक्षार्थमचेलत्वम् ॥ १६ ॥ ग्रन्थत्यागो लाघवमल्पाप्रतिलेखना गतभयत्वम् । विश्वासिकं च रूपमनादरो देहसौख्येपु ॥ १७ ॥ जिनप्रतिरूपं वीर्याचारो रागादिदोषपरिहरणम् । इत्येवमादि बहुका अचेलत्वे गुणा भवन्ति ॥ १८ ॥ 'द्वारम्' प्रकटमहासत्त्वत्वं जिनबहुमानस्तदुक्तकरणेन । दुःखसहत्वं नरकादि भावनानां च निर्वेदः ॥ १९ ॥ अनाकांक्षिता च लोचेनात्मनो भवति धर्मश्रद्धापि । न च सुखसंगः पश्चात् पुराकर्म विवर्जनं चैव ॥ २० ॥

देहम्मि वि अममत्तं भूसाचाओ य निव्वियारत्तं । अप्पा य होइ दमिओ लोयम्मि गुणा इमे इहरा ॥ २१ ॥ जाएज्ज संकिलेसो वाहिज्जन्तस्स जूयलिक्खाहिं । कंडुयणे पुण णियमा तासिं संघट्टमाईया ॥ २२ ॥ इय पंचरूपसामन्नलिंगमुवदंसियं समणविसयं । एत्तो सविसेसं पि हु तमहं दोण्हं पि पकहेमि ॥ २३ ॥ नाणाइ गुणगणागरगुरुपयपंकयपसायणपरत्तं । थेवे वि हु अवराहे पुणो पुणो अत्तणो गरिहा ॥ २४ ॥ सविसेसाराहणकरणनिरयमुणिसक्कहासवणवंछा । अइचार पंकपम्मुक्कमूलगुणसेवणाभिरई ॥ २५ ॥ पिंडविसुद्धिप्पमुहप्पहाणकिरियासु बद्धलक्खत्तं । पुव्वपडिवन्नसंजमनिरवज्जुज्जोगसंजुत्तं ॥ २६ ॥ एमाइ गुणकलावो विसेसलिंगत्तणेणमवसेओ । समणाण गिहत्थाण य हियाभिकंखीण जहजोग्गं ॥ २७ ॥

---

देहेऽप्यममत्वं भूषात्यागश्च निर्विकारत्वम् । आत्मा च भवति दमितो लोके गुणा अमीतरथा ॥ २१ ॥ जायेत संक्लेशो बाध्यमानस्य यूकलीक्षाभिः । कण्डूयने पुनर्नियमात् तासां संघट्टादिकाः ॥२२॥ इति पञ्चरूपं सामान्यलिङ्गमुपदर्शितं श्रमणविषयम् । इतः स विशेषमपि हि तमहं द्वयोरपि प्रकथयामि ॥ २३ ॥ ज्ञानादिगुणगणाकरगुरुपदपंकजप्रसादनपरत्वम् । स्तोकेऽपि ह्यपराधे पुनः पुनरात्मनो गर्हा ॥ २४ ॥ सविशेषाराधनाकरणनिरतमुनिसत्कया श्रवणवांछा । अतिचारपंकप्रमुक्तमूलगुणसेवनाभिरतिः ॥ २५ ॥ पिण्डविशुद्धिप्रमुखप्रधानक्रियासु बद्धलक्षत्वम् । पूर्वप्रतिपन्नसंयमनिरवद्योद्योगसंयुक्तम् ॥ २६ ॥ एवमादि गुणकलापो विशेषलिङ्गत्वेनावसेयम् । श्रमणानां गृहस्थानां च हिताभिकांक्षिणां यथायोग्यम् ॥ २७ ॥

'नवरं' एवंविहगुणजुआवि कहमवि य कोहपडिबद्धा। चोयणवसेण सुगुरूसु सुगईपहसत्थवाहेसु ॥२८॥ कुव्वंति जे पओसं उक्कलिज्जंति कूलवालो व्व। आराहणा महाधणनिहाणलाभाओ ते अचिरा ॥२९॥ तहाहि ॥ आसि चरणाइगुणमणिरोहणगिरिणो विसिट्ठसंघयणा। निज्जियमोहमल्ला महल्लमाहप्पदुद्धरिसा ॥ ३० ॥ संगमसीहा नामेण सूरिणो भूरिसिस्सपरिवारा। तेसिं सिस्सो एगो मणागमुस्सिंखलसहावो ॥ ३१ ॥ कुणमाणो वि हु दुक्करतवो विहाणाइं णिययबुद्धीए। आणासारं चरणं न पवज्जइ कुग्गहवसेण ॥ ३२ ॥ चोइंति सूरिणो तं दुस्सिक्ख किमेवमफलमप्पाणं। उस्सुत्तकट्ठचेट्ठाए दुट्ठ सन्तावमुवणेसि॥ ३३ ॥ आणाए च्चिय चरणं तब्भंगे जाण किं न भग्गंति। आणं वइक्कमंतो कस्साएसा कुणसि सेसं ॥ ३४ ॥

---

'नवरम्' एवंविधगुणयुता अपि कथमपि च क्रोधप्रतिबद्धाः। चोदनवशेन सुगुरुषु सुगतिपथसार्थवाहेषु ॥ २८ ॥ कुर्वन्ति ये प्रद्वेषमुत्कूलन्ति कूलवाल इव। आराधना महानिधानलाभात् तेऽचिरेण 'तथाहि' ॥ २९ ॥ आसीच्चरणादिगुणमणिरोहणगिरेर्विशिष्टसंघटनाः। निर्जितमोहमल्ला महामाहात्म्यदुर्द्धर्षाः ॥ ३० ॥ संयमशिखा नाम्ना सूरयो भूरिशिष्यपरिवाराः। तेषां शिष्य एको मनागुच्छृंखलस्वभावः ॥ ३१ ॥ कुर्वाणोऽपि हि दुष्करतपोविधानानि निजबुद्ध्या। आज्ञासारं चरणं न प्रपद्यते कुग्रहवशेन ॥ ३२ ॥ चोदन्ति सूरयस्तं दुःशिक्ष? किमेवमफलमात्मानम्। उत्सूत्रकष्टचेष्टया दुष्ट? संतापमुपनयसि ॥ ३३ ॥ आज्ञयैव चरणं तद्भंगे जानीहि किं न भग्नमिति। आज्ञां व्यतिक्रमन् कस्यादेशात् करोसि शेषाम् ॥ ३४ ॥

एवं सासिज्जंतो गुरूसु वेरं स उव्वहति घोरं । अह अन्नया कयाई तेणेक्केणं समं गुरुणो ॥ ३५ ॥ एक्कम्मि गिरिवरम्मि सिद्धसिलावंदणत्थमारूढा । सुचिरं च तं नमंसिय सणियं ओयरिउमारद्धा ॥ ३६ ॥ अह तेण दुव्विणीएण चिंतिअं नूण एस पत्थावो । ता दुव्वयणणिहाणं हणामि आयरियमेयमहं ॥ ३७ ॥ जइ एत्थ पत्थावे उवेहियो एस निस्सहावि । ता जाव जीवं निब्भच्छिही ममं दुट्ठसिक्खाहिं ॥ ३८ ॥ इय चिंतिऊण पट्ठिट्ठिएण महई सिला परिमुक्का । सूरीणं हणणट्ठा दिट्ठा य कहिं पि सा तेहिं ॥ ३९ ॥ तो ओसरिउं सिग्घं पयंपियं रे महादुरायार? । गुरुपच्चणीय? अच्चंतपावमियववसिओ कीस ॥ ४० ॥ न मुणसि लोगट्ठिइं पि हु उवयारिसु जं करेसि वहबुद्धिं । जे सुवयारे थोवं समग्ग तइलोक्कदाणं पि ॥ ४१ ॥

---

एवं शिक्ष्यमानो गुरुषु वैरं स उद्वहति घोरम् । अथान्यदा कदाचित् तेनैकेन समं गुरवः ॥ ३५ ॥ एकस्मिन् गिरिवरे सिद्धशिलावन्दनार्थमारूढाः । सुचिरं च तं नत्वा शनैरवरीतुमारब्धाः ॥ ३६ ॥ अथ तेन दुर्विनीतेन चिन्तितं नूनमेषः प्रस्तावः । तस्माद् दुर्वचननिधानं हनाम्याचार्यमेतमहम् ॥ ३७ ॥ यद्यत्रापि प्रस्ताव उपेक्षित एष निस्स्वभावोऽपि । तदा यावज्जीवं निभर्त्स्यति मां दुष्टशिक्षाभिः ॥ ३८ ॥ इति चिन्तित्वा पृष्टिस्थितेन महती शिला परिमुक्ता । सूरीणां हननार्थं दिष्टा च कथमपि सा तैः ॥ ३९ ॥ ततोऽपसृत्य शीघ्रं प्रजल्पितं रे महादुराचार? । गुरुप्रत्यनीक? अत्यन्तपापमिति व्यवसितः कस्मात् ॥ ४० ॥ न जानासि लोकस्थितिमपि ह्युपकारिषु यत्करोषि वधबुद्धिम् । येषामुपकारे स्तोकं समग्रं त्रैलोक्यदानमपि ॥ ४१ ॥

मन्नंती उवयारं ताण वि सीसा उ केवि अवणीए । उद्दिंति वहाय परे तुमं व सुचिरोवचरियावि ॥४२॥ अह वा कुपत्तसंगहवसेण एसेव नूण होइ गई । न कयाइ महाविसविसहरेण सह निवहइ मेत्ती ॥ ४३ ॥ इय एवं विहगुरुपावकम्मनिम्मूलदलियसुकयस्स । सवन्नु धम्मपालणदूरा जोग्गस्स तुह पाव ॥ ४४ ॥ होही एत्तो इत्थी-सयासओ नूणलिंग चाओ वि । एवं सविउं सूरी जहागयं पडिनियत्तो त्ति ॥ ४५ ॥ तह काहं जह एयस्स सूरिणो भवइ वयणमसच्चं । इय चिंतिउं कुसिस्सो सोयओ गओ रन्नभूमीए ॥ ४६ ॥ जणसंचारविरहिए एगंमि तावसासमम्मि ठिओ । कूले नईए उग्गं तवं च काउं समाढत्तो ॥ ४७ ॥ पत्ते य वरिसायाले तत्तव-तुट्ठाए देवयाए नई । मा हीरिही जलेणं ति वाहिया अवरकूलेण ॥ ४८ ॥

---

मन्यन्त उपकारं तेपां अपि शिष्यास्तु केऽप्यवन्याम् । उद्दम्यन्ति बधायापरे त्वमिव सुचिरोपचरिता अपि ॥ ४२ ॥ अथवा कुपात्रसंग्रहवशेनैप एव नूनं भवति गतिः । न कदापि महाविषविपधरेण सह निर्वहते मैत्री ॥ ४३ ॥ इत्येवंविधगुरुपापकर्मनीर्मूलदलितसुकृतस्य । सर्वज्ञधर्मपालनदूरायोग्यस्य तव पाप ? ॥ ४४ ॥ भविष्यतीतः स्त्रीसकाशान्नुनं लिङ्गत्यागोऽपि । एवं शप्त्वा सूरिर्यथागतं प्रतिनिवृत्त इति ॥ ४५ ॥ तथा करिष्यामि यथैतस्य सूरेर्भवति वचनमसत्यम् । इति चिन्तित्वा कुशिष्यः शोकाद् गतोऽरण्यभूम्याम् ॥ ४६ ॥ जनसंचारविरहिते एकस्मिन् तापसाश्रमे स्थितः । कूले नद्या उग्रं तपश्च कर्तुं समारब्धः ॥४७॥ प्राप्ते च वर्षाकाले तत्तपस्तुष्टया देवतया नदी । मा ह्रियते जलेनेति वाहितापरकूलेन ॥ ४८ ॥

अह कूलंतरलग्गं दट्ठूण नइं जणेण से विहियं । तद्देसगेण गुत्तं अभिहाणं कूलवालोत्ति ॥ ४९ ॥ तप्पहपयट्टसत्थाओ लद्धभिक्खाए जीवमाणस्स । लिंगच्चागो जातो जह से तह संपयं भणिमो ॥ ५० ॥ चंपाए नयरीए असोगचंदो त्ति पत्थिवो अत्थि । सेणियनरिंदपुत्तो विक्कमअक्कन्तरिउचक्को ॥ ५१ ॥ हल्लविहल्ला से लहुगभाउणो तेसिं सेणिएण वरो । हत्थीहारो दिन्नो अभएणवि पव्वयंतेण ॥ ५२ ॥ खोमं कुंडलजुयलं जणणीतणयं पणामियं तेसिं । अह खोमहारकुंडलविराइए करिवरारूढे ॥ ५३ ॥ ते चंपाए तियचच्चरेसु दोगुंदुगोव्व कीलंते । दट्ठुं असोगचंदो भणितो भज्जाए सामरिसं ॥ ५४ ॥ रायसिरी परमत्थेण देव? एएसि तुज्झ भाऊण । जे एवमलंकरिया करिखंधगाया पक्कीलंति ॥ ५५ ॥

---

अथ कूलान्तरलग्नां दृष्ट्वा नदीं जनेन तस्य विहितम् । तद्देशकेन गोत्रमभिधानं कूलवाल इति ॥ ४९ ॥ तत्पथप्रवृत्तसार्थाल्लब्धभिक्षया जीवमानस्य । लिङ्गत्यागो जातो यथा तस्य तथा सांप्रतं भणामः ॥ ५० ॥ चम्पायां नगर्यामशोकचन्द्र इति पार्थिवोऽस्ति । श्रेणिकनरेन्द्रपुत्रो विक्रमाक्रान्तरिपुचक्रः ॥ ५१ ॥ हल्लविहल्लौ तस्य लघुभ्रातरौ ताभ्यां श्रेणिकेन वरः । हस्तिहारो दत्तोऽभयेनापि प्रव्रजता ॥ ५२ ॥ क्षोमं कुण्डलयुगलं जननीतनुकमर्प्पितं ताभ्याम् । अथ क्षोमहारकुण्डलविराजितौ करिवरारूढौ ॥ ५३ ॥ तौ चम्पायास्त्रिकचत्वरेषु द्वौ गुन्दुकाविव क्रीडन्तौ । दृष्ट्वा अशोकचन्द्रो भणितो भार्यया सामर्षम् ॥ ५४ ॥ राजश्रीः परमार्थेन देव ? एतयोस्ते भ्रात्रोः । यौ एवमलंकृतौ करिस्कन्धगतौ प्रक्रीडतः ॥ ५५ ॥

तुह पुण मोत्तुं आयासमेक्कमन्नं न रज्जफलमत्थि । ता तुममेए पत्थेसु हत्थिपमुहाइं रयणाइं ॥ ५६ ॥ रन्ना पयंपियं कह मयच्छि पिउणा पणामियाइं सयं । लहुभाईणमिमाणिं मग्गन्तो नेव लज्जामि ॥ ५७ ॥ तीए भणियं का नाह एत्थ लज्जापरं बहुं रज्जं । दाऊणमिमेसिं करिपमोक्खरयणाति लिंतस्स ॥५८॥ इय पुणरुत्तं तीए तज्जिज्जंतो महीवई सम्मं । एगम्मि अवसरम्मि हल्लविहल्ले इमं भणति ॥ ५९ ॥ भो तुब्भमहं सविसेसमवरकरितुरयरयणदेसाई । देमि मम च समप्पह ताव इमं हत्थिवररयणं ॥ ६० ॥ आलोचिऊण देमो त्ति जंपिउं ते गया णिययठाणे । मा णेत्थिही हठेणं ति भयवसा रयणिसमयम्मि ॥ ६१ ॥ हत्थिम्मि समारुहिउं अमुणिज्जन्तजणेण णीहरिया । वेसालीए पुरीए चेडगरायं समल्लीणा ॥ ६२ ॥

---

तव पुनर्मुक्त्वाऽऽयासमेकमन्यं न राज्यफलमस्ति । तस्मात् त्वमेतेभ्यः प्रार्थस्व हस्तिप्रमुखानि रत्नानि ॥ ५६ ॥ राज्ञा प्रजल्पितं कथं मृगाक्षि ? पित्राऽर्पितानि स्वयं । लघुभ्रातृभ्यामिमानि याचन्नेव लज्जामि ॥ ५७ ॥ तया भणितं का नाथ ? अत्र लज्जापरं बहु राज्यम् । दत्त्वाऽऽभ्यां करिप्रमुखरत्नानि···लातः ॥ ५८ ॥ इति पुनः पुनस्तया तर्ज्यमानो महीपतिः सम्यक् । एकस्मिन्नवसरे हल्लविहल्लौ इदं भणति ॥ ५९ ॥ भो ? युवाभ्यामहं सविशेषमपरकरितुरगरत्नदेशानि । ददामि मह्यं च समर्पयतस्तावदिदं हस्तिवररत्नम् ॥ ६० ॥ आलोक्य ददाव इति जल्पित्वा तौ गतौ निजस्थाने । मा नैषीष्ट हठेनेति भयवशाद् रजनीसमये ॥ ६१ ॥ हस्तौ समारुह्याज्ञायमानजनेन निःसृतौ । वैशाल्यां पुर्यां चेटकराजं सम्प्राप्तौ ॥ ६२ ॥

नाया असोगचंदेण तदणुविणएण दुयवयणेहिं। हल्लविहल्ले पेसेहि सिग्घमिति चेडगो भणितो ॥ ६३ ॥ अह चेडगेण भणियं नीणेमि कहं इमे हठेणाहं। सयमेव तुमं संबोहिऊण उचियं समायरसु ॥६४॥ एए तुमं च जम्हा धूयसुया मज्झ नत्थि हु विसेसो। गेहागयत्ति णवरं बला न सक्केमि पेसेउं ॥ ६५ ॥ एवं सोच्चा रुट्ठेण तेण पुणरवि य चेडगो भणितो। पेसेसु कुमारे अहव जुज्झसज्जो लहुं होसु ॥ ६६ ॥ पडिवन्ने जुज्झे चेडगेण काउं समग्गसामग्गिं। वेसालीए पुरीए असोगचंदो लहुं पत्तो ॥ ६७ ॥ जुज्झेण संपलग्गो णवरं चेडगमहामहीवइणा। कालप्पमुहा दस अवरमाउगा भाउगा तस्स ॥ ६८ ॥ दसहिं दिवसेहिं च हिया अमोहमेक्कं सरं खिवंतेण। किर से एक्कदिणंतो एक्कं सरक्खेव नियमो त्ति ॥ ६९ ॥

---

ज्ञाता अशोकचन्द्रेन तदनु विनयेन दूतवचनैः। हल्लविहल्लौ प्रेषय शीघ्रमिति चेटको भणितः ॥ ६३ ॥ अथ चेटकेन भणितं नयामि कथमिमौ हठेनाहम्। स्वयमेव त्वं संबोध्योचितं समाचर ॥ ६४ ॥ एतौ त्वं च यस्माद् दुहितृ सुता मे नास्ति हि विशेषः। गेहागता इति नवरं बलान्न शक्नोमि प्रेषितुम् ॥६५॥ एवं श्रुत्वा रुष्टेन तेन पुनरपि च चेटको भणितः। प्रेषय कुमारा अथवा युद्धसज्जो लघु भव ॥६६॥ प्रतिपन्ने युद्धे चेटकेन कृत्वा समग्रसामग्रीम्। विशालायां पुर्य्यामशोकचन्द्रो लघु प्राप्तः ॥ ६७ ॥ युद्धेन संप्रलग्नः केवलं चेटकमहामहीपतिना। कालप्रमुखा दशापरमातृका भ्रातरस्तस्य ॥ ६८ ॥ दशभिर्दिवसैश्च हता अमोघमेकं शरं क्षिपता। किल तस्यैकदिनान्त एकशरक्षेपनियम इति ॥ ६९ ॥

एक्कारसमे य दिणे भयभीएणं असोगचंदेणं । चिंतियमहो इयाणिं जुज्झंतो हं विणिस्सामि ॥ ७० ॥ ता जुज्झिउं न जुज्जति इति ओसरिउं रणंगणाउ लहुं। कुणइ स अट्ठमभत्तं सुरसत्तिज्झाभिलासेण ॥ ७१ ॥ अह सोहम्मसुरिंदो चमरो वि य पुव्वसंगयं सरिउं । तं मूले संपत्ता पयंपिउं एवमाढत्ता ॥ ७२ ॥ भो भो देवाणुप्पिय कहेसु किं ते पियं पयच्छामो । रन्ना भणियं मारेह चेडयं वेरियं मज्झ ॥७३॥ सक्केण जंपियं परमसम्मदिट्ठिं इमं न मारेमो । सण्णिज्झं तस्स तुज्झ जइ भणसि ता कुणिमो ॥ ७४ ॥ एयंपि होइ इति जंपिऊण रन्ना असोगचंदेण । चेडगनिवेण सद्धिं पारद्धो समरसंरंभो ॥ ७५ ॥ अप्पडिहयसुरवइपाडिहेरपायडपहावदुप्पेछो । रिउपक्खं निहणंतो सो पत्तो चेडगं जाव ॥ ७६ ॥

---

एकादशमे च दिने भयभीतेनाशोकचन्द्रेन । चिन्तितमहो इदानीं युध्यमानोऽहमपि विनश्यामि ॥ ७० ॥ तस्माद् योद्धुं न युज्यत इत्यपसृत्य रणाङ्गनाल्लघु । करोति सोऽष्टमभक्तं सुरसान्निध्याभिलाषेण ॥ ७१॥ अथ सौधर्म्मसुरेन्द्रश्चमरोऽपि च पूर्वसंगतं स्मृत्वा । तन्मूले संप्राप्य प्रजल्पितुमेवमारब्धौ ॥ ७२ ॥ भो भो देवानुप्रिय ? कथय किं ते प्रियं प्रयच्छामः । राज्ञा भणितं मारयथश्चेटकं वैरिणं मम ॥ ७३ ॥ शक्रेण जल्पितं परमसम्यग्दृष्टिमिमं न मारयावः । सान्निध्यं तस्य तव यदि भणसि तदा कुर्वः ॥ ७४ ॥ एतदपि भवत्विति जल्पित्वा राज्ञाशोकचन्द्रेण । चेटकनृपेण सार्धं प्रारब्धः समरसंरम्भः ॥ ७५ ॥ अप्रतिहत सुरपतिप्रातिहार्यप्रकटप्रभावदुःप्रेक्षः । रिपुपक्षं निघ्नन् न प्राप्तश्चेटकं यावत् ॥ ७६ ॥

तो आयन्नं आयड्ढिऊण चावं कयंतदूओव्व । तं पइ अमोह विसिहो पमुक्को चेडगनिवेण ॥ ७७ ॥ तं च तदंतरचमरिंदरइयफालिह सिलापडिक्खलियं । अवलोइऊण सहस्सा विम्हइओ चेडगनरिंदो ॥ ७८ ॥ खलिए अमोहसत्थे एत्तो नो मज्झ जुज्झिउं जुत्तं । इति चिंतिउं पविट्ठो वेगेण पुरीए मज्झम्मि ॥ ७९ ॥ किंतु गयं से निहणं असुरिंदसुरिंद निम्मिएहिं बहुं । रहमुसलसिलाकंटगरणेहिं चउरंगमवि सेन्नं ॥ ८० ॥ नयरीरोहं काउं असोगचंदो ठिओ चिरकालं । उत्तुंगसालकलिया न वि भज्जति सा कहिं पि पुरी ॥ ८१ ॥ एगम्मि य पत्थावे राया तं भंजिउं अपारंतो । जा सोइंतो अच्छइ ता पढियं देवयाए इमं ॥ ८२ ॥ समणे जइ कूलवालए माग-हियं गणियं लमिस्सई । लाया य असोगचंदए वेसालिं नगलिं गहिस्सइ ॥ ८३ ॥

---

तत आकर्णमाकृष्य चापं कृतान्तदूत इव । तं प्रत्यमोघविशिखः प्रमुक्तश्चेटकनृपेण ॥ ७७ ॥ तं च तदन्तरचमरेन्द्ररचितस्फटिक-शिलाप्रतिस्खलितम् । अवलोक्य सहसा विस्मयितश्चेटकनरेन्द्रः ॥७८॥ स्खलितेऽमोघशस्त्रे इतो न मम योद्धुं युक्तम् । इति चिन्तित्वा प्रविष्टो वेगेन पुर्य्यां मध्ये ॥ ७९ ॥ किन्तु गतं तस्य निधनमसुरेन्द्रसुरेन्द्रनिर्मितैः बहुं । रथमुसलशिलाकंटकरणैश्चतुरंगमपि सैन्यम् ॥ ८० ॥ नगरीरोधं कृत्वाशोकचन्द्रः स्थितश्चिरकालम् । उत्तुङ्गशालकलिता न वि भज्यते सा कथमपि पुरी ॥ ८१ ॥ एकस्मिन् प्रस्तावे राजा तां भंक्तुमसमर्थः । यावच्छोचन्नास्ते तावत् पठितं देवतयेदम् ॥ ८२ ॥ श्रमणो यदि कूलवालको मागधिकां गणिकां रंस्यति । राजा चाशो-कचन्द्रो विशालां नगरीं ग्रहीष्यति ॥ ८३ ॥

हरिसवियसंतवयणो पाउं अमयं व सवणफुडएहिं । वयणमिमं नरनाहो तं समणं पुच्छए लोगं ॥ ८४ ॥ अह कहमवि लोगाउ नईकूलट्ठियमिमं वियाणित्ता । पणतरुणीण पहाणं मागहियं वाहरावेइ ॥ ८५ ॥ भणइ य भद्दे तं कूलवालगं समणमेत्थ आणेहि । एवं करेमि तीए पडिवन्नं विणयपणयाए ॥ ८६ ॥ तो कवडसाविया सा होउं सत्थेण तं गया ठाणं । वंदित्ता तं समणं सविणयं पयंपेइ ॥ ८७ ॥ नियनाहे सग्गगए जिणिंदभवणाइं वंदमाणाहं । सोउं तुब्भे एत्थं समागया वंदणट्ठाए ॥ ८८ ॥ ता अज्जं चिय सुदिणं पसत्थतित्थं व जं तुमं दिट्ठो । एत्तो कुणसु पसायं भिक्खागहणेण मुणिपवरा ॥ ८९ ॥ तुम्हारिसे सुपत्ते निहित्तमप्पंपि दाणमचिरेण । सग्गापवग्गसोक्खाण कारणं जायए जेण ॥ ९० ॥

---

हर्षविकसितवदनः पीत्वामृतमिव श्रवणपुटैः । वचनमिदं नरनाथस्तं श्रमणं पृच्छति लोकम् ॥ ८४ ॥ अथ कथमपि लोकान्नदीकूलस्थितमिमं विज्ञाय । पण्यतरुणीनां प्रधानां मागधिकामाह्वयति ॥ ८५ ॥ भणति च भद्रे ? तं कूलबालकं श्रमणमत्रानय एवं करोमि तया प्रतिपन्नं विनयप्रणतया ॥ ८६ ॥ ततः कपटश्राविका सा भूत्वा सार्थेन तं गता स्थानम् । वन्दित्वा तं श्रमणं सविनयमेवं प्रजल्पति ॥ ८७ ॥ निजनाथे स्वर्गगते जिनेंद्रभवनानि वन्दमानाहम् । श्रुत्वा युष्मानत्र समागता वन्दनार्थाय ॥ ८८ ॥ तस्मादद्यैव सुदिनं प्रशस्ततीर्थमिव यत् त्वं दृष्टः । इतः कुरु प्रसादं भिक्षाग्रहणेन मुनिप्रवर ? ॥ ८९ ॥ युष्मादृशे सुपात्रे निहितमल्पमपि दानमचिरेण । स्वर्गापवर्गसौख्यानां कारणं जायते येन ॥ ९० ॥

इय बहुभणितो सो कूलवालगो आगतो य भिक्खट्ठा । दिन्ना य मोयगा दुट्ठदव्वसंजोइया तीए ॥ ९१ ॥ तब्भोगाणंतरमवि अइसारो से दढं समुप्पन्नो । तेण विवलो तरंतो काउं उव्वन्तणाइंपि ॥ ९२ ॥ तीए भणियं भयवं उस्सग्गववायवेइणी अहयं । गुरुसामिबंधुतुल्लस्स तुज्झ जइ किंपि पडियारं ॥ ९३ ॥ काहं फासुयदव्वेहिं होज्ज एत्थ वि असंजमो कोइ । ता अणुजाणसु भंते वेयावच्चं करेमि त्ति ॥ ९४ ॥ पगुणसरीरो सन्तो पायच्छित्तं इह चरेज्जासि । अप्पा हि रक्खियव्वो जत्तेणं जेण भणियमिमं ॥ ९५ ॥ सव्वत्थ संजमं संजमाओ अप्पाणमेव रक्खेंतो । मुच्चइ अइवायाओ पुणोवि सोही न या विरई ॥ ९६ ॥ इय सिद्धंताभिप्पाय सारवयणाणि सो निसामित्ता । मागहियं अणुजाणइ वेयावच्चं करेमाणिं ॥ ९७ ॥

---

इति बहु भणितः स कूलवालक आगतश्च भिक्षार्थम् । दत्ताश्च मोदका दुष्टद्रव्यसंयोगितास्तया ॥ ९१ ॥ तद्भोगानन्तमेवातिसारस्तस्य दृढं समुत्पन्नः । तेन विवलो शक्नुवन् कर्त्तुमुद्वर्त्तनान्यपि ॥ ९२ ॥ तया भणितं भगवन्नुत्सर्गापवादवेदिन्यहम् । गुरुस्वामिबन्धुतुल्यस्य ते यदि किमपि प्रतिकारम् ॥ ९३ ॥ करिष्यामि प्रासुकद्रव्यैर्भवेदत्राप्यसंयमः कोऽपि । तदनुजानीहि भदन्त ? वैयावृत्यं करोमीति ॥ ९४ ॥ प्रगुणशरीरः सन् प्रायश्चित्तमिह चरिष्यसि । आत्मा हि रक्षितव्यो यत्नेन येन भणितमिदम् ॥ ९५ ॥ सर्वत्र संयमं संयमादात्मानमेव रक्षन् । मुच्यत्यतिवादात् पुनर्विशोधिर्नचाविरतिः ॥ ९६ ॥ इति सिद्धान्ताभिप्रायसारवचनानि स निशम्य । मागधिकामनुजानाति वैयावृत्यं कुर्वाणाम् ॥ ९७ ॥

गिण्हति पच्चक्खाणं खणमिह सवणं च धम्मसत्थस्स । विस्सामणाइ विहिणा भत्तीए करेज्ज साहूणं ॥५७॥ संदिद्धपए पुच्छिय सावगवग्गस्स काउं उचियं च । गिहगमणं विहिसुयणं विहेज्ज गुरुदेव सरणं च ॥५८॥ उक्कोसबंभयारी परिणामकडोव होज्ज नियमणेण । कदंप्पाइविउत्तो पइरिक्कम्मि य तुयट्टेज्जा ॥ ५९ ॥ उद्दाममोहवसओ पयट्टिउं कहवि अहमकिच्चम्मि । उवसन्तमोहवेगो चिन्तेज्जा भावसारमिमं ॥ ६० ॥ मोहो दुहाणं मूलं मूलं च विवज्जयंस्स सव्वस्सु । एयस्स वसंपत्ता मन्नंति हियमहियं ॥ ६१ ॥ जस्स वसेणं पियकामिणीण वयणाइयं असारंपि। चंदाई उवमिज्जइ धिरत्थु ही तस्स मोहस्स ॥ ६२ ॥ इत्थीकडेवरेणं संतत्तचित्तं तओ तहा कुज्जा । जह मोहारिजयाउ संवेगरसो समुच्छलति ॥ ६३ ॥

---

गृण्हाति प्रत्याख्यानं क्षणमिह श्रवणं च धर्म्मशास्त्रस्य । विश्रामणादिविधिना भक्त्या कुर्यात् साधूनाम् ॥ ५७ ॥ सन्दिग्धपदान् पृष्ट्वा श्रावकवर्गस्य कृत्वोचितं च । गृहगमनं विधिशयनं विदधाति गुरुदेवशरणं च ॥ ५८ ॥ उत्कृष्टब्रह्मचारी परिमाणकृतो वा भवेन्नियमेन । कन्दर्प्पादिवियुक्तः प्रतिक्रम्य त्वग् वर्तेत ॥ ५९ ॥ उद्दाममोहवशात् प्रवृत्य कथमप्यधमकृत्ये । उपशान्तमोहवेगश्चिन्तेद् भावसरामिमाम् ॥ ६० ॥ मोहो दुःखानां मूलं मूलं च विवर्जनीयस्य सर्वस्य । एतस्य वशंप्राप्ताः सन्तो मन्यन्ते हितमहितम् ॥ ६१ ॥ यस्य वशेन प्रियकामिनीनां वदनादिकमसारमपि । चन्द्रादिभिरुपमीयते धिगस्तु हि तस्य मोहस्य ॥ ६२ ॥ स्त्रीकलेवरेण संतप्तचित्तस्ततस्तथा कुर्यात् । यथा मोहारिजयात् संवेगरसः समुच्छलति ॥ ६३ ॥

तहाहि–जं ताव कामिणीणं मणोहरं हरिणलंच्छणछायं। वयणं तं पि हु मलगलिरविवरमत्तय समाउत्तं ॥६४॥ विच्छिन्नथोरघणया मंस च या पोट्ठमसूइमंजूसा। मंसट्ठि न सा वि रयणमेत्तं सेसं पि हु सरीरं ॥ ६५ ॥ जं पि य पयईए च्चिय दुग्गंधिमलाविलं विलीणं च। पयइ अहोगतिदारं वीभच्छं कुछणिज्जं च ॥ ६६ ॥ अइलज्जणीयमंगुलरूवं तिठइ जईय किररमणं। तम्मि वि रमेज्ज जो नणु स केण अवो विरचेज्जा ॥ ६७ ॥ एवं गुणाण सीमंतिणीणं रमणम्मि जे विरत्तमणा। जम्मजरामरणाणं दिन्नो हु जलंजली तेहिं ॥ ६८ ॥ इय जेण जेण वाहा हवेज्ज तं तस्स तस्स पडिवक्खं। पुव्वावरनिसिसमए सम्मं भावेज्ज किं बहुणा ॥ ६९ ॥ तित्थयरप्पडिवत्तिं पंचविहायारसारगुरुभत्तिं। सुविहियजइजणसेवं समसमहियगुणसमावासं ॥ ७० ॥

---

तथाहि–यत्तावत्कामिनीनां मनोहरं हरिणलाच्छनच्छायम्। वदनं तदपि हि मलगलितविवरमात्रसमायुक्तम् ॥ ६४ ॥ विच्छिन्नस्थूलघनका मांसं च या पोट्टलिकशुचिमजूषा। मांसास्थि न सापि रदनमात्रं शेषमपि हि शरीरम् ॥ ६५ ॥ यदपि च प्रकृत्यैव दुर्गन्धिमलाविलं विलीनं च। प्रकृत्याधोगतिद्वारं वीभत्स्यं कुत्सनीयं च ॥ ६६ ॥ अतिलज्जनीयपापरूपं तिष्ठति यदि च किल रमणम्। तस्मिन्नपि रमते यो ननु स केनाहो विरज्यते ॥ ६७ ॥ एवं गुणानां सीमन्तिनीनां रमणे ये विरक्तमनाः। जन्मजरामरणानां दत्ता हि जलाञ्जलिस्तैः ॥ ॥ ६८ ॥ इति येन येन बाधा भवेत् तत् तस्य तस्य प्रतिपक्षम्। पूर्वापरनिशासमये सम्यगभावयेत्किं बहुना ॥ ६९ ॥ तीर्थंकरप्रतिपत्तिं पञ्चविधाचारसारगुरुभक्तिम्। सुविहितयतिजनसेवां समसमाधिकगुणसमावासम् ॥ ७० ॥

अप्पुव्वगुणसमज्जणमप्पुव्वापुव्वतरसुयब्भासं । अप्पुव्वत्थाहिगमं अपुव्वापुव्वसिक्खगहं ॥ ७१ ॥ सम्मत्तगुणविसुद्धिं जहगहियवएसु निरइयारत्तं । अंगीकयधम्मगुणाविरोहिगिहकज्जकारित्तं ॥ ७२ ॥ धम्मे चिय धणबुद्धिं समधम्मिसु चेव गाढपडिबंधं । आगमविहिविहिया तिहिप्पयाणपरिसेस भोइत्तं ॥ ७३ ॥ इह लोयसिढिलभावं परलोयाराहणेक्करसियत्तं । चरणगुणलंपडुत्तं जणवायाभिगमभीरुत्तं ॥ ७४ ॥ संसारमोक्खपरमत्थदोसगुण भावणाणुसारेण । पइवेलं चिय सम्मं परमं संवेगरसगमणं ॥ ७५ ॥ सव्वत्थ विहिपरतंतं जिणसासणपरम समरसापत्तिं । संवेगसारसमइयसज्झायज्झाणरसियत्तं ॥ ७६ ॥ एमाइ उत्तरोत्तरगुणगणमवितन्हमाणसो धीमं । आराहंतो सम्मं गमेज्ज कालं कुलपसूओ ॥ ७७ ॥

---

अपूर्वगुणसमार्ज्जनमपूर्वापूर्वतरश्रुताभ्यासम् । अपूर्वार्थाधिगममप्यपूर्वापूर्वशिक्षाग्रहम् ॥ ७१ ॥ सम्यक्त्वगुणविशुद्धिं यथागृहीतव्रतेषु निरतिचारत्वम् । अङ्गीकृतधर्म्मगुणविरोधिगृहकार्यकारित्वम् ॥ ७२ ॥ धर्म्मे एव धनबुद्धिं समधर्म्मिषु चैव गाढप्रतिबन्धम् । आगमविधिविहितातिथिप्रदानपरिशेषभोगित्वम् ॥ ७३ ॥ इहलोकशिथिलभावं परलोकाराधनैकरसिकत्वम् । चरणगुणलम्पटत्वं जनवादाभिगमभीरुत्वम् ॥ ७४ ॥ संसारमोक्षपरमार्थदोषगुणभावनानुसारेण । प्रतिवेलमेव सम्यक् परमं संवेगरसगमनम् ॥ ७५ ॥ सर्वत्र विधिपरत्वं जिनशासनपरमशमरसाप्राप्तिम् । संवेगसारसमकितस्वाध्यायध्यानरसिकत्वम् ॥ ७६ ॥ एवमाद्युत्तरोत्तरगुणगणवितृष्णमानसो धीमान् । आराधयन् सम्यग् गमयेत्कालं कुलप्रसूतः ॥ ७७ ॥

एवं च गुरुं पि गिरिं आरुहइ पयं पएण जह कोइ । आराहणागिरिं तह सम्मं धीरो समारुहिही ॥७८॥ एवं धम्मत्थिगिहत्थगोयरा इह विसेसविहिसिक्खा । वुत्ता एत्तो वुच्चइ मुणिविसया सा समासेण ॥ ७९ ॥ नवरं समयविऊहिं स च्चिय भणिया विसेसविहिसिक्खा । जा किर पइदिणकिरिया जईण पुण सा इमा नेया ॥ ८० ॥ पडिलेहणापमज्जणभिक्खिरिया लोयभुंजणा चेव। पत्तगधुयणवियारा थंडिलमावस्सया इया ॥८१॥ जावि य इच्छामिच्छापमुहा उवसंपयावसाणाओ तु । सुविहियजणपालगा सामायारी दस पयारा ॥ ८२ ॥ पढउ सयं पाढेउ य परे वि तत्तं पि चिंतउ पयत्ता । जइ नत्थि विसेसविहिम्मि आयरो ता मुणी वसणी ॥८३॥ इय गुणदोसपरिक्खं काउं अवगम्म तह गहणसिक्खं । समणुसरेज्ज अभिक्खं सम्मं आसेवणा सिक्खं ॥ ८४ ॥

एवं च गुरुमपि गिरिमारोहति पदं पदेन यथा कोऽपि । आराधनागिरिं तथा सम्यग् धीरः समारोक्ष्यति ॥ ७८ ॥ एवं धर्मार्थिगृहस्थगोचरेह विशेषविधिशिक्षा । उक्तेन उच्यते मुनिविषया सा समासेन ॥ ७९ ॥ नवरं ( केवलं ) समयविद्भिः सैव भणिता विशेषविधिशिक्षा । या किल प्रतिदिनं क्रिया यतीनां पुनः सेयं ज्ञेया ॥ ८० ॥ प्रतिलेखना प्रमार्जनाभिक्षाचरियालोकभुञ्जना चैव । पात्रधावनविचारास्थण्डिलमावश्यकादिका ॥८१॥ यापि चेच्छामिच्छाप्रमुखा उपशमपदावसाना तु। सुविहितजनपालका सामाचारी दशप्रकारा ॥ ८२ ॥ पठति स्वयं पाठयति परानपि तत्त्वमपि चिन्तति प्रयत्नात् । यदि नास्ति विशेषविधावादरस्तदा मुनिर्व्यसनी ॥ ८३ ॥ इति गुणदोषपरीक्षां कृत्वावगम्य तथा ग्रहणशिक्षाम् । समनुसरेदभीक्ष्णं सम्यगासेवनाशिक्षाम् ॥ ८४ ॥

एवं च सप्पभेओ भयसिक्खजुओ हवेज्ज धम्मत्थी । सवो वि सवयावि हु किं पुण आराहणाचित्तो ॥ ८५ ॥ आराहणा वि न जओ पायं तह सम्ममरिहई होउ एमेव । अत्थिणो वि हु पुवमणब्भत्थजोगस्स ॥ ८६ ॥ तम्हा तदत्थिणा सवहावि एयासु भणियसिक्खासु । जइयवं जत्तेणं एत्तो य कयं पसंगेण ॥ ८७ ॥ इय धम्मुवएसमनोहराए संवेगरंगसालाए । पडिकम्मविही पामोक्खचउमहामूलदाराए ॥ ८८ ॥ आराहणाए पनरस पडिदारमयस्स पढमदारस्स । तईयं सिक्खादारं समत्तमेयं सभेयंपि ॥ ८९ ॥ आराहगो न पुवुत्तसिक्खदक्खो वि विणयविरहेण । होइ कयत्थो जत्तो एत्तो वुच्चति विणयदारं ॥ ९० ॥ विणओ य पंचरूवो परूवि नाणदरिसणचरित्तो । तवविणओ य चउत्थो चरिमो उवयारिओ विणओ ॥ ९१ ॥

---

एवं च सप्तभेदो भयशिक्षायुतो भवेद् धर्म्मार्थी । सर्वोऽपि सर्वदापि हि किं पुनराराधनाचित्तः ॥ ८५ ॥ आराधनापि न यतः प्रायस्तथा सम्यगर्हति भवितुमेवमेव । अर्थिनोऽपि हि पूर्वमनभ्यस्तयोगस्य ॥ ८६ ॥ तस्मात् तदर्थिना सर्वदाप्येतासु भणितशिक्षासु । यतितव्यं यत्नेनेतश्च कृतं प्रसङ्गेन ॥ ८७ ॥ इति धर्म्मोपदेशमनोहरायां संवेगरङ्गशालायाम् । परिकर्म्मविधिप्रमुखचतुर्महामूलद्वारायाम् ॥ ८८ ॥ आराधनायां पञ्चदशप्रतिद्वारमयस्य प्रथमद्वारस्य । तृतीयं शिक्षाद्वारं समाप्तमेतत् सभेदमपि ॥ ८९ ॥ आराधको न पूर्वोक्तशिक्षादक्षोऽपि विनयविरहेण । भवति कृतार्थो यस्मादत उच्यते विनयद्वारम् ॥ ९० ॥ विनयश्च पञ्चरूपः प्ररूपि ज्ञानदर्शनचारित्रः । तपोविनयश्च चतुर्थश्चरिम उपचारिको विनयः ॥ ९१ ॥

काले विणए बहुमाणे उवहाणे तहा अ निन्हवणे। वंजणअत्थ तदुभए विणओ नाणस्स अट्ठविहो ॥ ९२ ॥ निस्संकि य निक्कंखि य निव्विगिच्छा अमूढदिट्ठी य। उववूहथिरीकरणे वच्छल्लपभावणे अट्ठ ॥ ९३ ॥ पणिहाणपहाणस्स उ गुत्तीउ तिन्नि पंचसमिईओ। असज्जउज्जमतस्स होइ विणओ चरित्तस्स ॥९४॥ भत्ती तवम्मि तह तवरएसु सेसेसु हीलणच्चाओ। जह विरिअमुज्जवो चिअ तवविणओ एस नायव्वो ॥९५॥ काइयवाइयमाणसिओ अ तिविहोवयारिओ विणओ। सो पुण सव्वो वि दुहा पच्चक्खो तह परोक्खो अ ॥९६॥ तत्थ य गुणवंताणं दंसणमेत्ते वि आसणच्चाओ। सत्तट्ठपओसप्पणामभिमुहम्मिन्ताण सप्पणयं ॥ ९७ ॥ अंजलिकरणं पायप्पमज्जणं आसणोवणयणं च। आसीणेसु च तेसुं सयमुवविसणं उचियट्ठाणे ॥ ९८ ॥

---

काले विनये बहुमान उपधाने तथा निह्नवने। व्यञ्जनार्थतदुभये विनयो ज्ञानस्याष्टविधः ॥ ९२ ॥ निःशङ्कियनिष्कांक्षितनिर्विचिकित्सोऽमूढदृष्टिश्च। उपबृंहास्थितीकरणे वात्सल्यप्रभावनेऽष्ट ॥ ९३ ॥ प्रणिधानप्रधानस्य तु गुप्तयस्त्रीणि पञ्चसमितयः। आसाद्योद्यमतो भवति विनयश्चरित्रस्य ॥ ९४ ॥ भक्तितपसि तथा तपोरतेषु शेषेषु हीलनात्यागः। यथा वीर्यमुत्सव एव तपोविनय एष ज्ञातव्यः ॥ ९५ ॥ कायिकवाचिकमानसिकश्च त्रिविधोपचारिको विनयः। स पुनः सर्वोऽपि द्विधा प्रत्यक्षस्तथा परोक्षश्च ॥ ९६ ॥ तत्र च गुणवतां दर्शनमात्रेऽप्यासनत्यागः। सप्ताष्टपदोपसर्पणमभिमुखागतानां सप्रणयम् ॥ ९७ ॥ अञ्जलिकरणं पादप्रमार्जनमासनोपनयनं च। आसीनेषु च तेषु स्वयमुपवेशनमुचित स्थाने ॥ ९८ ॥

इच्चाइ काइओ वाइओ य नाणाहिए पडुच्च भवे । किच्चं तस्स गुणगणं गउरवसारेहिं वयणेहिं ॥ ९९ ॥ अकुसलमणोनिरोहे कुसलस्स उदीरणं च ते चेव। आसज्ज जं किर भवे एसो माणसिविणओ ॥१६००॥ आसणदाणाईओ पच्चक्खो एस चेव गुरुविरह । तक्कहियविहिपहाणप्पवत्तिओ हवइ य परोक्खो ॥ १ ॥ इय भूरिभेयभिन्नं विणयं निउणं वियाणिओ धीरो । आराहणाभिलासी सम्मं कुज्जा तयं जम्हा ॥ २ ॥ जो परिभवइ अविणया धम्मगुरुं जत्थ सिक्खए विज्जं । सा सुगहियावि विज्जा दुक्खेण तस्स देइ फलं ॥ ३ ॥ किं च । सव्वत्थ लभेज्जा नरो वीसभं पच्चयं च वुद्धिं च । जइ गुरुजणोवइट्ठं विणयं भावेण गिण्हेज्जा ॥ ४ ॥ पव्वइयस्स गिहस्स च विणयं चेव कुसला पसंसंति । नहु पावइ अविणीओ कित्तिं च जसं च लोयम्मि ॥ ५ ॥

---

इत्यादि कायिकवाचिकश्च ज्ञानाधिकानाश्रित्य भवेत् । कृत्यम् तस्य गुणगणं गौरवसारैर्वचनैः ॥ ९९ ॥ अकुशलमनोनिरोधे कुशलस्योदीरणं च ते चैव । आसाद्य यद् किल भवेदेष मानसिकविनयः ॥ १६०० ॥ आसनदानादिकात् प्रत्यक्ष एष चैव गुरुविरह । तत्कथितविधिप्रधानप्रवृत्तितो भवति च परोक्षः ॥ १ ॥ इति भूरि भेदभिन्नं विनयं निपुणं विज्ञाय धीरः । आराधनाभिलाषी सम्यक् कुर्यात् तकं यस्मात् ॥ २ ॥ यः परिभवत्यविनयाद् धर्मगुरुं यस्माच्छिक्ष्यते विद्याम् । सा सुगृहीतापि विद्या दुःखेन तस्य ददाति फलम् ॥ ३ ॥ किं च—सर्वत्र लभेत नरो विश्रम्भं प्रत्ययं च वृद्धिं च । यदि गुरुजनोपदिष्टं विनयं भावेन गृह्णीयात् ॥४॥ प्रव्रजितस्य गृहस्थस्य च विनयं चैव कुशलाः प्रशंसन्ति । नहि प्राप्नोत्यविनीतः कीर्त्तिश्च यशश्च लोके ॥ ५ ॥

जाणंता वि य विणयं केई कम्माणुभावदोसेण । नेच्छंति पउं जेउं अभिभूयारागदोसेहिं ॥ ६ ॥ विणओ
सिरीणं मूलं विणओ मूलं समत्थ सोक्खाणं । विणओ हु धम्ममूलं विणओ कल्लाणमूलं ति ॥ ७ ॥ विणएण
विहीणस्स उ सव्वं पि निरत्थयं अणुट्ठाणं । तं चेव विणयसारं सयलं सहलत्तणमुवेति ॥ ८ ॥ तह विणयविही-
णम्मि सिक्खा वि निरत्थिया भवे सव्वा । विणओ सिक्खाए फलं विणयफलं सव्वपाहन्नं ॥९॥ दोसा वि गुणा
विणयाउ होंति दोसा गुणा वि अविणीए। सज्जणजणमणरंजणजणणी मेत्ती विणयाओ ॥ १० ॥ विणयपरम्मि
गुरुत्तं सम्मं दंसंति जणणिजणया वि। विणयविहीणे पुण ते वि अहह सत्तुं वि सेसेंति ॥ ११ ॥ विणयोवयारक-
रणा अदिस्सरूवा वि दिंति दरिसावं । अविणयजणियाणक्खा फिडंति पासट्ठिया वि लहुं ॥ १२ ॥

---

जानन्तोऽपि च विनयं केचित् कर्म्मानुभावदोषेण । नेच्छन्ति पातुं जेतुमभिभूता रागद्वेषैः ॥ ६ ॥ विनयः श्रीयां मूलं विनयो मूलं
समस्तसौख्यानाम् । विनयो हि धर्म्ममूलं विनयः कल्याणमूलमिति ॥ ७ ॥ विनयेन विहीनस्य तु सर्वमपि निरर्थकमनुष्ठानम् । तच्चैव
विनयसारं सकलं सफलत्वमुपैति ॥ ८ ॥ तथा विनयविहीने शिक्षापि निरर्थिका भवेत् सर्वा । विनयः शिक्षायाः फलं विनयफलं सर्व-
प्राधान्यम् ॥ ९ ॥ दोषा अपि गुणा विनयाद् भवन्ति दोषा गुणाप्यविनीते । सज्जनजनमनोरञ्जनजननी मैत्री विनयात् ॥ १० ॥
विनयपरे गुरुत्वं सम्यक् पश्यन्ति जननीजनका अपि । विनयविहीने पुनस्तेऽप्यहह शत्रुत्वमपि शंसन्ति ॥११॥ विनयोपचारकरणाददृश्य-
रूपा अपि ददन्ति दर्शनम् । अविनयजनितानाकांक्षा भ्रंसन्ति पार्श्वस्थिता अपि लघु ॥ १२ ॥

पत्थरखरहियया दुक्कुहावि विणयाउ पल्हयंति । लहुं नियवच्छदंसणेण च पसूयसुरहिव्व निब्भंतं ॥ १३ ॥ विणयाओ विस्सासो विणयाउ सयलअत्थसिद्धीओ । विणयाओ च्चिय फलदाइणीउ सव्वाउ विज्जाउ ॥ १४ ॥ अविणीयस्स पणस्सइ जइ न पणस्सइ न जुज्जइ गुणेहिं । विज्जा सुक्खियावि हु गुरुपरिभववुद्धिदोसेणं ॥१५॥ अविणीयस्स उ विज्जं गुरुवि दितो लहेज्ज वयणिज्जं। हारेज्ज सकज्जं पि हु पावेज्ज ततो विणासंपि॥ १६ ॥ किं च, विज्जा वि होति वलिया गहिया पुरिसेण विणयवंतेण । सुकुलपसूया कुलवालिय व्व पवरं पइं पत्ता ॥१७॥ संकमइ दुव्विणीए गुरुपरिभवकारए य नो विज्जा।सेणियनिवे व्व तत्थेव संकमेज्जा उ विवरीए ॥ १८ ॥ तहाहि—रायगिहम्मि नगरे राया नामेण सेणिओ आसि । संमत्तथिरत्तपहि व्व सक्कविप्फारियपसंसो ॥ १९ ॥

---

पाषाणखरहृदया दुःक्रुधा अपि विनयात् प्रह्लादयन्ति । लघु निजवत्सदर्शनेन च प्रसूतसुरभीव निर्भ्रान्तम् ॥ १३ ॥ विनयाद् विश्वासो विनयात् सकलार्थसिद्धयः । विनयादेव फलदायिन्यः सर्वा विद्याः ॥१४॥ अविनीतस्य प्रणश्यति यदि न प्रणश्यति न युज्यते गुणैः । विद्या सुशिक्षितापि हि गुरुपरिभवबुद्धिदोषेण ॥१५॥ अविनीतस्य तु विद्यां गुरुरपि ददल्लभेत वदनीयम् । हारयेत् स्वकार्यमपि हि प्राप्नोति ततो विनाशमपि ॥ १६ ॥ किं च, विद्यापि भवति वलिका गृहीता पुरुषेण विनयवता । सुकुलप्रसूता कुलबालिकेव प्रवरं पतिं प्राप्ता ॥ १७ ॥ संक्राम्यति दुर्विनीते गुरुपरिभवकारके च नो विद्या । श्रेणिकनृप इव तत्रैव संक्राम्येत्तु व्यपरीते ॥ १८ ॥ तथाहि—राजगृहे नगरे राजा नाम्ना श्रेणिक आसीत् । सम्यक्त्वस्थिरत्व प्रधीमान् शक्रविष्फारितप्रशंसः ॥ १९ ॥

सयलंतेउरपवरा देवी नामेण चेल्लणा तस्स । चउविहबुद्धिसमिद्धो मंत्ती पुत्तो य अभओ त्ति ॥२०॥ एगम्मि य पत्थावे देवीए पत्थिवो इमं भणितो । पासायमेगखंभं ममजोग्गं कारवेसु त्ति ॥ २१ ॥ दुन्निग्गहेण इत्थीगहेण संताविएण नरवइणा । पडिवन्नं तव्वयणं अभयकुमारो य आइट्ठो ॥ २२ ॥ तो वड्ढइणा समगं थंभनिमित्तं महाडवीए गतो । दिट्ठो ताहे वडरुक्खो सुसिणिद्धो अइमहासाहो ॥ २३ ॥ अहिट्ठिओ सुरेणं होहि त्ति विचिन्त कुसुमधूवेहिं । अहिवासिओ स साही कओववासेण अभयेण ॥२४॥ अह बुद्धिरंजिएणं तरुवासिसुरेण निसि पसुत्तस्स । सिट्ठं अभयस्स महाणुभाव? मा छिंदिहिसि एयं ॥ २५ ॥ वच्चसु तुमंपि सगिहं काहामहमेगखंभ पासायं । सव्वोउयतरुफलफुल्लमणहरारामपरिकलियं ॥ २६ ॥

---

सकलान्तःपुरप्रवरा देवीनाम्ना चेल्लणा तस्य । चतुर्विधबुद्धिसमृद्धो मंत्री पुत्रश्चाभय इति ॥ २० ॥ एकस्मिंश्च प्रस्तावे देव्या पार्थिव-एवं भणितः । प्रासादमेकस्तम्भं मम योग्यं कारयेति ॥ २१ ॥ दुर्निग्रहेण स्त्रीग्रहेण संतापितेन नरपतिना । प्रतिपन्नं तद्वचनमभयकुमारश्चादिष्टः ॥ २२ ॥ ततो वार्धकिना समं स्तम्भनिमित्तं महाटव्यां गतः । द्रष्टस्तत्र वटवृक्षः सुस्निग्धोऽतिमहाशाखः ॥ २३ ॥ अधिष्ठितः सुरेण भविष्यतीतिविचिन्त्य कुसुमधूपैः । अधिवासितः स शाखी कृतोपवासेनाभयेन ॥ २४ ॥ अथ बुद्धिरंजितेन तरुवासिसुरेण निशि प्रसुप्तस्य । शिष्टमभयस्य महानुभाव ? मा छेत्स्यस्येतम् ॥ २५ ॥ व्रज त्वमपि स्वगृहं करिष्याम्यहमेकस्तम्भप्रासादम् । सर्वर्तुकतरुफलपुष्पमनोहरारामपरिकलितम् ॥ २६ ॥

इय पडिसिद्धो अभओ वड्डइणा सह गतो सगिहम्मि । देवेण विनिम्मविओ आरामसमेयपासायो ॥ २७॥ तम्मि य देवीए समं विचित्तकीलाहिं कीलमाणस्स । रइसागरावगाढस्स राइणो जंति दिहयाइं ॥ २८॥ अह तन्नयरनिवासिस्स पाणवइणो कयाइ गब्भवसा । भज्जाए समुप्पन्नो दोहलओ अंबगफलेसु ॥ २९ ॥ तो तम्मि अपुज्जंते पइदिहयं खिज्जमाणसव्वंगिं । तं दट्ठूणं पुट्ठं तेण पिए कारणं किमिह ॥ ३० ॥ परिपक्कंचुयफलदोहलो य तीए निवेइओ ताहे । पाणाहिवेण भणियं चूयफलाणं अकालो यं ॥ ३१ ॥ जइ वि हु तदापि कत्तो वि सुयणु संपाडिमो थिरा होसु । निसुओ य तेण रन्नो सव्वोउयफलदुमारामो ॥ ३२॥ तं चारमं वाहिट्ठिएण पेहंतएण पिक्कफलो । दिट्ठो अंबयसाही ताहे जायाए रयणीए ॥ ३३ ॥

---

इति प्रतिपिद्धोऽभयो वार्धकिना सह गतः स्वगृहे । देवेन विनिर्म्मापित आरामसमेतप्रासादः ॥ २७ ॥ तस्मिंश्च देव्या समं विचित्र-क्रीडाभि क्रीडमानस्य । रतिसागरावगाढस्य । राज्ञो यान्ति दिवसानि ॥ २८ ॥ अथ तन्नगरनिवासिनो मातङ्गपतेः कदाचिद् गर्भवशात् । भार्यायाः समुत्पन्नो दोहदक आम्रफलेषु ॥२९॥ ततस्तस्मिन्नपूर्ण्णे प्रतिदिवसं खिद्यमानसर्वाङ्गिम् । तां दृष्ट्वा पृष्टं तेन प्रिये ? कारणं किमिह ॥ ३० ॥ परिपक्काम्रफलकदोहदश्च तया निवेदितस्तदा । मातङ्गाधिपेन भणितं चूतफलानामकालोयम् ॥ ३१ ॥ यद्यपि हि तथापि कुतोऽपि सुतनु ? संपादयिष्यामि स्थिरा भव । निश्रुतश्च तेन राज्ञः सर्वर्त्तुफलद्रुमारामः ॥ ३२ ॥ तं चारामं बहिःस्थितेन पश्यता पक्कफलः । दृष्ट आम्रशाखी तदा जातायां रजन्याम् ॥ ३३ ॥

ओणामणीए विज्जाए साहमोणामिऊण गहियाइं । अम्बयफलाइं पुणरवि पचोणामणि सुविज्जाए ॥३४॥ साहं विसज्जिऊणं समप्पियाइं पियाए हिट्ठेण । पडिपुन्नदोहला सा गब्भं वोढुं समाढत्ता ॥ ३५ ॥ अह अवरावरतरुवरपलोयणं राइणा कुणंतेण । पुव्वदिणदिट्ठफलपडलविलयमवलोइउं चूयं ॥ ३६ ॥ भणिया रक्खगपुरिसा रे केणेसो विलुत्तफलभारो । विहिओ त्ति तेहिं वुत्तं देव न तावेत्थ परपुरिसो ॥३७॥ नूणं पविट्ठो न य नीहरंतपविसंतयस्स वि पयाणि । कस्सवि दीसंति महीतलम्मि ता देव चोज्जमिणं ॥३८॥ जस्सामाणुससामच्छमेरिसं तस्स किं पकरणिज्जं । नत्थि त्ति य चिंतंतेण राइणा सिट्ठं अभयस्स ॥३९॥ एवं विहत्थकरणक्खमं लहुं लहसु पुत्त? चोरं ति । जह हरियाइं फलाइं तहन्नया दारमवि हरिही ॥ ४० ॥

---

अवनामिन्या विद्यया शाखामवनम्य गृहीतानि । आम्रकफलानि पुनरपि प्रत्यावनामिनी सुविद्यया ॥ ३४ ॥ शाखां विसृज्य समर्पितानि प्रियायै हृष्टेन । प्रतिपूर्णदोहदा सा गर्भं वोढुं समारब्धा ॥ ३५ ॥ अथापरापरतरुवरप्रलोकनं राज्ञा कुर्वता । पूर्वदिनदिष्टफलपटलविकलमवलोक्य चूतम् ॥ ३६ ॥ भणिता रक्षकपुरुषा रे केनैष विलुप्तफलभारः । विहित इति तैरुक्तं देव ? न तावदत्र परपुरुषः ॥ ३७ ॥ नूनं प्रविष्टो न च निःसरतः प्रविशतोऽपि पदानि । कस्यापि दृश्यन्ते महीतले तस्माद्देव ? चोद्यमिदम् ॥ ३८ ॥ यस्यामानुष्यसामर्थ्यमीदृशं तस्य किं प्रकरणीयम् । नास्तीति च चिन्तता राज्ञा शिष्टमभयस्य ॥ ३९ ॥ एवंविधार्थकरणक्षमं लघु लभस्व पुत्र ? चौरमिति । यथा हरितानि फलानि तथान्यदा दारा अपि हरिष्यति ॥ ४० ॥

भूमितलनिलीणसिरो महापसाओ त्ति जंपिउं अभओ। तियचच्चरेसु चोरं निरूविउं वाढमाढत्तो ॥ ४१ ॥ वोलीणाइं कइवयदिणाइं पत्ता न तप्पउत्ती वि। चिंतावाउलचित्तो ताहे अभओ दढं जातो ॥ ४२ ॥ पारद्धमन्नदियहे नडेण नयरीए वाहि पेच्छणयं। मिलिओ पउरनरगणो अभएण वि तत्थ गंतूणं॥ ४३ ॥ भावोवलक्खणट्ठा पयंपियं भो जणा निसामेह। जाव नडो नागच्छति ताव ममक्खाणयं एक्कं ॥४४॥ तेहिं पयंपियं नाह कहह तो कहिउमेवमारद्धो। नयरम्मि वसंतपुरे आसि सुया जुन्नसेट्ठिस्स ॥ ४५ ॥ दारिद्दविहुयत्तेण नेव परिणायिया य सा पिउणा। वहुकुमारी जाया वरत्थिणी पूयए मयणं॥ ४६ ॥ आरामाउ सा चोरियाए कुसुमोच्चयं करेमाणी। पत्ता मालाकारेण जंपियं किंपि सवियारं ॥ ४७ ॥

---

भूमीतलनिलीनशिरो महाप्रसाद इति जल्पित्वाभयः। त्रिकचत्वरेषु चौरं निरूपितुं बाढमारब्धः ॥ ४१ ॥ व्रजितानि कतिपयदिनानि प्राप्ता न तत्प्रवृत्तिरपि। चिन्ताव्याकुलचित्तस्तदाभयो दृढं जातः ॥४२॥ प्रारब्धमन्यदिवसे नटेन नगर्यावहिः प्रेक्षणकम्। मिलितः प्रचुरनरगणोऽभयेनापि तत्र गत्वा ॥४३॥ भावोपलक्षणार्थं प्रजल्पितं भो जना? निशामयत। यावन्नटो नागच्छति तावन्ममाख्यानकं एकम् ॥ ॥४४॥ तैः प्रजल्पितं नाथ? कथयत ततः कथितुमेवमारब्धः। नगरे वसन्तपुरे आसीत्सुता जीर्णश्रेष्ठिनः ॥४५॥ दारिद्रविद्रुतत्वेन नैव परिनायिता च सा पित्रा। वृहत्कुमारी जाता वरार्थिनी पूजति मदनम् ॥ ४६ ॥ आरामात् सा चौर्या कुसुमोच्चयं कुर्वाणा। प्राप्ता मालाकारेण जल्पितं किमपि सविकारम् ॥ ४७ ॥

तीए वुत्तो किं तुज्झ भइणिधूयाउ मह सरिच्छाओ। नेवत्थि जं कुमारिं मं तुमं एवमुल्लवसि ॥४८॥ संलत्तं तेण तुमं उवूढा भत्तुणा अभुत्तायाएसि समीवे जइ मे मुंचामी अन्नहा नेव ॥ ४९ ॥ एवं ति पडिसुणित्ता गया गिहं सा कयाइ तुट्ठेण। मयणेणं से दिन्नो मंतिस्स सुओ वरो पवरो ॥१६५०॥ सुपसत्थे हत्थग्गहजोगे लग्गम्मि तेण उवूढा। एत्थंतरम्मि अत्थगिरिमुवगयं भाणुणो बिम्बं ॥५१॥ कज्जलभसलच्छाया वियंभिया दिसिसु तिमिररिंछोली। हयकुसुमसंडसमुग्गयं मण्डलं ससिणो ॥५२॥ अह सा विचित्तमणिमयभूसणसोहंतकन्तसव्वंगा। वासभवणम्मि पत्ता भत्ता एवं च विन्नत्तो ॥ ५३ ॥ तव्वेलुवूढाए आगंतव्वं ति मालियस्स मए। पडिवन्नमासि पिययम? ता जामि तहिं विसज्जेसु ॥ ५४ ॥

---

तयोक्तः किं तव भगिनी पुत्री त्वामत्सदृशा। नैवास्ति यत्कुमारिं मत्वा मामेवमुल्लपसि ॥ ४८ ॥ संलप्तं तेन त्वमुद्व्ढा भर्त्राऽभुक्ताचायास्यसि। समीपे यदि मां मुञ्चाम्यन्यथा नैव ॥ ४९ ॥ एवमिति प्रतिश्रुत्य गता गृहं सा कदाचित् तुष्टेन। मंदनेन तस्यै दत्तो मंत्रिणः सुतो वरः प्रवरः ॥ १६५० ॥ सुप्रशस्ते हस्तग्रहजोग लग्ने तेनोद्व्ढा। अत्रान्तरेऽस्तगिरिमुपगतं भानोर्बिम्बम् ॥५१॥ कज्जलभसलछायाविजृम्भिता दिक्षु तिमिरर्क्षपंक्तिः। हयकुसुमसमुद्गतं मण्डलं शशेः ॥ ५२ ॥ अथ सा विचित्रमणिमयभूषणशोभत्कान्तसर्वाङ्गा। वासभवने प्राप्ता भर्त्ता एवं च विज्ञप्तः ॥ ५३ ॥ तद्वेलोद्व्ढाया आगन्तव्यमिति मालिकस्य मया। प्रतिपन्नमासीत् प्रियतम? तस्माद्यामि तत्र विसर्जय ॥ ५४ ॥

सच्चपइन्ना एसत्ति मन्नमाणेण तेनणुन्नाया। वच्चन्ती परिहियपवरभूसणा सा पुराउ बहिं ॥५५॥ दिट्ठा चोरेहिं ततो महानिही सो इमो त्ति भणितेहिं। गहिया नवरं तीए णिवेइओ निययसब्भावो ॥५६॥ चोरेहिं जंपियं सुयणु? जाहि सिग्घं परं वलेज्जासि। मुसिऊण जेण तुमं जहागयं पडिनियत्तामो ॥५७॥ एवं काहं ति पयंपिऊण संपट्ठिया अह च पहे। तरलतरतारयाउलसमुच्छलंतच्छिविच्छोहो ॥ ५८ ॥ रणरणिरदीहदंतो दूरपसारियरउद्दमुहकुहरो। चिरछुहिएण लद्धासि एहि एहि त्ति जंपन्तो ॥ ५९ ॥ अच्चन्तभीसणंगो समुट्ठिओ रक्खसो सुदुप्पेक्खो। तेणावि करे धरिया कहिओ तीए य सब्भावो ॥६०॥ पमुक्का आरामे गंतूणं वाहिओ सुहप्पसुत्तो। मालागारो भणिओ य सुयणु? साहं इहं पत्ता ॥ ६१ ॥

---

सत्यप्रतिज्ञैषेति मन्यमानेन तेनानुज्ञाता। व्रजन्ती परिधारितप्रवरभूषणा सा पुराद् बहिः ॥ ५५ ॥ दृष्टा चौरैस्ततो महानिधिःसोऽयमिति भणितैः। गृहीता नवरं तया निवेदितो निजसद्भावः ॥ ५६ ॥ चोरैर्जल्पितं सुतनु ? याहि शीघ्रं परं बलयसि। मुषित्वा येन त्वां यथागतं प्रतिनिवर्त्तामहे ॥ ५७ ॥ एवं करिष्यामीति प्रजल्प्य संप्रस्थिताथ च पथि। तरलतरतारकाकुलसमुच्छलदक्षिविक्षोभः ॥ ५८ ॥ रणरणितदीर्घदन्तो दूरप्रसारितरौद्रमुखकुहरः। चिरक्षुधितेन लब्धाऽसि एह्येहीति जल्पन् ॥ ५९ ॥ अत्यन्तभीषणाङ्गः समुत्थितो राक्षसो सुदुष्प्रेक्ष्यः। तेनापि करे धृता कथितस्तया च सद्भावः ॥ ६० ॥ प्रमुक्तारामे गत्वा व्याहृतः सुखप्रसुप्तः। मालाकारो भणितश्च सुतनु ? साहमिह प्राप्ता ॥ ६१ ॥

एवंविह रयणीए सा भूसणा कह समागया तं सि। इय तेणं सा पुट्ठा सिट्ठं तीए य जहवित्तं ॥ ६२ ॥ अहो सच्चपइन्ना महासईमत्ति भावमाणेण। चलणेसु निपडिऊणं मालागारेणं तो मुक्का ॥६३॥ पत्ता रक्खसपासे सिट्ठो से मालियस्स वुत्तन्तो। अव्वो महप्पभावा एसा जा उज्झिया तेण ॥ ६४ ॥ इति भावेंतेणं निपडिऊण पाएसु तेणवि विमुक्का। चोरसमीवे य गया सिट्ठो तह पुव्ववुत्तन्तो ॥ ६५ ॥ तेहिं वि अणप्पमाहप्पदंसणुप्पन्नपक्खवाएहिं। सालंकार चिय वंदिऊण सगिहम्मि पट्ठाविया ॥ ६६ ॥ अह आभरणसमेया अक्खयदेहा अभग्गसीला य। पत्ता पइस्स पासे कहियं सव्वं जहावित्तं ॥ ६७ ॥ परितुट्ठमणेण समं तेण पसुत्ता समत्थरयणिं पि। जाए पभायसमए चिंतियमिय मंतिपुत्तेण ॥ ६८ ॥

---

एवंविधरजन्यां सा भूषणा कथं समागता त्वमसि। इति तेन सा पृष्टा शिष्टं तया च यथावृत्तम् ॥ ६२ ॥ अहो सत्यप्रतिज्ञा महासतीयमिति भाव्यमानेन। चरणयोर्निपत्य मालाकारेण ततो मुक्ता ॥ ६३ ॥ प्राप्ता राक्षसःपार्श्वे शिष्टस्तस्य मालिकस्य वृत्तान्तः। अहो महाप्रभावा एषा यस्मादुज्झिता तेन ॥६४॥ इति भावयता निपत्य पादयोस्तेनापि विमुक्ता। चौरसमीपे च गता शिष्टस्तथा पूर्ववृत्तान्तः ॥ ६५ ॥ तैरपि अनल्पमहात्म्यदर्शनोत्पन्नपक्षपातैः। सालङ्कारैव वन्दित्वा स्वगृहं प्रस्थापिता ॥ ६६ ॥ अथाभरणसमेताऽक्षतदेहाभग्नशीला च। प्राप्ता पत्युः पार्श्वे कथितं सर्वं यथावृत्तम् ॥ ६७ ॥ परितुष्ट मनसा समं तेन प्रसुप्ता समस्तरजनीमपि। जाते प्रभातसमये चिन्तितमिति मन्त्रिपुत्रेण ॥ ६८ ॥

छंदट्ठियं सुरूवं समसुहदुक्खं अनिग्गयरहस्सं । धन्ना सुत्त विउद्धा मित्तं महिलं च पेछति ॥६९॥ इति भावंतेण कया घरस्स सा सामिणी समग्गस्स । किं व न कीरति निक्कवडपेमपडिबद्धहिययम्मि ॥ ७० ॥ इय पइतक्कररक्खसमालागाराण मज्झओ केण । तच्चागेण कयं दुक्करं ति भो मज्झ साहेह ॥ ७१ ॥ इसालुएहिं भणियं सामी? पइणा सुदुक्करं विहियं । परपुरिससमीवे जेण पेसिया सव्वरीएपिया ॥ ७२ ॥ भणियं छुहालुएहिं सुदुक्करं रक्खसेण चेव कयं । जेण चिरं छुहिएण वि न भक्खिया भक्खणिज्जावि ॥७३॥ अह पारदारिएहिं पयंपियं देव मालिओ एक्को । दुक्करगारी जेणं चत्ता सा निसि सयं पत्ता ॥ ७४॥ पाणेण जंपियं होउ ताव चोरेहिं दुक्करं विहियं । पइरिक्के वि विमुक्का ससुवन्ना जेहिं सा तया ॥ ७५ ॥

---

छन्दस्थितां सुरूपां समसुखदुःखामनिर्गतरहस्याम् । धन्या सूत्र विदु मित्रं महिलां च पश्यति ॥६९॥ इति भावयता कृता गृहस्य सा स्वामिनी समग्रस्य । किं वा न करोति निष्कपटप्रेमप्रतिबद्धहृदयम् ॥ ७० ॥ इति पतितस्कररराक्षसोमालाकाराणां मध्यतः केन । तत्त्यागेन कृतं दुष्करमिति भो? मम कथयत ॥७१॥ ईर्ष्यालुभिर्भणितं स्वामिन्? पत्या सुदुष्करं विहितम् । परपुरुषसमीपे येन प्रेषिता शर्वर्याप्रिया ॥ ७२ ॥ भणितं क्षुधालुभिः सुदुष्करं राक्षसा चैव कृतम् । येन चिरं क्षुधितेनापि न भक्षिता भक्षणीयापि ॥७३॥ अथ पारदारिकैः प्रजल्पितं देव? मालिक एकः । दुष्करकारी येन त्यक्ता सा निशि स्वयंप्राप्ता ॥ ७४ ॥ मातङ्गेन जल्पितं भवतु तावच्चोरैर्दुष्करं विहितम् । व्यतिरिक्तेऽपि विमुक्ता ससुवर्णा यैः सा तदा ॥ ७५ ॥

एवं वुत्ते चोरो त्ति निच्छिउं सो चाभएण मायंगो। गिण्हाविऊण पुट्ठो कहमारामो विलुत्तो त्ति ॥७६॥ तेण पयंपियं नाह? पवरविज्जाबलेण णियएण। कहिओ य वइयरो सेणियस्स एसो समग्गो वि ॥७७॥ रन्नावि संसियं देइ मज्झ जइ कहवि निययविज्जाओ। सो पाणो ता मुंचह इहरा से हरह जीयं ति ॥७८॥ पडिवन्नं पाणेणं विज्जादाणं पि अह महीनाहो। सिंहासणे निसण्णो विज्जाओ पढिउमाढत्तो ॥७९॥ पुणरुत्त पयत्तुक्कित्तियावि रन्नो न ठंति जा विज्जा। सो ता तज्जइ रुट्ठो न रे तुमं देसि संमं ति ॥ ८० ॥ अभएण भणियमिह देव? नत्थि एयस्स थेवमवि दोसो। विणयगहिया हि विज्जाउ ठंति फलदा य जायंति ॥८१॥ ता पाणमिमं सीहासणम्मि ठविऊण सयमवि महीए। होऊण विणयसारं पढसु जहा ठंति इन्हि पि ॥ ८२ ॥

---

एवमुक्ते चौर इति निश्चित्य स चाभयेन मातङ्गः। ग्राहयित्वा पृष्टः कथमारामो विलुप्त इति ॥ ७६ ॥ तेन प्रजल्पितं नाथ? प्रवरविद्याबलेन निजकेन। कथितश्च व्यतिकरः श्रेणिकस्यैष समग्रोऽपि ॥ ७७ ॥ राज्ञापि शंसितं ददाति मह्यं यदि कथमपि निजविद्याः। स मातङ्गस्तदा मुञ्चतेतरथा तस्य हरत जीवमिति ॥ ७८ ॥ प्रतिपन्नं मातङ्गेन विद्यादानमप्यथ महीनाथः। सिंहासने निषण्णो विद्याः पठितुमारब्धः ॥ ७९ ॥ पुनः पुनः प्रयत्नोत्कीर्त्तितापि राज्ञे न तिष्ठन्ति यावद्विद्याः। स तदा तर्जति रुष्टो न रे त्वं ददासि सम्यगिति ॥ ॥ ८० ॥ अभयेन भणितमिह देव? नास्ति एतस्य स्तोकमपि दोषः। विनयगृहीता हि विद्यास्तिष्ठन्ति फलदाश्च जायन्ते ॥ ८१ ॥ तस्मान्मातङ्गमिमं सिंहासने स्थापयित्वा स्वयमपि मह्याम्। भूत्वा विनयसारं पठ यथा तिष्ठन्तीदानीमपि ॥ ८२ ॥

तह चेव कयं रन्ना संकंताओ लहुं च विज्जाओ । सक्कारिऊण मुक्को पाणो अच्चंतपणइव्व ॥८३॥ इय जइ इह लोइयतुच्छकज्जविज्जावि भावसारेण । पाविज्जइ हीणस्स वि गुरुणो अच्चंतविणएण ॥८४॥ ता कह सम्मत्थमणवंच्छियत्थदाणक्खमाए विज्जाए । जिणभणियाए दाएण विणयविमुहो वुहो होज्ज ॥८५॥ अन्नं च । पच्छरकयावि देवा साणिज्झपरा हवंति विणयाउ । जइ ता का गणणा अन्नवत्थुसिद्धीए धीराणं ॥८६॥ जइवि सुयनाणकुसलो होइ नरो हेउकारणविहन्नू । अविणीयं तहवि न तं समयत्थविऊ पसंसंति ॥ ८७ ॥ संमत्तनाणचारित्तपमुहगुणहेउविणयकरणपरं । अबहुस्सुयं पि कुसला बहुस्सुयपयम्मि ठावेंति ॥८८॥ जस्स विणओ स नाणी जो नाणी तस्स सम्मकिरियाउ । सम्मकिरियाउ जस्स उ सो च्चिय आराहणाजोग्गो ॥ ८९ ॥

---

तथा चैव कृतं राज्ञा संक्रान्ता लघु च विद्याः । सत्कृत्य मुक्तो मातङ्गोऽत्यन्तप्रणयीव ॥८३॥ इति यदीहलौकिकतुच्छकार्यविद्यापि भावसारेण । प्राप्यते हीनस्यापि गुरोरत्यन्तविनयेन ॥ ८४ ॥ तदा कथं समस्तमनोवांच्छितार्थदानक्षमायां विद्यायाम् । जिनभणितायां दाणेन विनयविमुखो वुधो भवति ॥ ८५ ॥ अन्यच्च पापाणकृता अपि देवाः सान्निध्यपरा भवंति विनयात् । यदि तदा का गणनान्यवस्तुसिद्धौ धीराणाम् ॥ ८६ ॥ यद्यपि श्रुतज्ञानकुशलो भवति नरो हेतुकारणविधज्ञः । अविनीतं तथापि न तं समयार्थविदः प्रशंसन्ति ॥ ८७ ॥ संम्यक्त्वज्ञानचारित्रप्रमुखगुणहेतुविनयकरणपरम् । अबहुश्रुतमपि कुशला बहुश्रुतपदे स्थापयन्ति ॥ ८८ ॥ यस्य विनयः स ज्ञानी यो ज्ञानी तस्य सम्यक्क्रियाः । सम्यग्क्रिया यस्य तु स एवाराधनायोग्यः ॥ ८९ ॥

तम्हा कल्लाणपरंपराए संपाडणेक्क पहुयम्मि । विणयम्मि निमेसंपि हु बुहेण न पमाइयव्वं ति ॥ ९० ॥ इय संसारमहोदहितरीए संवेगरंगसालाए । परिकम्मविहीयामोक्खचउमहामूलदाराए ॥ ९१ ॥ आराहणाए पनरस पडिदारमयस्स पढमदारस्स । संखेवेणं भणियं विणयो त्ति चउत्थपडिदारं ॥९२॥ विणयपणयस्सवि परं समाहिविरहम्मि जेण पुरिसस्स । सग्गापवग्गजणणी न सम्ममाराहणा घडति ॥९३॥ ता पत्तोदारं पिव मणवंछियसव्वकज्जसिद्धीए । सिद्धिपुरीए पवरं समाहिदारं पवक्खामि ॥९४॥ सो य समाही दुविहो दव्वे भावे य तत्थ दव्वम्मि । पयइप्पहाणदव्वोवओगओ जायति समाही ॥९५॥ अहवा वि हु दुल्लंभं पयईए सुंदरं तहा इट्ठं । सद्दं रूवं च रसं गंधं फासं च जहासंखं ॥ ९६ ॥

---

तस्मात् कल्याणपरंपरायाः संपादनैकप्रभुके । विनये निमेषमपि हि बुधेन न प्रमादयितव्यमिति ॥९०॥ इति संसारमहोदधितर्यां संवेगरङ्गशालायाम् । परिकर्मविधिप्रमुखचतुर्महामूलद्वारायाम् ॥ ९१ ॥ आराधनायां पञ्चदशप्रतिद्वारमयस्य प्रथमद्वारस्य । संक्षेपेण भणितं विनय इति चतुर्थप्रतिद्वारम् ॥ ९२ ॥ विनयप्रणतस्यापि परं समाधिविरहे येन पुरुषस्य । स्वर्गापवर्गजननी न सम्यगाराधना घटते ॥ ९३ ॥ तस्मात् प्रान्तद्वारमिव मनोवांछितसर्वकार्यसिद्ध्याः । सिद्धिपुर्याः प्रवरं समाधिद्वारं प्रवक्ष्यामि ॥ ९४ ॥ स च समाधिर्द्विविधा द्रव्ये भावे च तत्र द्रव्ये । प्रकृतिप्रधानद्रव्योपयोगाज्जायते समाधिः ॥ ९५ ॥ अथवापि हि दुर्लभ्यं प्रकृत्या सुन्दरं तथेष्टम् । शब्दं रूपं च रसं गन्धं स्पर्शं च यथा संख्यम् ॥ ९६ ॥

सोउं दट्ठुं भोत्तुं जिंघित्ता फासिउं समाहाणं । जं पाउणेज्ज पाणी द्व्वसमाही भवे सो उ ॥९७॥ तेण न इहा हिगारो अहवा सो वि हु कहिं पि केसिं पि । भावसमाहि निमित्तं इच्छिज्जति चेव जं भणियं ॥९८॥ मणुन्नं भोयणं भोच्चा मणुन्नं सयणासणं । मणुन्नंसि अगारंसि मणुन्नं झायए मुणी ॥९९॥ भावम्मि समाही पुण एगंतेणे व चित्तविजयाओ । चित्तविजओ च सम्मं रागदोसाण परिहरणा ॥ १७०० ॥ तप्परिहारो य सुहेयरेसु सद्दाइएसु विसएसु । पत्तेसु विचित्तेसु वि अभिसंगपओससंचारो ॥ १ ॥ तम्हा कुमग्गलग्गं विवेयरज्जूए चडुलतुरगं व । सुदढं संजमिऊणं माणसमुस्सिंखलपयारं ॥२॥ जइयव्वं सव्वेण वि सुहत्थिणा सुपुरिसेण निच्चं पि । सम्मं समाहिकरणे विसेसओ धम्मनिरएण ॥ ३ ॥

---

श्रुत्वा दृष्ट्वा भुक्त्वा घ्रात्वा स्पृष्ट्वा समाधानम् । यत् प्राप्नोति प्राणी द्रव्यसमाधिर्भवेत् स तु ॥ ९७ ॥ तेन नेहाधिकारोऽथवा सोऽपि हि कुत्रापि केषामपि । भावसमाधिनिमित्तमिष्यते चैव यद् भणितम् ॥ ९८ ॥ मनोज्ञं भोजनं भुक्त्वा मनोज्ञं शयनासनम् । मनोज्ञानागरान् मनोज्ञं ध्यायते मुनिः ॥९९॥ भावे समाधिः पुनरेकान्तेनैव चित्तविजयात् । चित्तविजयश्च सम्यग् रागद्वेषाणां परिहरणात् ॥ १७०० ॥ तत्परिहारश्च सुखेतरेषु शब्दादिकेषु विषयेषु । प्राप्तेषु विचित्रेष्वप्यभिष्वङ्गप्रद्वेषपरित्यागः ॥ १ ॥ तस्मात् कुमार्गलग्नं विवेकरज्ज्वा चटुलतुरगमिव । सुदृढं संयम्य मानसमुच्छृंखलप्रचारम् ॥ २ ॥ यतितव्यं सर्वेणापि सुखार्थिना सुपुरुषेण नित्यमपि । सम्यक् समाधिकरणे विशेषतो धर्मनिरतेन ॥ ३ ॥

तत्थ वि सविसेसतरपज्जंताराहणुज्जयमणेण। न तमंतरेण हि सुहं धम्मो आराहणा य भवे ॥४॥ तहाहि—असमाहीओ दुक्खं दुहिणो पुण अट्टमेव न उ धम्मो। धम्मविहीणस्स पुणो दूरे आराहणामग्गो ॥५॥ मोत्तुं समाहिमेक्कं असेससेसंगसुंगया वि जओ। सव्वा सुहसामग्गी दावग्गी चेव पुरिसस्स ॥६॥ जं वा तं वासिस्सवि जेण व केणवि पाउयस्सावि। जत्थ व कत्थ व वासिस्स जम्मि कम्मि वि अह काले॥ ७ ॥ जं वा तं वा विसमं समं व संपावियस्सवि अवत्थं। परमसुहं चिय निच्चं समाहिमंतस्स पुण नियमा॥८॥ सोक्खं च समाहिकयं अभयं अकिलेसजं अलज्जणियं। परिणामसुंदरं सवसमक्खयं निरुवममयावं ॥९॥ किं च॥ पज्जंतमेत्तिएणवि सुसमाहिवियस्स वीरपुरिसस्स। जं स न मरइ कस्सवि न यावि से मरइ को वि परो ॥ १० ॥

---

तत्रापि सविशेषतरपर्य्यन्ताराधनोद्यतमनसाम्। न तमन्तरेण हि सुखं धर्म्म आराधना च भवेत्॥ ४ ॥ तथाहि—असामाधेर्दुःखं दुःखिनः पुनरार्त्तमेव न तु धर्म्मः। धर्म्मविहीनस्य पुनर्दूर आराधनामार्गः॥ ५ ॥ मुक्त्वा समाधिमेकमशेषशेषाङ्गसुगतापि यतः। सर्वा सुखसामग्रीं दावाग्निश्चैव पुरुषस्य॥ ६॥ यद्वा तद्वाऽऽशिनोऽपि येन वा केनापि प्रावृतस्यापि। यत्र वा कुत्र वा वासिनो यस्मिन् कस्मिन्नप्यथकाले॥ ७॥ यद्वा तद्वा विसमां समां वा संप्राप्तस्याप्यवस्थाम्। परमसुखमेव नित्यं समाधिमतः पुनर्नियमात्॥ ८॥ सौख्यं च समाधिकृतमभयमक्लेशजमलज्जनीयम्। परिणामसुन्दरं स्ववशमक्षयं निरुपममपायम्॥९॥ किं च पर्य्याप्तमेतावतापि सुसमाधिविदो वीरपुरुषस्य। यत्स न म्रियते कस्यापि नचापि तस्य म्रियते कोऽपि परः॥ १०॥

अवि य । जे सुसमाहिम्मि रया विरया नीसेसपावठाणाओ। सुहिसयणधणाइविणासदंसणे वि हु न तेसिं मणो ॥११॥ अचेलो व्व चलइ थेवं पि संजमाउ ममत्त चत्ताण । सुसमाहिनिही भयवं रायरिसिनमीह दिट्ठंतो ॥१२॥ तहाहि—नगनगरागरवरपुरधणधण्णसमिद्धगामं रंमम्मि । नामेण विदेहाजणवयम्मि मिहिला पुरी आसि ॥१३॥ नयविणयसचसूरत्तसत्तपमुहप्पहाणगुणकलितो। पालेइ तं च राया जयभमिरजसो नमी नामा ॥१४॥ जम्मि नरेंदे रज्जं पालिंते खंडणाहरदलाण। करपीडणं उरोजाण जइ परं तरुणिलोगस्स ॥ १५ ॥ गुणवाहाए वुड्ढी य सद्दसत्थेसु सुम्मइ विरोहो । उप्पेक्खावि य दीसति जह परसुकईण कव्वेसु ॥ १६ ॥ सो एवंविहगुणवं अणप्पमाहप्पनिहयपडिवक्खो । सहसक्खो इव विसए निसेवमाणो गमइ कालं ॥ १७ ॥

---

अपि च, ये सुसमाधौ रता विरता निःशेषपापस्थानात् । सुखिस्वजनधनादिविनाशदर्शनेऽपि हि न तेषां मनः ॥ ११ ॥ अचल इव चलति स्तोकमपि संयमान्ममत्व त्यक्तानाम् । सुसमाधिनिधिर्भगवान् राजर्षिनमिरिह दृष्टान्तः ॥ १२ ॥ तथाहि—नगनगरागरवरपुरधनधान्यसमृद्धग्रामरम्ये । नाम्ना विदेहजनपदे मिथिला पुर्यासीत् ॥ १३ ॥ नयविनयसत्यशूरत्वसत्त्वप्रमुखप्रधानगुणकलितः । पालयति तां च राजा जगद्भ्रमितयशा नमिर्नामा ॥ १४ ॥ यस्मिन् नरेन्द्रे राज्यं पालयति खण्डनमधरदलानाम् । करपीडनमुरोजानां जगति परं तरुणिलोकस्य ॥ १५ ॥ गुणव्याघातो वृद्धिश्च शब्दशास्त्रेषु श्रूयते विरोधः । उपेक्षापि च दृश्यते यत्र परसुकवीनां काव्येषु ॥१६॥ स एवंविधगुणवान् अनल्पमाहात्म्यनिहतप्रतिपक्षः । सहस्राक्ष इव विषयान्निषेवमानो गमयति कालम् ॥ १७ ॥

अह एगम्मि अवसरे वेयणियवसेण पलयजलणसमो। नरवइणो तस्स महाघोरो दाहज्जरो जातो ॥१८॥ तेण य वाउलियतणू वज्जानलमुम्मुरानिवडिओ व्व । उव्वेल्लइ परियत्तइ सुदीहमुस्ससइ स महप्पा ॥ १९ ॥ वाहरिया वरवेज्जा कया य तेहिं ओसहपओगा। न य पसममुवगतो से मणागमेत्तं पि परितावो ॥२०॥ अवरे वि मंततंताइ जाणगा जे जणे पसिद्धिगया । आहूया ते वि तहिं असाहियट्ठा य नहरिया ॥ २१ ॥ नवरं पइखणचंदणरससिसिरमुणालियाजलद्दाहिं । अच्चंतदाहविहुरस्स होति से थेवमाहारो ॥२२॥ अह तन्निमित्तमणवरयमेव अंतेउरीहिं समकालं । पियविहुरजायदुक्खाहिं चंदणंमि घसिज्जंते ॥२३॥ पयलंतकोमलभुया परोप्परप्फिडियकणकवलयभवो । अवहरियंत्तनिणाओ वियंभिओ रणझणारावो ॥ २४ ॥

---

अथैकस्मिन्नवसरे वेदनीयवशेन प्रलयज्वलनसमः । नरपतेस्तस्य महाघोरो दाहज्वरो जातः ॥ १८ ॥ तेन च व्याकुलिततनुर्वज्रानलमुर्मुरनिपतित इव । प्रधावति परिवर्त्तते सुदीर्घमुच्छ्वसिति स महात्मा ॥ १९ ॥ व्याहारिता वरवैद्याः कृता च तैरौषधप्रयोगाः । न च प्रशममुपगतस्तस्य मनाङ्मात्रमपि परितापः ॥ २० ॥ अपरेऽपि मन्त्रतन्त्रादिजानका ये जने प्रसिद्धिगताः । आहूता तेऽपि तत्रासाधितार्थाश्च निःसृताः ॥ २१ ॥ केवलं प्रतिक्षणचन्दनरसशिशिरमृणालिकाजलार्द्राभिः । अत्यन्तदाहविधुरस्य भवति तस्य स्तोकमाधारः ॥ २२ ॥ अथ तन्निमित्तमनवरतमेवान्तःपुरीभिः समकालम् । प्रियविधुरजातदुःखाभिश्चन्दने संघर्षति ॥ २३ ॥ प्रचलत्कोमलभुजपरस्परभ्रंसितकांचनवलयभवः । अवहृतानानिनादो विजृम्भितो रणझणारावः ॥ २४ ॥

तं चायण्णिय रन्ना पयंपियं किं समुप्भवो एसो । वाढमणिव्वुइकारी अहो निनाओ पवित्थरइ ॥ २५॥ भणियं य परियणेण देव? रवो कणयवलयसंभूओ । अंतेउरीण चंदणमुग्घस्संतीणमेसो त्ति ॥ २६ ॥ सोउं च नरवइगिरं एक्केक्कं धरिय सेसवलयाइं । अवणीयाइं अंतेउरीहिं भुयवल्लरीहिंतो ॥२७॥ खणमेत्तम्मि अइगए पुणो वि पुच्छियमिमं नरिंदेण । किं रे न संपयं सो निसुणिज्जइ कणयं वलयरवो ॥२८॥ भणियं जणेण सामी? परोप्परप्फिडणविरहओ इण्हिं । एगागीणं वलयाण कह रवो संभवेज्ज इहं ॥२९॥ अव्वो जह एयाणं असहायाणं तहा जिणाणं पि । नूणमणत्थुप्पाओ रवो व्व नो जायति कहंपि ॥३०॥ जेत्तियमेत्तो संगो तेत्तियमेत्ता अणत्थपत्थारी । संगं विवज्जिऊणं ता होमि अहं पि निस्संगो ॥ ३१ ॥

---

तं चाकर्ण्य राज्ञा प्रजल्पितं किं समुद्भव एषः । वाढमनिवृत्तिकारी अहो निनादः प्रविस्तरति ॥ २५ ॥ भणितं च परिजनेन देव ? रवः कनकवलयसंभूतः । अन्तेपुरीणां चन्दनमुद्घर्षन्तीनामेष इति ॥ २६ ॥ श्रुत्वा च नरपतिगिरमेकैकं धृत्वा शेषवलयानि । अपनीतान्यन्तेपुरीभिर्भुजवल्लरीभ्यः ॥ २७ ॥ क्षणमात्रेऽतिगते पुनरपि पृष्टमिदं नरेन्द्रेण । किं रे न सांप्रतं स निश्रूयते कनकवलयरवः ॥ २८ ॥ भणितं परिजनेन स्वामिन् ? परस्परसंघट्टनविरहादिदानीम् । एकाकीनां वलयानां कथं रवः संभवत्यत्र ॥ २९ ॥ अहो यथैतेषामसहायानां तथा जिनानामपि । नूनमनर्थोत्पादो रव इव न जायते कथमपि ॥३०॥ यावन्मात्रः सङ्गस्तावन्मात्रोऽनर्थप्रस्तारः । सङ्गं विवर्ज्य तस्माद् भवाम्यहमपि निस्सङ्गः ॥ ३१ ॥

इय संवेगोवगयस्स राइणो जाइसरणमुप्पन्नं । पुव्वभवचिन्नसामन्नमुत्तममणुसुमरियं झत्ति ॥ ३२ ॥ अणुकूलकम्मवसओ सो वि हु दाहज्जरो अवक्कंतो। अह निययपए पुत्तं ठविऊणं सो महाभागो ॥ ३३ ॥ पत्तेयबुद्धलिंगी एगागी सव्वसंगमवहाय । नयरी वहियारामे उस्सग्गेणं ठितो भयवं ॥३४॥ तो रायरिसिम्मि नमिम्मि तहट्ठिए हरियसव्वसारव्व । अच्चंतपणइविछोहि य व्व गुरुरोगविहुरव्व ॥ ३५ ॥ कयकरुणपिप्पलावाउलहलबोलबहुलियदियंतो । अंसुजलाविलनयणा तव्वेलं चिय अहेसि पया ॥ ३६ ॥ अह ओलंबियभुयपरिहम्मरसेलं व निच्चलं दट्ठुं । नमिरायरिसिं सक्को चिन्तेउमिमं समाढत्तो ॥३७॥ पढमं पडिवन्नम्मि सामन्ने संपयं नमिमुणिस्स । केरित्थो हु समाही हवेज्ज गंतुं परिक्खामि ॥ ३८ ॥

---

इति संवेगोपगतस्य राज्ञो जातिस्मरणमुत्पन्नम् । पूर्वभवचीर्णश्रामण्यमुत्तममनुस्मृतं झटिति ॥ ३२ ॥ अनुकूलकर्म्मवशात् सोऽपि हि दाहज्वरोऽपक्रान्तः । अथ निजपदे पुत्रं स्थापयित्वा स महाभागः ॥ ३३ ॥ प्रत्येकबुद्धिलिङ्ग्येकाकी सर्वसङ्गमपहाय । नगरीबहिराराम उत्सर्गेण स्थितो भगवान् ॥३४॥ ततो राजर्षौ नमौ तथास्थिते हृतसर्वसारा इव । अत्यन्तप्रणयिविक्षोभिता च इव गुरुरोगविधुरा इव ॥३५॥ कृतकरुणविप्रलापाव्याङ्कलकौलाहलदाहुलितदिगन्ता । अश्रुजलाविलनयना तद्वेलामेवासीत् प्रजा ॥ ३६ ॥ अथावलम्बितभुजपरिघममरशैलमिव निश्चलं दृष्ट्वा । नमिराजर्षिं शक्रश्चिन्तितुमिदं समारब्धः ॥३७॥ प्रथमं प्रतिपन्ने श्रामण्ये सांप्रतं नमिमुनेः । कीदृशो हि समाधिर्भवेद् गत्वा परीक्षामि ॥ ३८ ॥

तो कयमाहणरूवो विउविउं नयरिदाहमुद्दामं। विलवंतलोयनिवहं च कुलिसपाणी नमिं भणति॥ ३९ ॥ किं मुणिपुंगव? मिहिलाए अज्ज सुचंति सव्वठाणेसु। करुणप्पलावरूवा लोयाणं विविह आरावा ॥ ४० ॥ नमिणा भणियं सच्छायफुल्लफलमणहरम्मि वच्छम्मि। जह भज्जंते वाएण पक्खिणो दुक्खिया संता ॥ ४१ ॥ कंदंति सरणरहिया तह लोया वि हु पुरीविणासम्मि। अच्चंतसोगविहया परिदेवंती पहुदुहत्ता ॥४२॥ सक्केण जंपियं पेच्छ पेच्छ एसा कहं तुहं नयरी। कीलापासाओ वि य डज्झइ पवलेण जलणेण ॥ ४३ ॥ अंतेउरं पि पेच्छसु उज्झियभुयनालमुब्भडपलावं। हा नाह? रक्ख रक्खत्ति जंपिरं परमकरुणएयं॥४४॥ नमिणा भणियं परिचत्त-पुत्तसुहिसयणगिहिकलत्तस्स। जइ मज्झ होज्ज किंचि चि य किंच णं ता तय दज्झे ॥ ४५ ॥

---

ततः कृतब्राह्मणरूपो विकृत्य नगरीदाहमुद्दामम्। विलपल्लोकनिवहं च कुलिशपाणिर्नमिं भणति ॥३९॥ किं मुनिपुङ्गव? मिथिलायामद्य श्रूयन्ते सर्वस्थानेषु। करुणप्रलापरूपा लोकानां विविधारावाः ॥ ४० ॥ नमिना भणितं सच्छाय पुष्पफलमनोहरे वृक्षे। यथा वातेन भज्यमाने पक्षिणो दुःखिताः सन्तः ॥ ४१ ॥ क्रन्दन्ति शरणरहितास्तथा लोका अपि हि पुरीविनाशे। अत्यन्तशोकविहताः परि देव्यन्ति पृथु-दुःखार्त्ताः ॥ ४२ ॥ शक्रेण जल्पितं पश्य पश्यैषा कथं तव नगरी। क्रीडाप्रासादोऽपि च दह्यते प्रबलेन ज्वलनेन ॥ ४३ ॥ अन्तःपुरमपि पश्योज्झितभुजनालमुद्भटप्रलापम्। हा नाथ? रक्ष रक्षेति जल्पितं परमकरुणमेतत् ॥ ४४ ॥ नमिना भणितं परित्यक्तपुत्रसखिस्वजनगृह-कलत्रस्य। यदि मम भवेत् किंचिदपि च किंच नं तदा तद दह्यते ॥ ४५ ॥

तद्भावे मिहिलाए डज्झंतीए वि किं नु डज्झेज्जा । एवं च पेहियाए वि भद्द किं वा मह पुरीए ॥ ४६ ॥ एयं हि परमसोक्खं नूण मुमुक्खूण चत्तसंगाण। जं नत्थि पियं न य किं पि अप्पियं मोक्खकंखीण॥४७॥ इय पसमसारमायन्निऊण नमिणो पयंपियं सक्को । संहरियनयरिदाहो पुणो वि एवं समुल्लवति ॥४८॥ नाहो त्ति ताणकारि त्ति सरणकारित्ति परभयवसट्टो । निविडभुयदंडमंडवमल्लीणो एस तुज्झ जणो ॥ ४९ ॥ तम्हा पुरीए पायारं गोउरग्गलदुग्गमं । आउहाणि य कारित्ता पव्वज्जं काउमरिहसि ॥ ५० ॥ मुणिणा जंपियं हंत सद्ध चिय पुरी महं । कओ य तीए पायारो सुतुंगो खंति लक्खणो ॥५१॥ संवरग्गलदुग्गमो धिई केयणसंगयं । परक्कमो धणू तत्थ तवो नारायराइयं ॥ ५२ ॥

---

तदभावे मिथिलायां दह्यन्त्यामपि किं नु दह्यते । एवं च दृष्टायामपि भद्र ? किं वा मम पुर्याम् ॥ ४६ ॥ एतद्धि परमसौख्यं नूनं मुमुक्षूणां त्यक्तसङ्गानाम् । यत्रास्ति प्रियं न च किमप्यप्रियं मोक्षकांक्षिणाम् ॥ ४७ ॥ इति प्रशमसारमाकर्ण्य नमिना प्रजल्पितं शक्रः । संहृतनगरीदाहः पुनरप्येवं समुल्लपति ॥ ४८ ॥ नाथ ? इति त्राणकारीति शरणकारीति परभयवशार्त्तः । निविडभुजदण्डमण्डपमल्लीन एष तव जनः ॥४९॥ तस्मात् पुर्याः प्राकारं गोपुरार्गलदुर्गमम् । आयुधानि च कृत्वा प्रव्रजां कर्त्तुमर्हसि ॥५०॥ मुनिना जल्पितं हन्तश्रद्धा किल पुरी मम । कृतश्च तस्याः प्राकारः सूत्तुङ्गः क्षान्ति लक्षणः ॥ ५१ ॥ संवरार्गलदुर्गमो धृतिकेतनसंगतम् । पराक्रमो धनुस्तत्र तपो नाराचराजिकम् ॥ ५२ ॥

आउहं पि कयं चारु कम्मसत्तुविणासगं । एवं पि कयरक्खस्स किं न पव्वइउं खमं ॥ ५३ ॥ सक्केण जंपियं भन्ते? कारइत्ताणमुत्तमे । पासाए विविहे पच्छा पव्वज्जं काउमरिहसि ॥५४॥ नमिणा भासियं भद्द? को करेज्ज पहे गिहं । जीवस्स यत्थ वच्छाणं तत्थ कुवेज्ज तं वुहो ॥ ५५ ॥ वज्जाउहेण संलत्तं खुद्दे चोराइणो परे । हणित्ता लोगखेमत्थं पव्वज्जं काउमरिहसि ॥५६॥ नमिणा जंपियं एए मिच्छा हम्मंति निच्छियं । अखेमयाणि कम्माणि हंतुं जुत्ताणि ताणि मो ॥ ५७ ॥ हरिणा जंपियं भंते? जे नमंति न पत्थिवा। ते लहुं निज्जिउं सव्वे पव्वज्जा तुज्ज जुज्जए ॥ ५८ ॥ मुणिणा वुत्तमत्ताणं जो जिणेज्ज सुदुज्जयं । सहस्स जोहिणो वीह सो एक्को विजई परं ॥ ५९ ॥ ता अप्पणा समं ताव जुज्झिउं मज्झ जुज्जए । निस्सेयसत्थिणो वज्झजुज्झेणं विहलेण किं ॥ ६० ॥

---

आयुधमपि कृतं चारु कर्मशत्रुविनाशकम् । एवमपि कृतरक्षस्य किं न प्रव्रजितुं क्षमम् ॥ ५३ ॥ शक्रेण जल्पितं भदन्त ? कारयित्वाणमुत्तमान् । प्रासादान् विविधान् पश्चात् प्रव्रज्यां कर्तुमर्हसि ॥ ५४ ॥ नमिना भाषितं भद्र? कः करोति पथिगृहम् । जीवस्य यत्रावस्थानं तत्र करोति तद्बुधः ॥ ५५ ॥ वज्रायुधेन संलप्तं क्षुद्रान् चौरादिकान् परान् । हत्वा लोकक्षेमार्थं प्रव्रज्यां कर्तुमर्हसि ॥ ५६ ॥ नमिना जल्पितमेते मिथ्या हन्यन्ते निश्चितम् । अक्षेमकाणि कर्म्माणि हन्तुं युक्तानि तानि मया ॥ ५७ ॥ हरिणा जल्पितं भदन्त? ये नमन्ति न पार्थिवाः । तान् लघु निर्जित्य सर्वान् प्रव्रज्या तव युज्यते ॥ ५८ ॥ मुनिनोक्तमात्मानं यो जयेत् सुदुर्जयम् । सहस्रयोधी अपीह स एको विजयी परम् ॥५९॥ तस्मादात्मना समं तावद् योद्धुं मम युज्यते । निःश्रेयसार्थिनो बध्ययुद्धेन विफलेन किम् ॥६०॥

कोहं लोहं मयं मायमिन्दियाणि य पंचवि। जियाणि जेण सव्वंपि जेयव्वं तेण निज्जियं ॥ ६१ ॥ अक्कम्मित्ता तिलोकं पि कित्ती तस्स परं ठिया । सासया सिद्धिखेत्तं च जेण एयं विणिज्जियं ॥ ६२ ॥ सोचा एयं सहस्सक्खो भत्तिपब्भारसंगतो। पुणो नमिरायरिसिं एवमाह महायसं ॥ ६३ ॥ जइत्ता पउरे जन्ने भोइत्ता माहणाइणो। दाउं दीणाइयाणं च सामन्नं काउमरिहसि ॥ ६४ ॥ गिहासमं विमोत्तूण किं वा पव्वज्जमिच्छसि । पोसहाभि रओ राय एत्थे वावसस्तू तुमं ॥ ६५ ॥ नमिणा भासियं जन्ने दक्खिणालक्खसुंदरे । जो कारवेज्ज तत्तो वि संजमो गुणकारगो ॥ ६६ ॥ मासे मासे कुसग्गेण जो भुंजेज्ज गिहट्ठितो। विमुक्कसव्वसंगस्स लेसेण वि न सो समो ॥६७॥ जंपियं हरिणा राय? सुवन्नं मणिसंचयं। कंसं दूसं च वड्ढित्ता पव्वज्जं काउमरिहसि ॥६८॥

---

क्रोधं लोभं मदं मायामिन्द्रियाणि च पञ्चापि । जितानि येन सर्वमपि जेतव्यं तेन निर्जितम् ॥ ६१ ॥ आक्रम्य त्रैलोक्यमपि कीर्त्तिस्तस्य परं स्थिता । शाश्वता सिद्धिक्षेत्रं च येनैतद् विनिर्जितम् ॥ ६२ ॥ श्रुत्वैतत् सहस्राक्षो भक्तिप्राग्भारसंगतः । पुनर्नमिराजर्षिमेवमाह महायशसम् ॥ ६३ ॥ इष्ट्वा प्रचुरान् यज्ञान् भोजयित्वा ब्राह्मणादीन् । दत्त्वा दीनादिदानं च श्रामण्यं कर्तुमर्हसि ॥ ६४ ॥ गृहाश्रमं विमुच्य किं वा प्रव्रज्यामिच्छसि । पोषधामि रतो राजन्नत्रैवावस त्वम् ॥ ६५ ॥ नमिना भाषितं यज्ञान् दक्षिणालक्षसुन्दरान् । यः कारयति ततोऽपि संयमो गुणकारकः ॥ ६६ ॥ मासे मासे कुशाग्रेण यो भुंक्ते गृहस्थितः । विमुक्तसर्वसंगस्य लेशेनापि न स समः ॥ ६७ ॥ जल्पितं हरिणा राजन्? सुवर्णं मणिसंचयम् । कांस्यं दूश्यं च वर्द्धित्वा प्रव्रज्यां कर्तुमर्हसि ॥ ६८ ॥

मुणिणा भणियं भद्द? सुवन्नमणिमाइणो। केलासतुंगकूडा वि असंखा वि पणामिया ॥६९॥ लुद्धस्स जंतुणो तित्तिं एगस्स वि जणिंति नो । इच्छा आगाससंकासा सक्का केणवपूरिउं ॥ ७० ॥ जहा जहा भवे लाहो लोहो होति तहा तहा । एवं तेलोक्क लाभे वि न होज्जा कावि निव्वुई ॥ ७१ ॥ वज्जिणा जंपियं राय? संते भोगे मणोहरे । चेच्चा असंते पत्थितो संकप्पेणं विहंनसि ॥ ७२ ॥ मुणिणा भासियं मुद्ध वरं सल्लं वरं विसं । वरं आसीविसो सप्पो वरं कुद्धो य केसरी ॥ ७३ ॥ वरं अग्गी य नो भोगा चिंतिज्जंता वि जे नरं । नरयं निंति दुत्तारं भामयंति भवन्नवे ॥ ७४ ॥ सेल्लाईणं हि जोगे वि मच्चू एगभवो भवे । भोगाणं पत्थणेणावि पाणी हम्मइ लक्खसो ॥ ७५॥ ता चत्तभोगवंछोहं अहोगइकरं परं । कोहं हंतूण माणं च दिन्नाहमगई गमं ॥ ७६ ॥

---

मुनिना भणितं भद्र ? सुवर्ण्णमणिकादयः । कैलाशतुङ्गकूटा अप्यसंख्याता अप्यर्पिताः ॥ ६९ ॥ लुब्धस्य जन्तोस्तृप्तिमेकस्यापि जनयन्ति न । इच्छा आकाशसंकाशाः शक्याः केनावपूरितुम् ॥ ७० ॥ यथा यथा भवेल्लाभो लोभो भवति तथा तथा । एवं त्रैलोक्यलाभेऽपि न भवति कापि निर्वृत्तिः ॥ ७१ ॥ वज्रिणा जल्पितं राजन् ? सतो भोगान् मनोहरान् । त्यक्त्वा असतः प्रार्थयन् संकल्पेन विहन्यसे ॥ ७२ ॥ मुनिना भाषितं मुग्ध ? वरं शल्यं वरं विषम् । वरमाशीविषः सर्प्पो वरं क्रुधश्च केशरी ॥ ७३ ॥ वरमग्निश्च नो भोगाश्चिन्ततोऽपि ये नरम् । नरकं नयन्ति दुस्तारं भ्रामयन्ति भवार्णवे ॥ ७४ ॥ शल्यादीनामपि योगेऽपि मृत्युरेकभवो भवे । भोगानां प्रार्थनेनापि प्राणी हन्यते लक्षशः ॥ ७५ ॥ तस्मात् त्यक्तभोगवांछोयमधोगतिकरं परम् । क्रोधं हत्वा मानं च दत्ताधमगतिगमम् ॥ ७६ ॥

सुगईघायगं मायं लोहं पि दुहओ भयं। विद्धंसिऊण सामन्ने उज्जमिस्सामि एगगो ॥७७॥ इय परमसमाही मंतमचन्त संतं। बहुविहभणिईहिं तं परिक्खित्तु सक्को ॥ कणगमिव मुणित्ता एगरूवं सरूवं। पयडियहरिसेणं थोउमेवं पवत्तो ॥ ७८ ॥ जयसि विजियकोह? धंसियासेसमाण। पाडिहयपसरंतुद्दाममायापवं च ॥ मुणिवर? हयलोहज्जोहसंचत्तसंगो। तुममिह परमेक्को पुज्जणिज्जो जयम्मि ॥ ७९ ॥ तुममिह परमेक्को उत्तमो उत्तमाणं। भविहसि परजम्मे उत्तमो तं सि चेव ॥ तिजयतिलयतुल्लं उत्तमं सिद्धिखेत्तं। अणुसरिहिसि नूणं पिट्ठकम्मट्ठगंठी ॥ ८० ॥ भवति कह न सुद्धी तुज्झ संकित्तणेणं। कहमुवसमेई दंसणे वा न पावं ॥ फुरंति मणनिरोहायाससज्झो अवंझो। सिवसुहजणणम्मि जस्स एसो समाही ॥ ८१ ॥

---

सुगतिघातकां मायां लोभमपि द्विधा भयम्। विध्वस्य श्रामण्य उद्यंस्याम्येकक: ॥ ७७ ॥ इति परममसमाधिमन्तमत्यन्तसत्त्वम्। बहुविधभणितिभिस्तं परीक्ष्य शक्र: ॥ कनकमिव ज्ञात्वैकरूपं स्वरूपम्। प्रकटितहर्षेण स्तोतुमेवं प्रवृत्त: ॥ ७८ ॥ जयसि विजितक्रोध? ध्वंसिताशेषमान?। प्रतिहतप्रसरदुद्दाममायाप्रपञ्च ॥७९॥ मुनिवर? हतलोभयोध: संत्यक्तसङ्ग:। त्वमिह परमेक: पूजनीयो जगति ॥ त्वमिह परमेक उत्तम उत्तमानाम्। भविष्यसि परजन्मन्युत्तमस्त्वमसि चैव ॥ ८० ॥ त्रिजगत्तिलकतुल्यमुत्तमं सिद्धिक्षेत्रम्। अनुसरिष्यसि नूनं पिष्टकर्म्माष्टग्रंथि: ॥ भवति कथं न शुद्धिस्त्वत्संकीर्तनेन। कथमुपशाम्यति दर्शने वा न पापम् ॥ स्फुरति मनोनिरोधायाससाध्याऽवन्ध्या। शिवसुखजनने यस्यैषा समाधि: ॥ ८१ ॥

इय थुणिय मुणिंदं वंदिऊणं च पाए। कमलकुलिसवज्जालंकिए भत्तिसारं ॥ भसलगवलनीलं वोममुल्लंघिऊणं। सुरपुरमणुपत्तो तक्खणेणं सुरेन्दो ॥ ८२ ॥ एवं नमिव धीरा इहलोइयपावसंगविरयमणा। अच्चंतसमाहीए कुणंति सव्वुज्जमं जम्हा ॥ ८३ ॥ धम्मगुणनागराणं निवासनयरं परं चिय समाही। आराहणालयाए कंदो कंदो तह समाही ॥ ८४ ॥ सम्मत्तनाणचारित्तखन्तिपमुहामहागुणा वि फलं। देन्ति ससज्झं सम्मं समाहीगब्भ चिय जहुत्तं ॥ ८५ ॥ उवविसउ य एगंते बन्धउ पउमासणं पयत्तेण। धरउ य सासं रुंधं उ बज्झं तह कायचेट्ठंपि ॥ ८६ ॥ निमिउट्ठपुडं मंथरतारं दिट्ठिं च निसउ नासग्गे। जइ न समाही लग्गति तप्फलभोगी न ता जोगी ॥ ८७ ॥

---

इति स्तुत्वा मुनीन्द्रं वन्दित्वा च पादौ। कमलकुलिशवज्रालंकृतौ भक्तिसारम् ॥ ८२ ॥ भसलगवलनीलं व्योमं उल्लंघ्य। सुरपुरमनुप्राप्तस्तत्क्षणेन सुरेन्द्रः ॥ एवं नमिरिव धीरा इहलौकिकपापसंगविरतमानसाः। अत्यन्तं समाधौ कुर्वन्ति सर्वोद्यमं यस्मात् ॥ ८३ ॥ धर्मगुणनागराणां निवासनगरं परमेव समाधिः। आराधनालतायाः विस्तृतकन्दस्तथा समाधिः ॥ ८४ ॥ सम्यक्त्वज्ञानचारित्रक्षान्तिप्रमुखा महागुणा अपि फलं। ददन्ति स्वसाध्यं सम्यगसमाधिगर्भा एव यथोक्तम् ॥ ८५ ॥ उपविशतु चैकान्ते बध्नातु पद्मासनं प्रयत्नेन। धरतु च श्वासं रुन्धन्तु बध्यां तथा कायचेष्टामपि ॥ ८६ ॥ नत्वौष्ठपुटं मन्थरतारां दृष्टिं च निवेश्य नासाग्रे। यदि न समाधिर्लगति तत्फलभोगी न तदा योगी ॥ ८७ ॥

करयलनिलीणनिम्मलफलिहं व सुदिव्वजोइणो जं च । पासंति जगं सचराचरं पि तं पि हु समाहिफलं ॥८८॥ किंच ॥ चित्तं समाहियं जस्स होइ सवसं विसोत्तियारहियं । सो वहति निरइयारं सामन्नधुरं अपरितंतो ॥८९॥ ते धन्ना भुवणयले समाहिबलदलियरायदोसा । जे परमं देहाहारं अहारं पि हु अणीहंता ॥ ९० ॥ सुविइयवत्थुसरूवा हरिसविसायाइएहिं अप्पुट्ठा । बहु जम्मनिम्मियंपि हु कम्मं निम्मूलयंति लहुं ॥ ९१ ॥ ता चित्तविजयलक्खणभावसमाहिए होइ जइयव्वं । एएणं चिय पत्थं पगयंति कयं पसंगेण ॥ ९२ ॥ इय सुत्तवुत्तजुत्तीजुयाए संवेगरंगसालाए । परिकम्मविहीपामोक्खचउमहामूलदाराए ॥ ९३ ॥ आराहणाए पनरसपडिदारमयस्स पढमदारस्स । पंचमं भणियमिमं समाहीनामं पडिदारं ॥ ९४ ॥

---

करतलनिलीननिर्मलपरिघमिव सुदिव्ययोगिनो यच्च । पश्यन्ति जगत् सचराचरमपि तदपि हि समाधिफलम् ॥ ८८ ॥ किंच । चित्तं समाहितं यस्य भवति स्ववशं विशंकारहितम् । स वहति निरतिचारं श्रामण्यधुरमपरितन्त्रः ॥ ८९ ॥ ते धन्या भुवनतले समाधिवलदलितरागद्वेषाः । ये परमं देहाधारमाहारमपि ह्यनीहन्तः ॥ ९० ॥ सुविदितवस्तुस्वरूपा हर्षविषादादिकैरस्पृष्टाः । बहुजन्मनिर्म्मितमपि हु कर्म निर्मूलयन्ति लघु ॥ ९१ ॥ तस्माच्चित्तविजयलक्षणभावसमाधौ भवति यतितव्यम् । एतेनैव पथ्यं प्रगदन्ति कृतं प्रसङ्गेन ॥ ९२ ॥ इति सूत्रोक्तयुक्तियुक्तायां संवेगरंगशालायाम् । परिकर्म्मविधिप्रमुखचतुर्महामूलद्वारायाम् ॥ ९३ ॥ आराधनायां पञ्चदशप्रतिद्वारमयस्य प्रथमद्वारस्य । पञ्चमं भणितमिदं समाधिनामं प्रतिद्वारम् ॥ ९४ ॥

एसो य समाही चित्तविजयजणिओ वि नहु थिरो होति । आराधगो मणं जइ वारंवारं न सासेति ॥९५॥ जओ पोयवाहणं व चित्तं चिन्तासागरगयं परिभमंतं । अन्नाणपवणपेल्लियविसोत्तियावीइ हम्मंतं ॥ ९६ ॥ पडियं मोहावत्ते कह लग्गेज्जा समाहिवरमग्गे । जइ जाएज्ज न सम्मं अणुसासणकन्नधारो से ॥ ९७॥ दोसाण नासणं गुणपयासणं नाणुसासणं पत्तो । चित्तस्स वुच्चइ तयं एयं सुसमाहिओ कुज्जा ॥ ९८ ॥ हं भो चित्त ? चित्तविचित्तं वि तुमं पि वहसि बहुभावे । किं तु परेतंतेहिं मोहेइ तुमं तु अप्पाणं ॥ ९९ ॥ सइ रुइयगीयन च्चियहसियाइवियारओजणं दट्ठुं । मत्तं व हियय तह तं वट्टसु जह नासि हसणीयं ॥ १८०० ॥ मोहभुजंगमदट्ठं सुविसंथुलचेट्ठियं जयमसंतं । किं न पुरत्थं पेच्छसि विवेयमं तं न जं सरसि ॥ १ ॥

---

एषा च समाधिश्चित्तविजयजनितापि नहि स्थिरा भवति । आराधको मनो यदि वारंवारं न शासयति ॥ ९५ ॥ यतः पोतवाहनमिव चित्तं चिन्तासागरगतं परिभ्रमत् । अज्ञानपवनक्षिप्तशंकावीचि हन्यमानम् ॥ ९६ ॥ पतितं मोहावर्ते कथं लगति समाधिवरमार्गे । यदि जायेत न सम्यगनुशासनकर्णधारस्तस्य ॥ ९७ ॥ दोषाणां नाशनं गुणप्रकाशनं नानुशासनं प्राप्तः । चित्तस्य व्रजति तदेवं सुसमाहितः कुर्यात् ॥ ९८ ॥ अपि भो चित्त ? चित्रविचित्रमपि त्वं अपि वहसे बहुभावान् । किंतु पारतन्त्रैर्मोहयति त्वं त्वात्मानम्॥९९॥ सदा रुचितगीतनृत्यहास्यादिविकाराञ्जनं दृष्ट्वा । मत्तमिव हृदय? तथा त्वं वर्त्तस्व यथा नासि हसनीयम् ॥ १८०० ॥ मोहभुजङ्गमदष्टं सुविपरथूलचेष्टितं जगदशान्तम् । किं न पुरस्तात् पश्यसि विवेकमत् त्वं न यत्स्मरसि ॥ १ ॥

चित्त? चपलत्तणेणं रसायलं विससि जासि गयणंपि। भमसि दिसि मंडलाणि वि असंगयं पुण न तं फुससि ॥२॥ जम्मजरमरणसिहिणा भवभवणे सव्वओ पलित्तंमि। नाणोदहिमवगाहिय मुन्दन्तं लहसु हियय तुमं ॥ ३ ॥ हियय? तुमे एस कओ भववासणवागुराए महबन्धो। ता तह य पसिय इयाणिं जह तव्विगमो लहुं होति ॥ ४ ॥ किं चित्त? चिंतिएहिं विहवेहि अत्थिरेहिं अह न तुहं। तत्तण्हावगमो ता संतोसरसायणं पियसु ॥ ५ ॥ हे हियय भवसरूवं पुत्तकलत्ताइवइअरविचित्तं। चिन्तेसु इंदजालं ति जइ सुहं महसि अवियारं ॥ ६ ॥ भववणं गयम्मि सारंगगहणपडुयम्मि कामगुणकूडे ॥ हियय गयमप्पयं किं नेकासि जं तुह सुहमरट्टो ॥ ७ ॥

---

चित्त? चपलत्वेन रसातलं विशसि यासि गगनमपि। भ्राम्यति दिग्मण्डलान्यप्यसंगतं पुनर्न तत्स्पृशति ॥ २ ॥ जन्मजरामरणशिखिना भवभवने सर्वतः प्रदीप्ते। ज्ञानोदधिमवगाह्य मुदत्वं लभसे हृदय? त्वम् ॥ ३ ॥ हृदय? त्वयैष कृतो भववासनावागुरया महाबन्धः। तस्मात्तथा च प्रसीदेदानीं यथा तद्विगमो लघु भवति ॥ ४ ॥ किं चित्त? चिन्तितैर्विभवैरस्थिरैरथ न तव। तत्तृष्णापगमस्तस्मात् संतोषरसायणं पिब ॥ ५ ॥ हे हृदय! भव स्वरूपं पुत्रकलत्रादिव्यतिकरविचित्रम्। चिन्तयेन्द्रजालमिति यदि सुखं कांक्षसेऽविकारम् ॥ ६ ॥ भववनगते सारङ्गगहनपटुके कामगुणकूटे। हृदय! गतमात्मानं किं न कार्षीयेत् तव सुखगर्भः ॥ ७ ॥

भवपभवे जइ दुक्खे तुज्झ पउसो सुहे य मणवंछा। ता तह कुण जह न सिया तं तं च भवे जह अणंतं ॥८॥ मित्तामित्तेसु समा चित्तपवित्ती जया य तुह होही। लहिहिसि तं तइय चिय सुहमवगयसयलसंतावं ॥ ९ ॥ नरयतिदिवेरिमित्ते भवमुक्खे दुहसुहे तणमणीसु। जइ लेट्ठुकंचणेसु य सममसि ता मण कयत्थमसि ॥ १० ॥ दुव्वारमिमं मच्चुं पच्चासन्नीभवन्तमणुसमयं। हे हियय? चिंतसु तुमं किं सेसवियप्पजालेण ॥ ११ ॥ हे हियय? चिन्तसि तुमं नाणज्जणज्जराए जज्जरिज्जंतिं। नियतणुकुडिं पि एयं अहह महामोहमहिमा ते ॥ १२ ॥ जत्थ जरमरणदारिद्दारोगसोगाइदुहगणो लोए। तत्थ वि कहं तुमं मूढहियय न विरागमुव्वहसि ॥ १३ ॥ जीयं पि तणुम्मि गयागयाइ सासच्छलेण कुणमाणं। किं न मण मुणसि जेणं चिट्ठसि अजरामरं व तुमं ॥ १४॥

---

भवप्रभवे यदि दुःखे तव प्रद्वेषः सुखे च मनोवांछा। तदा तथा कुरु यथा न स्यात् तत्तच्च भवे यथा अनन्तम् ॥ ८ ॥ मित्रामित्रेषु समा चित्तप्रवृत्तिर्यदा च तव भविष्यति। लप्स्यसे त्वं तदैव सुखमपगतसकलसंतापम् ॥ ९ ॥ नरकत्रिदिवपोररिमित्रयोर्भवमोक्षयोर्दुःखसुखतृणमणिपु। यदि लोष्टकाञ्चनेपु च सममसि तदा मनः कृतार्थोऽसि ॥ १० ॥ दुर्वारमिमं मृत्युं प्रत्यासन्नीभवन्तमनुसमयम्। हे हृदय? चिन्तसि त्वं किं शेपविकल्पजालेन ॥ ११ ॥ हे हृदय! चिन्तसि त्वं नानार्यजरया जर्जरीयमानाम्। निजतनुकुटीमप्येतामहह महामोहमहिमा तव ॥ १२ ॥ यत्र जरामरणदारिद्र्यरोगशोकादिदुःखगणो लोके। तत्रापि कथं त्वं मूढहृदय! न विरागमुद्वहसि ॥ ॥ १३ ॥ जीवमपि तनौ गतागतादिकं श्वासच्छलेन कुर्वन्तम्। किं न मनो जानासि येन तिष्ठस्यजरामरमिव त्वम् ॥ १४ ॥

सह रागेण मण तुमं सुहाभिमाणाउ भमडियं सुइरं । चय तं भय तदुवसमं इयाणिं जं मुणसि सुहभेयं ॥ ॥ १५ ॥ अविवेयत्ता बालतणम्मि वियलत्तणाउ वुड्ढत्ते । मण धम्मचित्तविरहे बहूवि विहलो नरभवो ते ॥१६॥ मयरद्धएक्कमित्तं कुगइ महादुक्खसंततिनिमित्तं । विसयाणुगामिचिन्तं मोहुप्पत्तीए हेउं च ॥ १७ ॥ अविवेय विडविकंदं चन्दणरुक्खोव्वदप्पसप्पस्स । नीरंधमेहपडलं सन्नाणमयंकबिंबस्स ॥ १८ ॥ तारुण्णं पि हि तुह मण उम्माय परस्स निच्चकालंपि । सव्वाणत्थकए च्चिय न धम्मगुणसाहगं पायं ॥ १९ ॥ एयं कयं इमं पुण करेमि काहं इमं च गिहकिच्चं । इय आउलस्स तुह हियय वासरा जंति अकयत्था ॥ २० ॥ वीवाहिया न दुहिता न पाढिओ वाढमेस वालो वि । तं तं च किंचि वि महं अज्जवि कज्जं न सिद्धं ति ॥ २१ ॥

---

सह रागेण मनस्त्वं सुखाभिमानाद् भ्रांतं सुचिरम् । त्यज तं भज तदुपशममिदानीं यज्जानासि सुखभेयम् ॥ १५ ॥ अविवेकत्वाद्-बालत्वे विकलत्वात्तु वृद्धत्वे । मनो? धर्म्मचित्तविरहे बह्वपि विफलो नरभवस्तव ॥ १६ ॥ मकरध्वजैकमित्तं कुगतिमहादुःखसन्ततिनि-मित्ताम् । विषयानुगामिचिन्तां मोहोत्पत्त्या हेतुं च ॥ १७ ॥ अविवेकविटपिकन्दं चन्दनवृक्ष इव दर्पसर्प्पस्य । नीरन्ध्रामेघपटलं सद्ज्ञा-नमृगाङ्कविम्बस्य ॥ १८ ॥ तारुण्यमपि तव मन? उन्मादपरस्य नित्यकालमपि । सर्वानर्थकृत एव न धर्म्मगुणसाधकं प्रायः ॥ १९ ॥ एतत्कृतमिदं पुनः करोमि करिष्यामीदं च गृहकृत्यम् । इत्याकुलस्य तव हृदय? वासरा यान्त्यकृतार्थाः ॥ २० ॥ विवाहिता न दुहिता न पाठितो बाढमेष बालोऽपि । तत्तच्च किंचिदपि ममाद्यापि कार्यं न सिद्धमिति ॥ २१ ॥

अज्जं इमं काहमहं इमं च कल्लम्मि किर करिस्सामि । एयं च तम्मि दियहे पक्खे वा अहव मासंते ॥ २२ ॥ वरिसंते वा एयं काहं इच्चाइनिच्चचिन्ताहि । हे खिज्जमाणमाणस कत्तो तुह निव्वुइलवो वि ॥ २३ ॥ किं च । एयं करेमि इन्हि एयं काऊण पुण इमं कल्लो । काहं को मण चिन्तति सुमिणयतुल्लम्मि जियलोगे ॥ २४ ॥ कत्थ गयं होसि गयं मण काउं किंच होहिसि कयत्थं। थिरयाए गच्छ कुणसु य न गयस्संतो न य कयस्स ॥२५॥ चिन्तासन्ताणपरं जइ चिट्ठसि निच्चकालं पि । अच्चन्तदुरुत्तारे तारे निवडसि तुह समुद्दे ॥ २६ ॥ हा हियय ? किं न चिन्तसि जमेस रिउरूवचरणछक्किल्लो । वित्थारिय पक्खदुग्गे तिलोयपउमस्स सारं व ॥२७॥ पिवमाणो वि पइदिणं अतित्तिमं चेव अखलियप्पसरो । सव्वजगजीवतुल्लो इह कीलति कालभमरुल्लो ॥ २८ ॥

---

अद्येदं करोम्यहमिदं च कल्ये किल करिष्यामि । एतच्च तस्मिन् दिवसे पक्षेवाथवा मासान्ते ॥ २२ ॥ वर्षान्ते वैतत्करिष्यामीत्यादिनित्यचिन्ताभिः । हा खिद्यमानमानस ? कुतस्तव निर्वृत्तिलवोऽपि ॥ २३ ॥ किंच । एतत्करोमीदानीमेतत् कृत्वा पुनरिदं कल्ये । करिष्यामि को मनश्चिन्तति स्वप्नतुल्ये जीवलोके ॥ २४ ॥ कुत्र गतो भवसि कृतं मनः ? कृत्वा किं च भविष्यसि कृतार्थः । स्थिरतायां गच्छ कुरु च न गतस्यान्तो न च कृतस्य ॥ २५ ॥ चिन्तासंतानपरं यदि तिष्ठसि चित्त ? नित्यकालमपि । अत्यन्तदुरुत्तारे तारे निपतसि त्वं समुद्रे ॥ २६ ॥ हा हृदय ? किं न चिन्तसि यदेष ऋतुरूपचरणपट्कः । विस्तारितपक्षयुगस्त्रिलोकपद्मस्य सारमिव ॥ २७ ॥ पिबन्नपि प्रतिदिनमतृप्तिमांश्चैवास्खलितप्रसारः । सर्वजगज्जीवतुल्य इह क्रीडति कालभ्रमरः ॥ २८ ॥

अधणे धणं धणे पुण कमेण निवचक्किसक्कपयवीउं। मण मणसि तुमं लहसि य जइवि तहावि हु न ते तित्ती ॥ २९ ॥ पविसंतो सल्लं पिव पयईए पइदिणं पि पीडकरा। जे कामकोहपमुहा अब्भिन्तरसत्तुणो तुज्झ ॥३०॥ निच्चं देहगय च्चियं चित्त तदुत्थायणे न वंछा वि। वज्झारिसु पुण धावसि अहो महामोहमाहप्पं ॥ ३१ ॥ वज्झारिसु मित्तत्तं करेसि सत्तूत्तमन्तरारीसु। जइ ता हे हियय? तुमं अइरा साहसि सकज्जं पि ॥ ३२ ॥ सुहमहुरकडुविवागेसु हियय विसएसु कुणसु मा गिद्धिं। विहिवसविवज्जमाणा सुतिक्खदुक्खाइं से देन्ति ॥३३॥ जइ पढमं पि न रज्जसि सुहमहुरवसाणविरसविसएसु। ता हियय तुमं पच्छावि लहसि न कयावि संतावं ॥३४॥ विसएहिं विणा न सुहं विसयावि हवंति बहुकिलेसेहिं। ता तव्विमुहं चिन्तसु सुहंतरं किं पि हे हियय? ॥३५॥

---

अधने धनं धने पुनः क्रमेण नृपचक्रिशक्रपदवीः। मनो? ममसि त्वं लभसे च यद्यपि तथापि हि न ते तृप्तिः ॥ २९ ॥ प्रविशच्छल्यमिव प्रकृत्या प्रतिदिनमपि पीडाकराः। ये कामक्रोधप्रमुखा अभ्यन्तरशत्रवस्तव ॥ ३० ॥ नित्यं देहगता एव चित्त? तदुत्थापने न वांछापि। बाह्यारिपु पुनर्धावस्यहो महामोहमाहात्म्यम् ॥ ३१ ॥ बाह्यारिषु मित्रत्वं करोषि शत्रुत्वमन्तरारिषु। यदि तदा हे हृदय? त्वमचिरात् साधयसि स्वकार्यमपि ॥ ३२ ॥ सुखमधुरकटुविपाकेषु हृदय? विषयेषु कुरु मा गृध्याम्। विधिवशविव्रजन्तः सुतीक्ष्णदुःखानि तस्य ददति ॥ ३३ ॥ यदि प्रथममपि न रज्जसि सुखमधुरावसानविरसविषयेषु। तदा हृदय? त्वं पश्चादपि लभसे न कदावि संतापम् ॥ ३४ ॥ विषयैर्विना न सुखं विषया अपि भवन्ति बहुक्लेशैः। तस्मात्तद्विमुखं चिन्तय सुखान्तरं किमपि हे हृदय? ॥ ३५ ॥

जह आवायं विसयाण पेच्छसे जइ तहा विवागंपि । ता चित्त पत्तिय तुमं न कयाइ विडंवणं लहसि ॥ ३६ ॥ विसतुल्लविसयवंछाए कीस हे हियय वहसि संतावं । ता किंपि चिन्तसु तुमं होइ जओ निव्वुईपरमा ॥ ३७ ॥ तह विसयासाछिद्देण नाणजणिया गुणा गलिसंति । ता चयसु तं तुमं मूढहियय ? तेसिं थिरत्तकए ॥ ३८ ॥ विसयासावाओलीजणियरओ गुंडियं कहं न हियय । सह जायकरणवग्गस्स लज्जसे भमिरमणिबद्धं ॥ ३९ ॥ कामसरजज्जरे रे तुमंमि मण कुंभ कम्ममलहरणं । भवसंतावक्खयकरं न ठाइ सव्वन्नुवयणजलं ॥ ४० ॥ अह तं पि ठियं कहमवि किं नो पसमइ कसायदाहो । तए सो किंच न भिज्जइ जो तुह अविवेयमलगंठी ॥ ४१ ॥ अणवरयगरुयदुक्खोहमन्दरुद्दाममंथमहियस्स । तहवि तुह हिययसायर विवेयरयणं न उच्छलियं ॥ ४२ ॥

---

यथापातं विपयाणां पश्यसि जगति तथा विपाकमपि । तदा चित्त ? प्रतीत्य त्वं न कदाचिद् विडम्बनां लभसे ॥ ३६ ॥ विषतुल्य-विपयवांछया कस्माद् हे हृदय ? वहसे संतापम् । तस्मात् किमपि चिन्तय तव भवति यतो निर्वृत्तिः परमा ॥ ३७ ॥ तथा विषया-शाच्छिद्रेण ज्ञानजनिता गुणा गलिष्यन्ति । तस्मात् त्यज तं त्वं मूढहृदय ? तेषां स्थिरत्वकृते ॥ ३८ ॥ विषयाशाव्याकुलिर्जनितरतो गुंडियं कथं न हृदय ? । सह जातकरणवर्गस्य लज्जसे भ्रमरमणिवद्धम् ॥ ३९ ॥ कामशरजर्ज्जरे रे त्वयि मनःकुम्भ ? कर्मसलहरणम् । भवसंतापक्षयकरं न तिष्ठति सर्वज्ञवचनजलम् ॥ ४० ॥ अथ तस्मिन् तिष्ठति कथमपि किं न प्रशम्यते कपायदाहः । त्वया यः किं वा नश्यन्ते यस्तेऽविवेकमलग्रन्थिः ॥४१॥ अनवरतगुरुदुःखौघमन्दरोद्दाममन्थमथितस्य । तथापि तव हृदयसागर ? विवेकरत्नं नोच्छलितम् ॥ ४२ ॥

अविवेयपंककलुसस्स चित्त? नो ताव तुहमईकुसलो। जायइ न जाव विहिओ सुविवेयजलाभिसेयविही ॥ ४३ ॥ हे हियय? सुंदरा वि हु सद्दा रूवाणि रसविसेसा य। गंधा फासा य वरा तावच्चिय तरलयंति तुमं ॥ ४४ ॥ जाव न सम्मं अवगाहिय तए तत्तबोहरयणिल्लो। सुहसलिलपूरपुन्नो सुयनाणअगाहमयरहरो ॥४५॥ सद्दा निरुसुइ सुहयारूवाणि य चक्खुहरणचोराणि। रसणा सुहया य रसा गंधा घाणिन्दियाणंदा ॥ ४६ ॥ फासा फरिसणसुहया संगे दाउं पि सुहमह वियोगे। देन्ति दुहं तहणंतं चित्त अलं तुज्झ ता तेहिं ॥ ४७ ॥ अइ रम्मं हम्मयलं सरयससी पियजणेण संगो य। कुसुमाणि मलयजरसो दाहिणपवणो मइरा य ॥ ४८॥ एयाणि समुदिताणि वि चित्त सरागस्स होंति खोभाय। तुह विसयसंगविमुखस्स किं पुणेयाणि काहिंति ॥ ४९ ॥

---

अविवेकपङ्ककलुपस्य चित्त ? न तावत्त्वमतिकुशलः। जायते न यावद् विहितः सुविवेकजलाभिसेकविधिः ॥ ४३ ॥ हे हृदय ? सुन्दरा अपि हि शब्दा रूपाणि रसविशेषाश्च। गन्धाः स्पर्शाश्च वरास्तावदेव तरलयन्ति त्वाम् ॥ ४४ ॥ यावन्नसम्यगवगाहितस्त्वया तत्त्वबोधरत्नवान्। सुखसलिलपूरपूर्णः श्रुतज्ञानागाधमकरधरः ॥ ४५ ॥ शब्दा....श्रुतिसुखदारूपाणि च चक्षुहरणचोराणि। रसनासुखदा च रसा गन्धा घ्राणेन्द्रियानन्दाः ॥४६॥ स्पर्शाः स्पर्शनसुखदाः सङ्गे दत्त्वापि सुखमथ वियोगे। ददति दुःखं तथानन्तं चित्त? अलं ते तदा तैः ॥४७॥ अतिरम्यं हर्म्यतलं शारदशशिः प्रियजनेन सङ्गश्च। कुसुमानि मलयजरसो दक्षिणपवनो मदिरा च ॥४८॥ एतानि समुदितान्यपि चित्त ? सरागस्य भवन्ति क्षोभाय। तव विषयसंगविमुखस्य कि पुनरेतानि करिष्यन्ति ॥ ४९ ॥

किं वहुणा दाणेणं किं वा वहुणा तवेण तविएण । कट्ठाणुट्ठाणेण वि वज्झेण किमेत्थ बहुणा वि ॥ ५० ॥
किं च पढिएण बहुणा जइ ताव मण मुणासि अप्पणो पत्थं । भोगाइपयाओ विरमसु रमसु य विरागपए ॥५१॥
फणिणाहि विल समीवे वहुच्छिद्दं चारुचंदणदलेण । काउं गिहं तदन्तो य मालई कुसुमसयणिज्जे ॥ ५२ ॥
निद्दं जिगीससि तुमं जं सुहमेयंति कहु । हे हियय ? अभिलससि विसयसंगं नीरागत्तं विमोत्तूणं ॥ ५३ ॥
अणहं परिणामसुहं जइ ईसरियत्तमीहसे हे हियय । ता तुममप्पाणुगयं धरेसु सन्नाणवररयणं ॥५४॥ घोरं तमो
तुहंतो जा वियरइ ता तुमं निरालोयं । अह हियय जिणमयरविं धरेसि ता होसि सालोयं ॥ ५५ ॥ मोहम-
हातमसंकुलभवविसमगुहंतहाउ तुह हियय । न विणा नाणपईवं निग्गमुवायं परं मन्ने ॥ ५६ ॥

---

किं वहुना दानेन किं वा वहुना तपसा तप्तेन । कष्टानुष्ठानेनापि वाह्येन किमत्र बहुनापि ॥ ५० ॥ किं वा पठितेन बहुना यदि ताव-न्मनो ? जानास्यात्मनः पथ्यम् । भोगादिपदाद् विरमसि रमसे च विरागपदे ॥ ५१ ॥ फणिसर्प्पविलसमीपे बहुच्छिद्रं चारुचन्दनदलेन । कृत्वा गृहं तदन्तश्च मालतिकुसुमशयनीये ॥ ५२ ॥ निद्रां चिकीर्षसि त्वं यत् सुखमेतदिति कृत्वा । हे हृदय ? अभिलपसि विषयसङ्गं नीरागत्वं विमुच्य ॥ ५३ ॥ अनघं परिणामसुखं यद्यैश्वर्यत्वमीहसे हे हृदय ? । तदा त्वमात्मानुगतं धर सज्ज्ञानवररत्नम् ॥ ५४ ॥ घोर तमोनुदन् यावद्विचरति तावत् त्वं निरालोकः । अथ हृदय जिनमतरविं धरसि तदा भवसि सालोकः ॥ ५५ ॥ मोहमहातमः-संकुलभवविसमगुहान्तरात् तव हृदय ? । न विना ज्ञानप्रदीपं निर्गमोपायं परं मन्ये ॥ ५६ ॥

दव्वाइसु पडिबंधं मोत्तुं चित्ताणुसरसु संवेगं। जेण मूलाओ तुहं तुट्टइ एसो भवपबंधो ॥५७॥ हियय? सकिलेसविहवेहिं सुहकए कामिएहिं किं मूढ। अप्पाणं संतोसे निवेसिउं होसु तं सुहियं ॥ ५८॥ जणयंति किलेसं अज्जणम्मि मोहं समज्जिआओ पुणो। तावं परं च नासे पयईए चिय विभूईओ ॥ ५९॥ ता तासु कुगइगमवत्तिणीसु रायग्गिचोरसज्झासु। हे चित्त? तत्तचिन्तणपुरस्सरं चयसु पडिबन्धं ॥ ६०॥ अट्ठियथूणाधरिए पए पए ण्हाणुबन्धणनिबंधे। तयमंसवसाछन्नम्मि इंदियारक्खगुत्तम्मि ॥ ६१॥ अंतोसकम्मनिगडावबद्धजीवे य गुत्तिगेहे व। दुक्खाणुभवणजणे मण कुण काए वि मा मोहं ॥ ६२॥ सचित्तपमुहदव्वाइ विसयपडिबन्धनिविडतंतूहिं। अप्पाणमप्पणो चेव चित्त निच्चंपि हु समंता ॥ ६३॥

---

द्रव्यादिषु प्रतिबन्धं मुक्त्वा चित्तानुसर संवेगम्। येनामूलात् ते तुट्टत एष भवप्रबन्धः ॥ ५७॥ हृदय? सक्लेशविभवैः सुखकृतैः कामितैः किं मूढ?। आत्मानं संतोषे निवेश्य भवसि त्वं सुखिकम् ॥ ५८॥ जनयन्ति क्लेशमर्जने मोहं समार्जिताः पुनः। तापं परं च नाशे प्रकृत्यैव विभूतयः ॥ ५९॥ तस्मात्तासु कुगतिगमवर्तिनीषु राजाग्निचोरसाध्यासु। हे चित्त? तत्त्वचिन्तनपुरस्सरं त्यज प्रतिबन्धम् ॥ ६०॥ अस्थिस्थूणाधृते पदे पदे स्नायुबन्धननिबद्धे। त्वचामांसवसाच्छन्न इन्द्रियारक्षगुप्ते ॥ ६१॥ अन्तःस्वकर्मनिगडावबद्धजीवे य गुप्तिगेह इव। दुःखानुभवनजने मनः? कुरु कार्येऽपि मा मोहम् ॥ ६२॥ सचित्तप्रमुखद्रव्यादि विषयप्रतिबन्धनिविडतन्तुभिः। आत्मानमात्मनश्चैव चित्त! नित्यमपि हि समन्तात् ॥ ६३॥

गाढं परिवेढंतस्स तुह कहं कोसियारकिमिणोव । मोक्खो पुणो वि होही हे मूढ इमं पि चिन्तेसु ॥ ६४ ॥ इंदियगज्झं जं किञ्चि कत्थई एत्थ अत्थि वत्थु न तं । थिरमह तत्थावि जइ रमसि मण तुमं चेव ता मूढं ॥६५॥ एक्कं निययाणुभवा वीयं पुण जिणवरिंदवयणाओ । करिकलहकन्नपाली तरलतरत्तं खु पयईए ॥ ६६ ॥ संसार-समुत्थवत्थुसत्थस्स मण मुणित्ताणं । मा पडिबन्धं बंधसु खणमेत्तंपि हु तुमं तत्थ ॥ ६७ ॥ किंच । निस्सारे संसारे सारं सारंगलोचणा चेव । इय कुब्भममइरामत्तचित्त तुह निव्वुई कत्तो ॥ ६८ ॥ एत्थ परत्थ व जम्मे जंतूणं जाणि तिक्खदुक्खाणि । ताण न निमित्तमन्नं मोत्तूणं मण मयच्छीओ ॥ ६९ ॥ मुहमहुरत्तं पज्जंतदा-रुणत्तं च पेच्छिऊण विही । पलियच्छलेण मन्ने जुवईणं सिरे खिवइ छारं ॥ ७० ॥

---

गाढं परिवेष्टयतस्तव कथं कोपीकारकृमिण इव । मोक्षः पुनरपि भविष्यति हे मूढ ! इदमपि चिन्तय ॥ ६४ ॥ इन्द्रियग्राह्यं यत् किंचित्कथ्यतेऽत्रास्ति वस्तु न तद् । स्थिरमथ तत्रापि यदि रमसे मनस्त्वं चैव तदा मूढः ॥ ६५ ॥ एकं निजानुभवाद् द्वितीयं पुनर्जिनवरेन्द्रवचनात् । करिकलभकर्णपालीतरलतरत्वं खलु प्रकृत्या ॥ ६६ ॥ संसारसमुत्थवस्तुसार्थस्य मन? ज्ञात्वा । मा प्रतिबन्धं बन्धय क्षणमात्रमपि हि त्वं तत्र ॥ ६७ ॥ किंच, निःसारे संसारे सारंग सारंगलोचनाश्चैव । इति कुभ्रममदिरामत्तचित्त? तव निर्वृतिः कुतः ॥ ६८ ॥ अत्र परत्र च जन्मनि जन्तूनां यानि तीक्ष्णदुःखानि । तेषां न निमित्तमन्यं मुक्त्वा मनो? मृगाक्षीः ॥ ६९ ॥ मुखमधुरत्वं पर्यन्तदारुणत्वं च दृष्ट्वा विधिः । पलितच्छलेन मन्ये युवतीनां शिरसि क्षिपति क्षारम् ॥ ७० ॥

तहा पप्फुल्लाणि वि सुविसालनेत्तपत्तोवसोहियाणी वि । लायण्णजलद्दाणि वि अलयालिकुलाउलाणी वि ॥ ७१ ॥ पसरंतपरिमलाणि वि असरिसरूवसिरिपरिगयाइं पि । मयपरवस लीलालसविलासिणी वयणकमलाणि ॥ ७२ ॥ आवायमेत्तसुहदायगाणि होऊण किंपि ताइं पि । हे मणमहुयर बंधाय तुज्झ होहिन्ति पज्जंते ॥ ७३ ॥ वसंफेफसहदुकरं कण्हारुजं वालपूइपमुहाण । बीभच्छकुदव्वाण वि रासी जं जुवईजणदेहं ॥ ७४ ॥ रत्तुप्पलरंभाखम्भ जच्चकंचणं सिलासुकलसेहिं । कंकेल्लिपल्लवलयाससिविद्दुममकुंदकलिवाहिं ॥ ७५ ॥ कुवलयदलट्ठमीचंदसिहिकलावेहिं । उवमई बुहो वि तं चित्त तुह ताव विफुरंतरागस्स माहप्पं ॥ ७६ ॥ कलमलगमंससोणियपुरीसकं कालकलुसकोट्ठासु । दीसंतसुंदरासु वित्ता मण मा रच्च रमणीसु ॥ ७७ ॥

---

तथा प्रफुल्लान्यपि सुविशालनेत्रपत्रोपशोमितान्यपि । लावण्यजलार्द्राण्यपालकालिकुलाकुलान्यपि ॥ ७१ ॥ प्रसरत्परिमलान्यप्यसदृशरूपश्रीपरिगतान्यपि । मदपरवशलीलालसविलासीनि वदनकमलानि ॥७२॥ आपातमात्रसुखदायकानि भूत्वा किमपि तान्यपि । हे मनोमधुकर? बन्धाय ते भविष्यन्ति पर्य्यन्ते॥ ७३ ॥ वसाफेफसदुःकरं कस्नायुजम्बालपूतिप्रमुखानाम्। विभत्स्यं कुद्रव्याणामपि राशि यद् युवतिजनदेहम् ॥ ७४ ॥ रक्तोत्पलरम्भास्तम्भजात्यकाञ्चनशिलासुकलशैः । कंकेल्लिपल्लवलताशशिविद्रुमकुन्दकलिकाभिः ॥ ७५ ॥ कुवलयदलाष्टमीचन्द्रशिखिकलापैरुपमिनोति बुधोऽपि । तच्चित्त? तव तावद्विस्फुरद्रागस्य माहात्म्यम् ॥ ७६ ॥ कलमलकमांसशोणितपुरीषकं कालकलषकोष्ठासु । दर्शनसुन्दरासु विदित्वा मनो? मा रमस्व रमणीषु ॥ ७७ ॥

सद्दाइसमुदयदहे विलसन्तं झत्ति पक्खिवित्ताणं। जुवइजणनिविडबडिसं मयरद्धयधीवरेण तुमं ॥ ७८ ॥ तस्संगामिसरसियं वेगादागरिसिऊण मणमीण। तिव्वाणुरागअग्गीए मूढ तावित्तसि समन्ता ॥ ७९ ॥ थेवं पि न वियारं कुणन्ति रमणीण हसियललियाइं। जिणवयणममयभूयं जइ मण तुह परिणमइ सम्मं ॥ ८० ॥ जीए विओगग्गिपलाविओ तुमं मण मुहुत्तमेत्तंपि। वरिससयसमइरित्तं परिमन्नसि समयमेत्तंपि ॥ ८१ ॥ सह तीए विप्पओगो स को वि तुह होहिई न जेण पुणो। जायइ संजोगासावि सागरोवमसएहिं पि ॥ ८२ ॥ अच्चंतं संवासो लब्भइ न सए वि चित्त देहम्मि। नियजीवेणावि सया किं पुण अन्नेण केणावि ॥ ८३ ॥ जोगा य वियोगा य वि जीवाण धुवं जयम्मि जायाए। मण वुबुयव्व सलिले भवन्ति न भवन्ति य खणेण ॥ ८४ ॥

---

शब्दादिसमुदकह्रदे विलसन्तं झटिति प्रक्षिप्य। युवतिजननिविडबडिशं मकरध्वजधीवरेण त्वाम् ॥ ७८ ॥ तत्सङ्गामिषरसितं वेगादाकृष्य मनोमीन? । तीव्रानुरागाग्निना मूढ? तप्यसे समन्तात् ॥ ७९ ॥ स्तोकमपि न विकारं कुर्वन्ति रमणीनां हसितललितानि। जिनवचनममृतभूतं यदि मनस्तव परिणति सम्यक् ॥ ८० ॥ यस्या वियोगाग्निपलावितस्त्वं मनो? मुहूर्त्तमात्रमपि। वर्षशतसमगतं परिमन्यसे समयमात्रम् ॥ ८१ ॥ सह तया विप्रयोगः स कोऽपि भविष्यति न येन पुनः। जायते संयोगाशापि सागरोपमशतैरपि ॥ ८२ ॥ अत्यन्तं संवासो लभ्यते न स्वस्मिन्नपि चित्त? देहे। निजजीवेनापि सदा किं पुनरन्येन केनापि ॥ ८३ ॥ योगाश्च वियोगाश्चापि जीवानां ध्रुवं जगति जायन्ते। मनो? बुद्बुदा इव सलिले भवन्ति न भवन्ति च क्षणेन ॥ ८४ ॥

जं पयइचला पाणा चिट्ठंति खणं पि तं मणच्छेरं । न हु होइ खणाउवरं विज्जुलयाए समुज्जोओ ॥ ८५ ॥ इट्ठेहिं विप्पओगो जम्मसहस्साइं संगमो य खणं । तह वि तुमं हे हयहियय महसि पिय संगमं चेव ॥ ८६ ॥ आवायमेत्तरमणीयगाण पियसंगमाण हे हियय । भुत्ताणमपच्छाण च परिणामो दारुणो चेव ॥ ८७॥ संतोसतप्परस्स तवेरयस्स सव्वत्थ निरभिलासस्स । चिट्ठउ ता इह धम्मो दूरीकयदुग्गईमग्गो ॥ ८८॥ एत्तियमेत्तेणं वि य हे माणस तुज्झ किं न पज्जन्तं । तंमसि तोसकए जं न चक्किसक्कतणाणं पि ॥ ८९ ॥ तह अत्थज्जणरक्खणवयणकयं वेयणं न पावेसि । मण परमनिव्वुई ते भवे वि संतोसओ होही ॥ ९० ॥ संतोसामयरससिच्चमाणमाणस सुहं सया जं ते । तमसंतुट्ठे कत्तो इओ तओ चिन्तणासत्ते ॥ ९१ ॥

---

यत् प्रकृतिचलाः प्राणास्तिष्ठन्ति क्षणमपि तन्मन? आश्चर्यम् । नहि भवति क्षणादुपरि विद्युल्लतायाः समुद्योतः ॥ ८५ ॥ इष्टैर्विप्रयोगो जन्मसहस्राणि संगमश्च क्षणम् । तथापि त्वं हे हतहृदय? कांक्षति प्रियसंगमं चैव ॥ ८६ ॥ आपात्रमात्ररमणीयानां प्रियसंगमानां हे हृदय? । भुक्तानामपथ्यानामि च परिणामो दारुणश्चैव ॥ ८७ ॥ संतोषतत्परस्य तपसिरतस्य सर्वत्र निरभिलाषस्य । तिष्ठति तावदिह धर्मो दूरीकृतदुर्गतिमार्ग्गः ॥ ८८ ॥ एतावन्मात्रेणापि च हे मानस? त्वया किं न पर्य्याप्तम् । त्वमसि तोषकृते यन् न चक्रिशक्रतानामपि ॥ ८९ ॥ तथार्थोर्ज्जनरक्षणस्थापनकृतं वेदनां न प्राप्नोषि । मन? परमनिर्वृतिस्ते भवेऽपि संतोषतो भविष्यति ॥ ९० ॥ संतोषामृतरससिच्यमानमानसः? सुखं सदा यस्ते । तदसंतुष्टे कुत इतस्ततश्चिन्तनासक्ते ॥ ९१ ॥

तमुदारत्तं तं विय गुरुत्तणं तह तमेव सोहग्गं। सा कित्ती तं च सुहं संतोसपरं तुमं मण जं ॥ ९२॥ सवाउ संपया तो संतोसपरे तुमम्मि हे चित्त। चक्कित्तसुरत्तेसु वि इहरा दारिद्दमेव सया ॥ ९३ ॥ दीणत्तमेसि अत्थी लद्धत्थं गव्वमपरितोसं च। नट्ठधणं पुण सोगं सुहेण चिट्ठसि मण निरासं ॥ ९४ ॥ अन्तोसारो नीसरति नूणमत्थित्तणेण सममेव। अन्नह तद्वत्थस्स वि कह मण हलुयत्तमत्थिस्स ॥ ९५ ॥ जं किर मयस्स भारो तंपि फुडं जाणियं जह जियन्तो। अत्थित्ताउहलुओ हुंतो तं पुण मए नत्थि ॥ ९६ ॥ उव्वियसि दुहेहिन्तो निच्चं पि समीहसे पुण सुहाइं। न य पुण कुणसि तुमं तं समीहियं लहसि मण जेण ॥ ९७ ॥ जं विहियं हियय पुरा तुमए चिय तमहुणा तुह उवेइ। मा कुण हरिसविसायं सह सम्मं परिणतिं काउं ॥ ९८ ॥

---

तदुदारत्वं तदेव गुरुत्वं तथा तदेव सौभाग्यम्। सा कीर्त्तिस्तच्च सुखं संतोषपरं त्वं मनो? यत् ॥ ९२ ॥ सर्वाः संपदास्तस्मात्संतोषपरे त्वयि हे चित्त? चक्रित्वसुरत्वयोरपीतरथा दारिद्रमेव सदा ॥ ९३ ॥ दीनत्वमेस्यर्थी लब्धार्थो गर्वमपरितोषं च। नष्टधनं पुनः शोकं सुखेन तिष्ठसि मनो निराशम् ॥ ९४ ॥ अंतःसारोनिःसरति नूनमर्थित्वेन सममेव। अन्यथा तदवस्थस्यापि कथं मनो लघुत्वमर्थिनः ॥ ९५ ॥ यद् किल मदस्य भारस्तदपि स्फुटं ज्ञात्वा यथाजितम्। अर्थित्वायुधलघुनो भवन् तत्पुनर्मदे नास्ति ॥ ९६ ॥ उद्विजते दुःखेभ्यो नित्यमपि समीहसे पुनः सुखानि। न च पुनः करोपि त्वं तत्समीहितं लभसे मनो? येन ॥ ९७ ॥ यद्विहितं हृदय? पुरा त्वयैव तदधुना त्वामुपैति। मा कुरु हर्षविपादं सहस्व सम्यक्परिणतिं कृत्वा ॥ ९८ ॥

किंच। संजोगा सविओगा विसं व विसया वि परिणई विरसा। काओ य बहु अवाओ रूवं खणभंगुरस-
रूवं ॥९९॥ एवं परोवएसं देन्तस्स जहा महं फुरइ वयणे। तह जइ चित्त? तुमम्मि वि ता किं न पज्जन्तं ॥१९००॥
जं पुण पावरूवं वट्टइ तुम्ह हियय निविडनिगडदुगं। सज्झाणकुंचियाए विहाडिउं लहसु तं मुत्तिं ॥ १ ॥
मायण्हियाउ तण्हा विगमकए पिबसि चित्त भुलुएहिं। सारगवेसणहेउं तयमुवेढेसि कयलीए ॥ २ ॥ नवणीय-
कए सलिलं विरोलसे वालुयं च तेल्लकए। पीलसि तुमं जमीहसि संसारे वि हु सुहाणुभवं ॥ ३ ॥ किं पि हु
निप्पज्जन्तं किं पि हु निप्फन्नमिह परं मुक्कं। अंकम्मि कीरमाणं परं च विहडइ जहा भंडं ॥ ४ ॥ तह गब्भाइ
अवत्थं विविहं पावित्तु पाणिणो णेगे। विहडंते सुणिउं चिन्त चिन्तसु किं पि सुहचिन्तं ॥ ५ ॥

---

किंच संयोगाः सवियोगा विषमिव विषया अपि परिणतिविरसाः। कायश्च बह्वपायो रूपं क्षणभंगुरस्वरूपम् ॥ ९९ ॥ एवं परोपदेशं ददतो यथा मम स्फुरति वचनम्। तथा यदि चित्त? त्वय्यप्येवं तदा किं न पर्याप्तम् ॥ १९०० ॥ यत्पुण्यपापरूपं वर्त्तते तव हृदयनिविडनिगडद्वयम्। सद्ध्यानकूर्चिकया विघट्य लभसे तं मुक्तिम् ॥ १ ॥ मृगतृष्णिकास्तृष्णाविगमकृते पिबसि चित्त? भ्रान्तिभिः। सारगवेषणकृते वेष्टयसि त्वकं कदल्याः ॥ २ ॥ नवनीतकृते सलिलं विलोडसे वालुकां च तैलकृते। पीलसे त्वं यदिच्छसि संसारेऽपि हि सुखानुभवम् ॥ ३ ॥ किमप्यनिष्पन्नं किमपि निष्पन्नमिहापरं मुख्यम्। अंके क्रीडमानं परं च विघटते यथा भाण्डम् ॥ ४ ॥ तथा गर्भाद्यवस्थां विविधां प्राप्य प्राणिनोऽनेकान्। विघटमानान् श्रुत्वा चित्त? चिन्तय किमपि शुभचिन्ताम् ॥ ५ ॥

एक्कं पि तुमं बहु वत्थुचिन्तणा चित्त पावसि बहुत्तं। तहभूयं पुण एत्तिय कस्स न दुक्खस्स होसि पयं ॥६॥ सयलन्नवत्थुचिन्तं चइत्तुं ता चित्त चिन्तसु परं तं। एक्कंपि किंपि वत्थुं जेण परं नेव्वुइं लहसि॥ ७॥ सज्झाण-बलेण कम्मसूलभवकाणणम्मि भग्गम्मि। मत्तमहाकरिणा इव तुमए हे चित्त लहुमज्झ॥ ८॥ रागाइएहिं परिमलाणमेव पच्चग्गपल्लवेहिं व। कम्मेहिं पक्खीहि व उड्डेऊणं कहिं पि गयं ॥ ९ ॥ जम्मजरामरणेहिं पुप्फेहिं व सव्वहा पणट्टं च। दुक्खेहिं तु फलेहिं व खीणं जह होति तह कुणसु ॥ १० ॥ कम्मंजलसंगवड्ढंतगुविलभव-वल्लरिं दुम्मकलिल्लं। झाणग्गिणा मण तुमं जइ डहसि न रोहइ तओ सा ॥ ११॥ लच्छीए जइ न मच्चसि नया वि रागाइयाणवसमेसि। रमणीहिं न हीरिज्जसि तरलिज्जसि जइ न विसएहिं॥ १२॥

---

एकमपि त्वं बहुवस्तुचिन्तनात् चित्त प्राप्नोसि बहुत्वम्। तथाभूतं पुनः एतत् कस्य न दुःखस्य भवसि पदम्॥ ६॥ सकलान्यवस्तुचिन्तां त्यक्त्वा तस्माच्चित्त? चिन्तय परं तत्। एकमपि किमपि वस्तु येन परां निर्वृतिं लभसे ॥ ७॥ तद्ध्यानबलेन कर्ममूलभवकानने भग्ने। मत्तमहाकरिणेव त्वया हे चित्त? लघुमद्य॥ ८॥ रागादिकैः प्रम्लानमेव प्रत्यग्रपल्लवैरिव। कर्मभिः पक्षिभिरिवोड्डीय कुत्रापि गतम्॥ ९॥ जन्मजरामरणैः पुष्पैरिव सर्वथा प्रणष्टमिव। दुःखैस्तु फलैरिव क्षीणं यथा भवति तथा कुरु ॥ १०॥ कर्म्मजलसङ्गवर्धमानगुपिलभव-वल्लरीं द्रुमकलिलाम्। ध्यानाग्निना मनस्त्वं यदि दहसि न रोहति ततः सा॥ ११॥ लक्ष्म्या यदि न माद्यसे न चापि रागादिकानां वशमेषि। रमणीभिर्न ह्रियसे तरलीयसे यदि न विषयैः॥ १२॥

संतोसेण न मुच्चसि आलिंगिज्जसि य जइ न इच्छाए । पावं च जइ न चिन्तसि तुह चेव नमोत्थु ता चित्त ? ॥१३॥ तहा जइ ताव तुमं माणस संगं अभिसंगचागओ जिणसि । दोसं अपीइपरिहारओ य मोहं तु सन्नाणा ॥ १४ ॥ कोहं खमाए सम्मं मिउभावानयणओ य पुण माणं । सरलत्तणेण मायां संतोसगुणेण लोहं तु ॥ १५ ॥ संतोसवसं नयसि य इंदियग्गामं बलावि जइ निच्चं । जइ जीवाणं कप्पसि य अप्पयंपियकए चेव ॥ १६ ॥ अस्संजमम्मि अरइं रइं च पुण संयमम्मि जइ कुणसि । जइ भयसि भवभयं चिय पावं वि य जइ दुगुंछिहसि ॥ १७ ॥ जइ वत्थुसरूवालोयणाउ न करेसि हरिससोगाइं । तह वयणनिसिरणे जइ सच्चं चिन्तसे निच्चं ॥१८॥ जइ जिणवरेसु भत्ति निच्चं तप्पवयणे पुण पसत्तिं । सम्मं जह सत्तीए धम्मगुणेसुं च आसत्तिं ॥ १९ ॥

---

संतोपेण न मुच्यसे आलिंग्यसे च यदि नेच्छया । पापं च यदि न चिन्तासि तुभ्यं चैव नमोऽस्तु तदा चित्त ? ॥ १३ ॥ तथा यदि तावत् त्वं मानसः ? सङ्गमभिष्वङ्गत्यागतो जयसि । द्वेषमप्रीतिपरिहाराच्च मोहं तु सज्ज्ञानात् ॥ १४ ॥ क्रोधं क्षमया सम्यक् मृदुभावानयनाच्च पुनर्मानम् । सरलत्वेन मायां संतोषगुणेन लोभं तु ॥१५॥ संतोषवशं नयसे चेन्द्रियग्रामं बलादपि यदि नित्यम् । यदि जीवानां कल्पसे चात्मानं प्रियकृते चैव ॥ १६ ॥ असंयमेऽरतिं रतिं च पुनः संयमे यदि करोषि । यदि भजसि भवभयमेव पापमपि च यदि जुगुप्ससि ॥ १७ ॥ यदि वस्तु स्वरूपालोकनान्न करोपि हर्षशोकादिम् । तथा वचननिःसारणे यदि सत्यं चिन्तसि नित्यम् ॥ १८ ॥ यदि जिनवरेपु भक्तिं नित्यं तत्प्रवचने पुनः प्रसक्तिम् । सम्यग् यथाशक्ति धर्मगुणेषु चासक्तिम् ॥ १९ ॥

कालाणुरूवसुंदरकिरियापरपरमसाहुबहुमाणं । दीणदुहिएसु करुणं पावपरेसु पुण उवेहं ॥२०॥ जइ कुणसि ता परेणं किं किरियावित्थरेण विहलेणं । तुज्झ पसाएण ममं मुत्ती करपल्लवल्लीणा ॥ २१ ॥ मइलिज्जइ निस्ससेहिं दप्पणो लहु जहा सुविमलो वि । धूमेण जलणसिहा कलुसिज्जइ जह सुबहुलेण ॥ २२ ॥ विज्झाइज्जइ जह ससहरो वि पसरंतरेणुपडलेण । तह मण? कुवासणाए मलिनिज्जसि धवलमपि तं पि ॥ २३ ॥ जं नियमिय अप्पाणं न रागदोसाइनिग्गहो विहिओ । न य सुहज्झाणग्गीए दड्ढो कम्मेंधणपबन्धो ॥ २४ ॥ विसएहिंतो खंचिय धरिउ सा रे न इंदियग्गामो । तं किं न तुज्झ हे चित्त मुत्तिसोक्खम्मि वंछा वि ॥ २५ ॥ सज्जिज्जन्ति न करिणो न पक्खरिज्जन्ति तुरयघट्टाइं । नायासिज्जइ अप्पा वावारिज्जइ न खग्गंपि ॥ २६ ॥

---

कालानुरूपसुन्दरक्रियापरपरमसाधुवहुमानम् । दीनदुःखितेषु करुणां पापपरेषु पुनरुपेक्षाम् ॥ २० ॥ यदि करोषि तदा परेण किं क्रियाविस्तरेण विफलेन । त्वत्प्रसादेन मे मुक्तिः करपल्लवलीना ॥ २१ ॥ मलिनीयते निःश्वासैर्दर्पणो लघु यथा सुविमलोऽपि । धूमेन ज्वलनशिखा कलुषीयते यथा सुवहुलेन ॥ २२ ॥ विच्छायते यथा शशधरोऽपि प्रसरद्रेणुपटलेन । तथा मनः? कुवासनया मलिनीयसे धवलमपि त्वमपि ॥ २३ ॥ यन्नियमितात्मनां न रागद्वेषादिनिग्रहो विहितः । न च शुभध्यानाग्निना दग्धः कर्म्मेन्धनप्रवन्धः ॥ २४ ॥ विषयेभ्य आकृष्य धारितः सा रे नेन्द्रियग्रामः । तत् किं न तव हे चित्त? मुक्तिसौख्ये वाञ्छापि ॥ २५ ॥ सज्यन्ते न करिणो न प्रक्षिप्यन्ते तुरगघटानि । नायास्यत आत्मा व्यापार्यते न खड्गमपि ॥ २६ ॥

संतोसेण न मुच्चसि आलिंगिज्जसि य जइ न इच्छाए। पावं च जइ न चिन्तसि तुह चेव नमोत्थु ता चित्त? ॥१३॥ तहा जइ ताव तुमं माणस संगं अभिसंगचागओ जिणसि। दोसं अपीइपरिहारओ य मोहं तु सन्नाणा ॥ १४ ॥ कोहं खमाए सम्मं मिउभावानयणओ य पुण माणं। सरलत्तणेण मायां संतोसगुणेण लोहं तु॥ १५॥ संतोसवसं नयसि य इंदियग्गामं बलावि जइ निच्चं । जइ जीवाणं कप्पसि य अप्पयंपियकए चेव ॥ १६ ॥ अस्संजमम्मि अरइं रइं च पुण संयमम्मि जइ कुणसि। जइ भयसि भवभयं चिय पावं वि य जइ दुगुंछिहसि ॥ १७ ॥ जइ वत्थुसरूवालोयणाउ न करेसि हरिससोगाइं। तह वयणनिसिरणे जइ सच्चं चिन्तसे निच्चं ॥१८॥ जइ जिणवरेसु भत्ति निच्चं तप्पवयणे पुण पसत्तिं। सम्मं जह सत्तीए धम्मगुणेसुं च आसत्तिं ॥ १९ ॥

---

संतोषेण न मुच्यसे आलिंग्यसे च यदि नेच्छया। पापं च यदि न चिन्तसि तुभ्यं चैव नमोऽस्तु तदा चित्त? ॥ १३ ॥ तथा यदि तावत् त्वं मानसः? सङ्गमभिष्वङ्गत्यागतो जयसि। द्वेषमप्रीतिपरिहाराच्च मोहं तु सज्ज्ञानात् ॥ १४ ॥ क्रोधं क्षमया सम्यक् मृदुभावानयनाच्च पुनर्मानम्। सरलत्वेन मायां संतोषगुणेन लोभं तु ॥१५॥ संतोषवशं नयसे चेन्द्रियग्रामं बलादपि यदि नित्यम् । यदि जीवानां कल्पसे चात्मानं प्रियकृते चैव ॥ १६ ॥ असंयमेऽरतिं रतिं च पुनः संयमे यदि करोषि । यदि भजसि भवभयमेव पापमपि च यदि जुगुप्ससि ॥ १७ ॥ यदि वस्तु स्वरूपालोकनान्न करोषि हर्षशोकादिम्। तथा वचननिःसारणे यदि सत्यं चिन्तसि नित्यम् ॥ १८ ॥ यदि जिनवरेषु भक्तिं नित्यं तत्प्रवचने पुनः प्रसक्तिम्। सम्यग् यथाशक्ति धर्मगुणेषु चासक्तिम् ॥ १९ ॥

कालाणुरूवसुंदरकिरियापरपरमसाहुबहुमाणं । दीणदुहिएसु करुणं पावपरेसु पुण उवेहं ॥२०॥ जइ कुणसि ता परेणं किं किरियावित्थरेण विहलेणं । तुज्झ पसाएण ममं मुत्ती करपल्लवल्लीणा ॥ २१ ॥ मइलिज्जइ निस्ससेहिं दप्पणो लहु जहा सुविमलो वि । धूमेण जलणसिहा कलुसिज्जइ जह सुबहुलेण ॥ २२ ॥ विज्जाइज्जइ जह ससहरो वि पसरंतरेणुपडलेण । तह मण ? कुवासणाए मलिनिज्जसि धवलमपि तं पि ॥ २३ ॥ जं नियमिय अप्पाणं न रागदोसाइनिग्गहो विहिओ । न य सुहज्झाणग्गीए दड्ढो कम्मेंधणपबन्धो ॥ २४ ॥ विसएहिंतो खंचिय धरिउ सा रे न इंदियग्गामो । तं किं न तुज्झ हे चित्त मुत्तिसोक्खम्मि वंछा वि ॥ २५ ॥ सज्जिज्जन्ति न करिणो न पक्खरिज्जन्ति तुरयघट्टाइं । नायासिज्जइ अप्पा वावारिज्जइ न खग्गंपि ॥ २६ ॥

---

कालानुरूपसुन्दरक्रियापरपरमसाधुबहुमानम् । दीनदुःखितेषु करुणां पापपरेषु पुनरुपेक्षाम् ॥ २० ॥ यदि करोषि तदा परेण किं क्रियाविस्तरेण विफलेन । त्वत्प्रसादेन मे मुक्तिः करपल्लवलीना ॥ २१ ॥ मलिनीयते निःश्वासैर्दर्पणो लघु यथा सुविमलोऽपि । धूमेन ज्वलनशिखा कलुषीयते यथा सुबहुलेन ॥ २२ ॥ विच्छायते यथा शशधरोऽपि प्रसरद्रेणुपटलेन । तथा मनः ? कुवासनया मलिनीयसे धवलमपि त्वमपि ॥ २३ ॥ यन्नियमितात्मनां न रागद्वेषादिनिग्रहो विहितः । न च शुभध्यानाग्निना दग्धः कर्म्मेन्धनप्रबन्धः ॥ २४ ॥ विषयेभ्य आकृष्य धारितः सा रे नेन्द्रियग्रामः । तत् किं न तव हे चित्त ? मुक्तिसौख्ये वाञ्छापि ॥ २५ ॥ सज्यन्ते न करिणो न प्रक्षिप्यन्ते तुरगघटानि । नायास्यत आत्मा व्यापार्यते न खड्गमपि ॥ २६ ॥

किंतु सुहज्झाणेणं अरिणो रागाइणो हणिज्जन्ति । तह वि तुमं माणस कीस परिभवं सहसि तेहिंतो ॥ २७ ॥ गुरुकहिओवाएणं पढमं सालंवणं पयत्तेण । अब्भसिऊणं जोगं वियलियनीसेसपच्चूहं ॥ २८ ॥ जइ बज्झविसयचिन्तावावारविवज्जणा निरालंबे । तत्ते परे निलीयसि ता चित्त न चावचरसि भवे ॥ २९ ॥ पयईए चलसहावं दुद्दंतिंदियतुरंगघट्टमिणं । विसयाभिलासवेगं विवेगरज्जुए संजमिउं ॥ ३० ॥ जइ मण धरेसि सवसं फुरन्ति रागाइसत्तुणो न तओ । इहरा उ परिभविज्जसि लद्धपसरेहिं तेहिं सया ॥ ३१ ॥ जह न वरिसंतमेहेहिं न य पविसंतसरिसहस्सेहिं । उक्करिसो जलनिहिणो न यावकरिसो वि तदभावे ॥ ३२ ॥ तह सयमुचियभोगोवभोगजोगे वि हियय जइ तुह वि । नोक्करिसो तदभावे न यावकरिसो वि होति तया ॥ ३३ ॥

---

किन्तु शुभध्यानेनारयो रागादयो हन्यन्ते । तथापि त्वं मानस ? कस्मात् परिभवं सहसे तेभ्यः ॥ २७ ॥ गुरुकथितोपायेन प्रथमं सावलम्बनं प्रयत्नेन । अभ्यस्य योगं विदलितनिःशेषप्रत्यूहम् ॥ २८ ॥ यदि बाह्यविषयचिन्ताव्यापारविवर्जनान्निरालम्बे । तत्त्वे परे निलीयसे तदा चित्त ? न चावचरसि भवे ॥ २९ ॥ प्रकृत्या चलस्वभावां दुर्दान्तेन्द्रियतुरङ्गघटामिमाम् । विषयाभिलाषवेगं विवेकरज्ज्वा संयम्य ॥ ३० ॥ यदि मनो ? धरसि स्ववशं स्फुरन्ति रागादिशत्रवो न ततः । इतरथा तु परिभूयसे लब्धप्रसरैस्तैः सदा ॥ ३१ ॥ यथा न वर्षन्मेघैर्न च प्रविशत्सरित्सहस्रैः । उत्कर्षो जलनिधेर्न चापकर्षोऽपि तदभावे ॥ ३२ ॥ तथा स्वयमुचितभोगोपभोगयोगेऽपि हृदय ? यदि तवापि । नोत्कर्षस्तदभावे न चापकर्षोऽपि भवति तदा ॥ ३३ ॥

संपत्तपावियय सुकयत्थ तह परं तुमं चेव। भोगाइकयासंसो दुक्करकारी वि ण उण मुणी ॥३४॥ अन्नं च, मोहो एस नराणं जं गिहचागा वणम्मि जोगरओ। साहति मोक्खन्ति भणंति जेण सन्नाणाउ मोक्खो ॥३५॥ तं पुण गिहेय रन्नेव होति कज्जंपि साहति ससज्झं। उज्झिय सेसवियप्पं चित्त ? विचिन्तेसु ता नाणं ॥३६॥ संसारुत्थपगत्था परं सुरम्मा वि नहु हरंति तुमं। जइ मण चिट्ठसि सन्नाणपवरपागारपरिखित्तं ॥ ३७॥ जइ सन्नाणतरंडं अक्खलण्डं छड्डसे न कइया वि हे हियय। हीरसि न ता अविवेयसरिप्पवाहेण ॥३८॥ जीवे सुपत्तभूए चिट्ठंतिं मोहतन्तुमयवट्टिं। नेहं व निट्ठविंतो मिच्छत्ततमोविनासी य ॥ ३९ ॥ कालुस्सकज्जलं उव्वमन्तउ जइ गिहस्स व तुहं तो। सन्नाणपईवो जलइ चित्त ता किं न पज्जत्तं ॥ ४० ॥

---

संपाप्तपात्रकृतः सुकृतार्थस्तथा परं त्वं चैव। भोगादिकृताशंसो दुष्करकार्यपि न पुनर्मुनिः ॥ ३४ ॥ अन्यच्च । मोह एष नराणां यद् गृहत्यागाद् वने योगरतः । साधयति मोक्षमिति भणन्ति येन सज्ज्ञानतो मोक्षः ॥ ३५ ॥ तत्पुनर्गृहे चारण्ये च भवति कार्यमपि साधयति स्वसाध्यम् । उज्झित्वा शेषविकल्पं चित्त ? विचिन्तय तस्माज्ज्ञानम् ॥ ३६ ॥ संसारोत्थपदार्थाः परं सुरम्या अपि नहि हरन्ति त्वाम् । यदि मनस्तिष्ठसि सज्ज्ञानप्रवरप्राकारपरिक्षिप्तम् ॥ ३७ ॥ यदि सज्ज्ञानतरण्डमखण्डं छड्डयसे न कदापि हे हृदय ? । ह्रियसे न तदा अविवेकसरित्प्रवाहेण ॥ ३८ ॥ जीवे सुपात्रभूते तिष्ठन्तीं मोहतन्तुमयवर्तिम् । स्नेहं च निःशापितो मिथ्यात्वतमोविनाशी च ॥३९॥ कालुष्यकज्जलमुद्वमतु यदि गृहस्येव तव ततः । सज्ज्ञानप्रदीपो ज्वलति चित्त ? तदा किं न पर्याप्तम् ॥ ४० ॥

गुरुगिरितडसंभूयं विसयविरागिमज्झमुद्धरक्खंधं। धम्मत्थिसउणरुद्धं च परममतत्तोवएसतरुं ॥ ४१ ॥ होऊण मणुत्तालि सणियं चित्त जइ समारुहिउं। गिन्हसि सन्नाणफलं ता आसाससि मुत्तिरसं ॥ ४२ ॥ रोगाण व कम्माणं विज्जासिद्धो व वियरई सुगुरु। बज्झोवयारविमुहं पसमणपरमोवएसं जं ॥४३॥ तं ज्झायसु चित्त न केवलं जओ अहिगयक्खओ चेव। सयलकिलेसविमुक्को जायइ अजरामरत्तं पि ॥ ४४ ॥ हे चित्त पयत्तेणं चिन्तसु तत्तं तुमं तयं किं पि। चिन्तियमेत्तेणं चिय चिरं पि जेणासि सुनिच्चिंतं ॥ ४५ ॥ धीमं विऊ सुरूवो चाई सूरो हमेव इच्चाई। दप्पजरो ता तुह मण जा न निलीयसि परे तत्ते ॥ ४६ ॥ अविवेयमिव उमुल्लं ठिऊण थंभं पि भंजिय दढं पि। पुत्तकलत्ताइसिणेहनिविडनिगडाइं ताडेउं ॥ ४७ ॥

---

गुरुगिरितटसंभूतं विषयविरागिमध्यमुद्धरस्कन्धम्। धर्म्मार्थिशकुनिरुद्धं च परमतत्त्वोपदेशतरुम् ॥ ४१ ॥ भूत्वा मन? उत्तालं शनैश्चित्त? यदि समारुह्य। गृण्हासि सज्ज्ञानफलं तदा आस्वादयसि मुक्तिरसम् ॥४२॥ रोगाणामिव कर्म्मणां विद्यासिद्ध इव विचरति सुगुरुः। बाह्योपकारविमुखं प्रशमनपरमोपदेशं यत् ॥ ४३ ॥ तं ध्यायस्व चित्त? न केवलं यतोऽधिगताक्षश्चैव। सकलक्लेशविमुक्तं जायतेऽजरामरत्वमपि ॥ ४४ ॥ हे चित्त? प्रयत्नेन चिन्तय तत्त्वं त्वं तत् किमपि। चिन्तितमात्रेणैव चिरमपि येनासि सुनिश्चिन्तम् ॥ ४५ ॥ धीमान् विद्वान् सुरूपस्त्यागी शूरोऽहमेवेत्यादिः। दर्प्पज्वरस्तावत् तव मनो? यावन्न निलीयसे परे तत्त्वे ॥ ४६ ॥ अविवेकेभमुल्लुण्ठ्य स्तम्भमपि भंक्त्वा दृढमपि। पुत्रकलत्रादिस्नेहनिबिडनिगडानि तोडयित्वा ॥ ४७ ॥

रागाइवन्धणदुमे वि दूरमुम्मुलिऊण धम्मवणे । हे चित्त? चरसु हत्थी व जं परं निव्वुइं लहसि ॥ ४८ ॥ सक्खं जिणिन्दभणियं इमं तिपयं च गणहरेण पुणो । तस्सीसेण य एयं चोद्दसदसपुव्विणा य इमं ॥ ४९ ॥ पत्तेयबुद्धपमुहेहिं भासियं पुव्वजिणवरेहिं । इमं भणियं इच्चाई परपच्चायणवयणचिन्तणओ ॥ ५० ॥ हे चित्त? खिज्जसि चिय सयं रसाणुभवसुन्नमेव तुमं । दव्वि दिव्वभोयणबहुविहरसपयडणपरा वि ॥५१॥ अहवा वासिज्जइ भिज्जइ य दव्वी रसेहिं व पुण तुमं । जिणवयणमणुसरंतं पि मूढ हे हियय? कहमिहरा ॥ ५२ ॥ चिररिसिसुहासियाइं अणेगसो पढसि सुणसि तह निच्चं । भावेसि य अइनिउणं तप्परमत्थं च बुज्झसि य ॥ ५३ ॥ न उण अणुभवसि पसमं न य संवेगं नयावि निव्वेयं । न मुहुत्तमेत्तमवि तह तब्भावत्थेण परिणमसि ॥ ५४ ॥

---

रागादिवन्धनद्रुमानपि दूरमुन्मूल्य धर्मवने । हे चित्त? चर हस्तीव यत्परां निर्वृत्तिं लभसे ॥ ४८ ॥ साक्षाज्जिनेन्द्रभणितमिदं त्रिपदं च गणधरेण पुनः । तच्छिष्येण चैतच्चतुर्दशदशपूर्विणा चेदम् ॥ ४९ ॥ प्रत्येकबुद्धप्रमुखैर्भाषितं पूर्वजिनवरैः । इदं भणितमित्यादि परप्रत्यायनवचनचिन्तनात् ॥५०॥ हे चित्त? खिद्यसैव स्वयं रसानुभवशून्यमेव त्वम् । दर्वीव दिव्यभोजनबहुविधरसप्रकटनपराऽपि ॥ ५१ ॥ अथवा वास्यते भिद्यते च दर्वी रसैर्न पुनस्त्वम् । जिनवचनमनुसरदपि मूढ हे हृदय? कथमितरथा ॥ ५२ ॥ चिरर्षिसुभाषितान्यनेकशः पठसि शृणोसि तथा नित्यम् । भावयसि चातिनिपुणं तत्परमार्थं च बुद्ध्यसि च ॥ ५३ ॥ न पुनरनुभवसि प्रशमं न च संवेगं न चापि निर्वेदम् । न मुहूर्त्तमात्रमपि तथा तद्भावार्थेन परिणमसि ॥ ५४ ॥

जिणवयणसमरसापत्तिमन्तरेणं तु बज्झचरणे वि । सुविसुद्धसाहुकिरियासेवणरूवे जहाथामं ॥ ५५ ॥
उच्छहसि वि नणु तुमं पमायमयघुम्मिरं मणागंपि । एवं च लद्धपोयं पि मूढ बुड्डसि भवोहंतो ॥ ५६ ॥
अहव न जिणवयणत्थेण केवलं न परिणमसि चेव तुमं । साभिप्पायविसरिसं किं तु तयं उच्च वच्छिसि वि
॥५७॥ नियबोहमंगेणं हे हियय? कहिं पि जिणिमएणावि। मउलाविज्जसि वाहं मूढ तुमं सव्वहावि जओ ॥५८॥
कइयवि रुहसि नहोग्गं एगं उस्सग्गग्गतरलियं संतं। कइयवि विससि रसायलमववाए च्चिय निलीणं तु ॥ ५९॥
उस्सग्गदिट्ठिणो तुह अववायट्ठिया न चेव रोयंते । अववायदिट्ठिणो पुण उस्सग्गठिया न रोयन्ति ॥ ६० ॥
तह दव्वखेत्तकालाइयाणमणुसारओ जहाविसयं । उभयसेयसेवगा जे य ते वि नो तुज्झ रोयन्ति ॥ ६१ ॥

---

जिनवचनशमरसापत्तिमन्तरेण तु बाह्यचरणेऽपि । सुविशुद्धसाधुक्रियासेवनरूपे यथास्थानम् ॥ ५५ ॥ उच्छ्वसस्यपि न ननु त्वं प्रमादमदघूर्णि मनागपि । एवं च लब्धपोतमपि मूढ? निपतसि भवौघान्तः॥ ५६ ॥ अथवा न जिनवचनार्थेन केवलं न परिणमसि चैव त्वम् । स्वाभिप्रायविसदृशं किन्तु त्वकं................॥ ५७ ॥ निजबोधमार्गेण हे हृदय? कुत्रापि जिनमतेनापि । मुकुलयसि बाधां मूढ? त्वं सर्वथापि यतः ॥ ५८ ॥ कदापि रोहसि नभोग्रमेकमुत्सर्गाग्रतरलितं सत् । कदापि विशसि रसातलमपवाद एव निलीनं तु ॥ ५९ ॥ उत्सर्गदृष्टये तुभ्यमपवादस्थिता न चैव रोचन्ते । अपवाददृष्टये पुनरुत्सर्गस्थिता न रोचन्ते ॥ ६० ॥ तथा द्रव्यक्षेत्रकालादीनामनुसाराद् यथाविषयम् । उभयश्रेयःसेवका ये च तेऽपि न तुभ्यं रोचन्ते ॥ ६१ ॥

एवं मण निच्छयनयठियस्स ववहारनयठिया तुज्झ । ववहारनयठियस्स उ रोयन्ति न निच्छयनयत्था ॥ ६२ ॥ तह दव्वखेत्तकालाइयाणमणुसारओ जहाविसयं । उभयं नयमयठिया जे उ ते वि नो तुज्झ रोयन्ति ॥ ६३ ॥ उस्सग्गपमुहसमत्थनयमयं मयमरोयमाणस्स । कह नज्जइ निरवज्जा मण जिणमयपरिणई तुज्झ ॥६४॥ तव्विसए सुयनिहिणो नो वहुपुच्छिसि वि किर मए तत्तं । नायन्ति किं पि दंसं निरुवसमं चित्त घेत्तूण ॥ ६५ ॥ एवं च तुज्झ न मिलाणकज्जविसयावि जायए चिन्ता । कालाणुरूवगुणिगोयरं च न पमोयकरणं पि ॥ ६६ ॥ वच्छल्लथिरीकरणोववूहणाइ वि न चेव सव्वत्थ । अविगाणेणं चिन्तसि साहिप्पाया जइ कहं पि ॥ ६७ ॥ एवं विहं च कुग्गहचक्कं छेत्तुं विवेयचक्केण । सव्वोवाहिविसुद्धं सद्धम्मे कुणसु पडिवन्धं ॥ ६८ ॥

---

एवं मनो ? निश्चयनयस्थितस्य व्यवहारनयस्थितास्तुभ्यम् । व्यवहारनयस्थितस्य तु रोचन्ते न निश्चयनयस्थाः ॥६२॥ तथा द्रव्यक्षेत्रकालादीनामनुसाराद् यथाविषयम् । उभयनयमतस्थिता ये तु तेऽपि न तुभ्यं रोचन्ते ॥ ६३ ॥ उत्सर्गप्रमुखसमस्तनयमयं मतमरोचमानस्य । कथं ज्ञायते निरवद्या मनो ! जिनमतपरिणतिस्तव ॥ ६४ ॥ तद्विषये श्रुतनिधीन्न बहुपृच्छस्यपि किल मते तत्त्वम् । नायान्ति किमपि दर्शनं निरुपशमं चित्त ! गृहीत्वा ॥ ६५ ॥ एवं च तव न म्लानकार्यविषयापि जायते चिन्ता । कालानुरूपगुणिगोचरं च न प्रमोदकरणमपि ॥ ६६ ॥ वात्सल्यस्थितिकरणोपबृंहणाद्यपि न चैव सर्वत्र । अविगानेन चिन्तयसि स्वाभिप्रायाद् यदि कथमपि ॥ ६७ ॥ एवंविधं च कुग्रहचक्रं छित्वा विवेकचक्रेण । सर्वोपाधिविशुद्धं सद्धर्मे करोषि प्रतिबन्धम् ॥ ६८ ॥

जइ तुममिह पडिबन्धं हुंतं थेवंपि ता न इयकालं । होज्ज महदुक्खजालं किं न सुयमिमं तए चित्त ॥ ६९ ॥ एगदिवसं वि जीवो पव्वज्जमुवागओ अनन्नमणो । जइ वि न पावति मोक्खं अवस्स वेमाणिओ होति ॥ ७० ॥ अहवेगदिवसमिचाइथूलमाणं जओ मुहुत्ते वि । सन्नाणपरिणईए उ फलमिट्ठं होइ जमिहुत्तं ॥७१॥ जं अन्नाणी कम्मं खवेइ बहुयाइं वासकोडीहिं । तं नाणी तिहिं गुत्तो खवेइ ऊसासमेत्तेण ॥ ७२ ॥ कहमिहरा मरुदेवी पुव्वं अगुणावि तक्खणा चेव । सिद्धा तुहं तु हे मण सुनाणपरिणइगुणविहीण ॥ ७३ ॥ कइयावि रागरत्तं कइयावि दोसेण कलुसियसरूवं । कइयावि मोहमूढं कइयावि कोहग्गि संतत्तं ॥ ७४ ॥ कइयावि माणवद्धं कयाइ मायाए बाढमाविद्धं । कइयावि महालोहोयहिम्मि सव्वंगनिम्मग्गं ॥ ७५ ॥

---

यदि तवेह प्रतिबन्धमभविष्यत् स्तोकमपि तदा नेयत्कालम् । भवेन्महादुःखजालं किं न श्रुतमिदं त्वया चित्त! ॥ ६९ ॥ एकदिवसमपि जीवः प्रव्रज्यामुपागतोऽनन्यमनाः । यद्यपि न प्राप्नोति मोक्षमवश्यं वैमानिको भवति ॥ ७० ॥ अथवैकदिवसमित्यादिस्थूलमानं यतो मुहूर्त्तेऽपि । सज्ज्ञानपरिणत्या तु फलमिष्टं भवति यदिहोक्तम् ॥ ७१ ॥ यदज्ञानी कर्म्म क्षपयति बहुभिर्वर्षकोटिभिः । तज्ज्ञानी त्रिभिर्गुप्तः क्षपयत्युच्छ्वासमात्रेण ॥ ७२ ॥ कथमितरथा मरुदेवी पूर्वमगुणापि तत्क्षणाच्चैव । सिद्धा, त्वं तु हे मनः! सुज्ञानपरिणतिगुणविहीन ? ॥ ७३ ॥ कदापि रागरक्तं कदापि द्वेषेण कलुषितस्वरूपम् । कदापि मोहमूढं कदापि क्रोधाग्निसंतप्तम् ॥ ७४ ॥ कदापि मानबद्धं कदापि मायया बाढमाविद्धम् । कदापि महालोभोदधौ सर्वाङ्गनिमग्नम् ॥ ७५ ॥

कइयावि वेरमच्छररणरणयभयट्टरोद्दज्झाणगयं। कइयावि दव्वखेत्ताइविसयचिन्ताभरक्कन्तं ॥ ७६ ॥ निच्चं वि वावडं चिय खरपवणपणुत्तधयपडोव्व तुमं। नावत्थाणं थेवंपि लहसि कइयावि परमत्थे ॥ ७७ ॥ इच्चाइ चित्त ? केत्तियमणुसासिज्जसि तुमं सयं चेव। कुसलाकुसलविभागं परिभावसु तह य निच्छयसु ॥ ७८ ॥ तत्तो कुसलपवित्तिं निच्चं कुसलट्ठिएसु बहुमाणं। कुणसु अकुसलकुसलत्थचायमज्झत्थभावे य ॥ ७९ ॥ एवमकुसलविवज्जणकुसलप्पवित्तिप्पहाणकारणओ। कज्जं पि मण? समाहीरूवं परमं चिय लहेसि ॥ ८० ॥ इय जो निच्चं वि मणो अणुसासइ भावसारमणुसमयं। समयं मायं कोहं लोहं च जिणेज्ज किं चोज्जं ॥ ८१ ॥ इहरा अणप्पकुविगप्पकप्पणासत्तचित्तवेलविओ। हियमवि अहियं सयणं वि परजणं मित्तमवि सत्तुं ॥ ८२ ॥

---

कदापि वैरमत्सररणरणकभयार्त्तरौद्रध्यानगतम्। कदापि द्रव्यक्षेत्रादिविषयचिन्ताभराक्रान्तम् ॥ ७६ ॥ नित्यमपि व्यापृतमेव खरपवनप्रणुन्नध्वजपट इव त्वम्। नावस्थानं स्तोकमपि लभसे कदापि परमार्थे ॥ ७७ ॥ इत्यादि चित्त! कियन्मात्रमनुशास्यसे त्वं स्वयं चैव। कुशलाकुशलविभागं परिभावय तथा च निश्चय ॥ ७८ ॥ ततः कुशलप्रवृत्तिं नित्यं कुशलस्थितेषु बहुमानम्। कुर्वकुशलकुशलार्थत्यागमध्यस्थभावे च ॥ ७९ ॥ एवमकुशलविवर्जनकुशलप्रवृत्तिप्रधानकारणात्। कार्यमपि मनः? समाधिरूपं परममेव लभसे ॥ ८० ॥ इति यो नित्यमपि मनोऽनुशास्ति भावसारमनुसमयम्। समयं मायां क्रोधं लोभं च जीयात् किं चोद्यम् ॥ ८१ ॥ इतरथाऽनल्पकुविकल्पकल्पनासक्तचित्तवंचितः। हितमप्यहितं स्वजनमपि परजनं मित्रमपि शत्रुम् ॥ ८२ ॥

सब्भूयमसब्भूयं पि मन्नमाणो करिव्व दुव्वारो। किं किं न पावट्ठाणं वसुदत्तो इव न करेज्ज जणो ॥८३॥ तहाहि— उज्जेणीए पुरीए नरवइणो सूरतेयनामस्स । सोमप्पहोत्ति नामं आसी पुरोहिओ विप्पो ॥ ८४ ॥ नीसेससव्वपरमत्थजाणगो सव्वदरिसणविहन्नु । अच्चन्तवल्लहो गुणिजणस्स रन्नो य सुगुणो त्ति ॥ ८५ ॥ एगम्मि य पत्थावे दिवगओ सो तओ य से पुत्तो । वसुदत्तो नामेणं तप्पयविनिवेसणट्ठाए ॥ ८६ ॥ सयणेहिं दंसिओ नरवइस्स नवरं लहुत्ति अपढोत्ति । पडिसिद्धो रन्ना सो अन्नो य निवेसिओ तत्थ ॥ ८७ ॥ परिभूयं अप्पाणं मन्नंतो गुरुविसायसंतत्तो। वसुदत्तो नीहरिओ पढणत्थं तयणुगेहाओ ॥ ८८ ॥ पवरं विज्जाखेत्तं नानाविहविउससंगयं सोचा। पाडलिपुत्तं लोयाओ तत्थ गन्तुं समारद्धो ॥ ८९ ॥

---

सद्भूतमसद्भूतं अपि मन्यमानः करीव दुर्वारः। किं किं न पापस्थानं वसुदत्त इव कुर्यात् जनः ॥ ८३ ॥ तथाहि। उज्जयिन्यां पुर्यां नरपतेः सूर्यतेजोनाम्नः। सोमप्रभ इति नामाऽऽसीत्=पुरोहितो विप्रः ॥ ८४ ॥ निश्शेषसर्वपरमार्थजानकः सर्वदर्शनविधिज्ञः। अत्यन्तवल्लभो गुणिजनस्य राज्ञश्च सुगुण इति ॥ ८५ ॥ एकस्मिंश्च प्रस्तावे दिवं गतः स ततश्च तस्य पुत्रः। वसुदत्तो नाम्ना तत्पदविनिवेशनार्थाय ॥ ८६ ॥ स्वजनैर्दर्शितो नरपतये नवरं लघ्वित्यपाठीति। प्रतिषिद्धो राज्ञा सोऽन्यश्च निवेशितस्तत्र ॥ ८७ ॥ परिभूतमात्मानं मन्यमानो गुरुविषादसंतप्तः। वसुदत्तो निःसृतः पठनार्थं तदनु गेहात् ॥ ८८ ॥ प्रवरं विद्याक्षेत्रं नानाविधविद्वत्संगतं श्रुत्वा। पाटलिपुत्रं लोकात् तत्र गन्तुं समारब्धः ॥ ८९ ॥

कालक्कमेण पत्तो पढियाओ तहिं च सव्वविज्जाओ । अट्ठसिद्धवंछियत्थो समागतो नियनयरम्मि ॥ ९० ॥ तुट्ठो विज्जाए निवो दिन्ना पिउसंतिया य से भुत्ती । जाओ य संमतओ रायपउरलोयस्स सव्वस्स ॥ ९१ ॥ नरवइ सम्माणेणं इस्सरिएणं च सुयमएणावि । तिणमिव जयं नियन्तो कालं बोलेइ सो तत्थ ॥ ९२ ॥ इस्सरियाइलवेण वि तरलिज्जइ माणसं अधीराणं । किं पुण कुलवलविज्जाइयाण सव्वेसिं समवाए ॥ ९३ ॥ अवि तीरिज्जइ जुगविगमजलहिकल्लोलपडलमवि खलिउं । इस्सरियाइमहामयविवसं तु मणो न थेवं पि ॥ ९४ ॥ इय सो उम्मत्तमणो एगम्मि दिणे नडाण पेच्छणयं । कोउहलेण दट्ठुं निसिम्मि मित्तेहिं संलत्तो ॥ ९५ ॥ हे मित्त? एहि जामो नडपेच्छणयं खणं पलोएमो । दिट्ठी दट्ठव्वपलोयणेण सफलत्तणमुवेति ॥ ९६ ॥

---

कालक्रमेण प्राप्तः पठितास्तत्र च सर्वविद्याः । अर्थसिद्धवांछितार्थः समागतो निजनगरे ॥ ९० ॥ तुष्टो विद्यया नृपो दत्ता पितृसत्का च तस्य भुक्तिः । जातश्च सम्मतो राजप्रचुरलोकस्य सर्वस्य ॥ ९१ ॥ नरपतिसंमानेनैश्वर्येण च श्रुतमयेनापि । तृणमिव जगत् पश्यन् कालं गमयति स तत्र ॥ ९२ ॥ ऐश्वर्यादिलवेनापि तरल्यते मानसमधीराणाम् । किं पुनः कुलवलविद्यादीनां सर्वेषां संपाते ॥ ९३ ॥ अपि शक्यते युगविगमजलधिकल्लोलपटलमपि स्खलितुम् । ऐश्वर्यादिमहामदविवशं तु मनो न स्तोकमपि ॥ ९४ ॥ इति स उन्मत्तमना एकस्मिन् दिने नटानां प्रेक्षणकम् । कौतुहलेन द्रष्टुं निशायां मित्रैः संलप्तः ॥ ९५ ॥ हे मित्र? एहि यामो नटप्रेक्षणकं क्षणं प्रलोकयामः दृष्टिर्द्रष्टव्यप्रलोकनेन सफलत्वमुपैति ॥ ९६ ॥

तेसिं अणुवित्तीए गतो तहिं सो ठितो य खणमेक्कं । अह तत्थ सया जुवई विडेण सह जंपिरी एवं ॥ ९७ ॥ अलियविउसेण पइणा निरुद्धपसराए संपयं मज्झ । तुह सुहय दंसणामयलाभेणं निव्वई जाया हे ॥९८॥ पेच्छणयपवट्टग चिरकालं जीवियं हवउ तुज्झ । जेण कओवक्खेवो महपइणो कोवजलणनिहिणो ॥ ९९ ॥ ता एहि सुहय जा वेसकूडविउसो इहेव जाव । ताव खणं कीलित्ता नियनियगेहेसु वच्चामो ॥ २००० ॥ इय तीए पणयसारं गिरमायन्निय विचिन्तियं तेण । अलियवियप्पविगप्पणपवणपणोल्लियमणेण इमं ॥ १ ॥ नूणं सा मे भज्जा एसा परपुरिसमणुसरति पावा । कूडविउसं च मन्ने मम च उद्दिस्स मागरइ ॥ २ ॥ पुव्वं पि दुट्ठसीला लिङ्गेहिं मए वियाणिया आसि । संपइ पच्चक्खं चिय दिट्ठा ता निग्गहामि इमं ॥ ३ ॥

---

तेपामनुवृत्त्या गतस्तत्र स स्थितश्च क्षणमेकम् । अथ तत्र सदा युवतिर्विटेन सह जल्पत्येवम् ॥ ९७ ॥ अलीकविदुषा पत्या निरुद्धप्रसारायाः सांप्रतं मम । तव सुभग? दर्शनामृतलाभेन निर्वृतिर्जाता हे? ॥ ९८ ॥ प्रेक्षणकप्रवर्त्तक? चिरकालं जीवितं भवतु तव । येन कृतश्च क्षेपो मत्पतेः कोपजलनिधेः ॥ ९९ ॥ तस्मादेहि सुभग? यद् वेशकूटविद्वानिहैव यावत् । तावत् क्षणं क्रीडित्वा निजनिजगेहेषु व्रजामः ॥ २००० ॥ इति तस्याः प्रणयसारां गिरमाकर्ण्य विचिन्तितं तेन । अलीकविकल्पविकल्पनप्रवणप्रक्षिप्तमनसेदम् ॥ ॥ १ ॥ नूनं सा मे भार्यैषा परपुरुषमनुसरति पापा । कूटविद्वांसं च मन्ये मां चोद्दिश्य व्यागिरति ॥ २ ॥ पूर्वमपि दुष्टशीला लिङ्गैर्मया विजानिताऽऽसीत् । संप्रति प्रत्यक्षमेव दृष्टा तस्मान्निगृह्णामीमाम् ॥ ३ ॥

इय चिंतन्तो जा ताडणट्टया पट्टिओ इमो तीए । ता सच्छंदपयारा सा जुवई कत्थइ गयत्ति ॥ ४ ॥ मन्ने इंतं मं पेच्छिऊण पावा घरं गया तुरियं । इय वुद्धिए तओ सो वेगेण गिहुम्मुहो चलिओ ॥ ५ ॥ अह पबल-कोवविवसो जाव पत्तो नियगेहद्दारम्मि । ताव य सरीरचिन्तं काउं गेहम्मि पविसंती ॥ ६ ॥ दिट्ठा नियगा भगिणी भज्ज त्ति वियाणिऊण तो तेण। आ पावे ? मज्झ गिहे दुस्सीला वि हु कहं विससि ॥ ७ ॥ कूडविउसं-ति मं दूसिऊण पुरओ विडस्स रमिउं च । तेण सह सहरिसं आगयासि इय उल्लवंतेण ॥ ८ ॥ हा हा किमे-वमेयं को एसो किं मए कयमकज्जं। इति पुणरुत्तं वहुजंपिरी वि अच्चन्तकोववसा ॥ ९॥ अवियाणित्ता तह तेण लट्ठिमुट्ठिहिं निठ्ठुरं पहया । सा मम्मपएसम्मि जह मुक्का जीवियव्वेण ॥ १० ॥

---

इति चिन्तयन् यावत् ताडनार्थाय प्रस्थितोऽयं तस्याः । तावत् स्वच्छन्दप्रचारा सा युवतिः कुत्रापि गतेति ॥ ४ ॥ मन्य आयान्तं मां प्रेक्ष्य पापा गृहं गता त्वरितम् । इति बुद्ध्या ततः स वेगेन गृहोन्मुखश्चलितः ॥ ५ ॥ अथ प्रबलकोपविवशो यावत् प्राप्तो निजगेहद्वारे । तावच्छरीरचिन्तां कृत्वा गेहे प्रविशन्ती ॥ ६ ॥ दृष्टा निजका भगिनी भार्येति विज्ञाय ततस्तेन । आः पापे ? मम गृहे दुश्शीलापि हि कथं विशसि ॥ ७ ॥ कूटविद्वांसमिति मां दूषित्वा पुरतो विटस्य रमयित्वा च । तेन सह सहर्षमागतासीत्युल्लपता ॥ ८ ॥ हा हा किमेवमेतत् क एष किं मया कृतमकार्यम् । इति पुनरुक्तं वहुजल्पिन्यप्यत्यन्तकोपवशात् ॥ ९ ॥ अविज्ञाता तथा तेन यष्टिमुष्टिभि-र्निष्ठुरं प्रहता । सा मर्म्मप्रदेशे यथा मुक्ता जीवितव्येन ॥ १० ॥

अह अणुमग्गेणं चिय समागएणं समित्तवग्गेण । पडिसिद्धो सविसेसं कुद्धो तत्तो इमं भणति ॥ ११ ॥ रे पावा? तुम्हाणं भेएण नूणमेरिसमकज्जं । मह भज्जाए कीरति तेण तुब्भे ममं खलह ॥ १२॥ नडपेच्छणए वि धुवं एत्तो चिय अहमणिच्छमाणो वि । नीओ तुम्हेहिं इमीए कज्जनिव्विग्घसिद्धिकए ॥ १३ ॥ कित्तिममेत्तीजुत्ताणं होज्ज अहवा न किंचि वि अकिच्चं । परिचयह दुट्ठसीला ता एत्तो मज्झचक्खुपहं ॥ १४ ॥ एवं वसुदत्तेणं अलीयकुवियप्पवाउलमणेण । निद्दोसा वि हु ते तज्जिया तहा जह गया सगिहं ॥ १५ ॥ कोलाहलं च सोचा समागया मन्दिराओ से भज्जा । दट्ठूण वइयरमिमं एवं भणिउं पवत्ता य ॥१६॥ हा हा निग्घिण निल्लज्जणज्ज? किं हणसि अप्पणो भइणिं । जेणेवंविहपावं सोवागा वि हु न कुव्वंति ॥ १७ ॥

---

अथानुमार्गेणैव समागतेन स्वमित्रवर्गेण । प्रतिषिद्धः सविशेषं क्रुद्धस्तत इदं भणति ॥ ११ ॥ रे पापा युष्माकं भेदेन नूनमीदृशमकार्यम् । मम भार्यया क्रियते तेन यूयं मां स्खलत ॥ १२ ॥ नटप्रेक्षणकेऽपि ध्रुवमत एवाहमनिच्छन्नपि । नीतो युष्माभिरस्याः कार्यनिर्विघ्नसिद्धिकृते ॥ १३ ॥ कृत्रिममैत्रियुक्तानां भवत्यथवा न किंचिदप्यकृत्यम् । परित्यजत दुष्टशीलास्तस्मादितो मम चक्षुःपथम् ॥ १४ ॥ एवं वसुदत्तेनालीकं कुविकल्पव्याकुलमानसेन । निर्दोषा अपि हि ते तर्जितास्तथा यथा गताः स्वगृहम् ॥ १५ ॥ कोलाहलं च श्रुत्वा समागता मन्दिरात् तस्य भार्या । दृष्ट्वा व्यतिकरमिममेवं भणितुं प्रवृत्ता च ॥ १६ ॥ हा हा निर्घृण? निर्लज्जानार्य्य? किं हनस्यात्मनो भगिनीम् । येनैवंविधपापं श्वपाका अपि हि न कुर्वन्ति ॥ १७ ॥

एवं तीए वुत्तो पुरलोगेण वि य निन्दितो संतो । सो विचिन्तेइ पुणो वि हु अणप्पकुविगप्पविहुरमणो ॥ १८ ॥ असई न केवलं चिय मह भज्जा किन्तु भाइणी वि भवे । एवं वामोहित्ता ममं पि जा सयमवक्कंता ॥ १९ ॥ भइणीए विनिहयाए पसंतकोवोत्ति मं वियाणित्ता । विणिवारिउमारध्दा साहु व्व अभिन्नमुहरागा ॥ २० ॥ किमहं नियभइणिं वि हु न मुणेमि सुदूरमन्धयारे वि । जइ एयाए नो दिट्ठिवंचणं मह कयं हुंतं ॥२१॥ इति चिन्तिऊण कुवलयदलसामं कढिऊण असिधेणुं। पावे? डाइणि? भइणीविणासजणणि? पलाइहसि ॥ २२ ॥ कत्थेयाणिं सुरगुरुसमो वि जो हं तए वि विब्भमिओ । इति जंपन्तो भज्जाए लुणइ नासं स उट्ठउट्ठं ॥ २३ ॥ अह उग्गयम्मि सूरे निसिवइयरसवणजायरोसेण । लोगेण नरिंदेण य सो नयरीओ विणिच्छूढो ॥ २४ ॥

---

एवं तयोक्तः पुरलोकेनापि च निन्दितः सन् । स चिन्तयति पुनरपि ह्यनल्पकुविकल्पविधुरमनाः ॥ १८ ॥ असती न केवलमेव मम भार्या किन्तु भगिन्यपि भवेत् । एवं व्यामोह्य मामपि या स्वयमपक्रान्ता ॥ १९ ॥ भगिन्यां विहतायां प्रशान्तकोप इति मां विज्ञाय । विनिवारितुमारब्धा साध्वीवाभिन्नमुखरागा ॥ २० ॥ किमहं निजभगिनीमपि हि न जानामि सुदूरमन्धकारेऽपि । यद्येतया न दृष्टिवञ्चनं मम कृतं भवेत् ॥ २१ ॥ इति चिन्तयित्वा कुवलयदलश्यामामाकृष्यासिधेनुम् । पापे? डाकिनि? भगिनीविनाशजननि? पलायसे ॥२२॥ कस्मादिदानीं सुरगुरुसमोऽपि योऽहं त्वयापि विभ्रामितः । इति जल्पन् भार्य्याया लुनाति नसं सौष्ठपुटाम् ॥ २३ ॥ अथोद्गते सूर्ये निशाव्यतिकरश्रवणजातरोषेण । लोकेन नरेन्द्रेण च स नगर्य्या विनिःक्षिप्तः ॥ २४ ॥

एगागी य भमंतो वइदेसाए पुरीए संपत्तो । तारापीढो राया तहिं च आराहितो तेण ॥ २५ ॥ तुट्ठेण नरिन्देणं दिन्नं से जीवणं पहिट्ठमणो । तत्थ ट्ठिउं पवत्तो अह जाए सूरगहणम्मि ॥ २६ ॥ सो चिन्तिउं पवत्तो अज्ज अहं बम्भणे निमंतित्ता । बहुभक्खं वंजणाउलमणेगपाणयसम्माइण्णं ॥ २७ ॥ बहुविच्छित्तिसणाहं भोयणजायं कराविस्सामि । खीरं च खीरहरियाउ राइणो मग्गइस्सामि ॥ २८ ॥ जइ सो कह वि न दाही पुणोपुणो मग्गिओ वि सप्पणयं । तो अत्ताणं हणिउं बम्भणहच्चं पि से काहं ॥ २९ ॥ एवं कूडविगप्पेहिं भामिओ चिन्तणं पि सच्चं व । मन्नंतो सो भोयण वेलापत्तोत्ति पुणरुत्तं ॥ ३० ॥ किर सुचिरमग्गिओ वि हु न खीरहरिओ पणा मए खीरं । तो गाढकोववसओ छुरियाए हणति अप्पाणं ॥ ३१ ॥

---

एकाकी च भ्रमन् वैदिशायां पुर्यां संप्राप्तः । तारापीडो राजा तत्र चाराधितस्तेन ॥ २५ ॥ तुष्टेन नरेन्द्रेण दत्तं तस्य जीवनं प्रहृष्टमनाः । तत्र स्थातुं प्रवृत्तोऽथ जाते सूर्यग्रहणे ॥ २६ ॥ स चिन्तितुं प्रवृत्तोऽद्याहं ब्राह्मणान्निमन्त्र्य । बहुभक्ष्यं व्यञ्जनाकुलमनेकपानकसमाकीर्णम् ॥ २७ ॥ बहुविक्षिप्तिसनाथं भोजनजातं कारयिष्यामि । क्षीरं च क्षीरहृताद् राज्ञो मंगयिष्यामि ॥ २८ ॥ यदि स कथमपि न दास्यति पुनःपुनर्मङ्गितोऽपिः सप्रणयम् । तत आत्मानं हत्वा ब्रह्महत्यामपि तस्य करिष्यामि ॥ २९ ॥ एवं कूटविकल्पैर्भ्रामितश्चिन्तनमपि सत्यमिव । मन्यमानः स भोजनवेला प्राप्तेति पुनरुक्तम् ॥ ३० ॥ किल सुचिरं मंगितोपि हि न क्षीरहृतो ददाति मह्यं क्षीरम् । ततो गाढकोपवशात् क्षुरिकया हन्त्यात्मानम् ॥ ३१ ॥

वाहरइ य उद्धकरो बम्भणहच्चा इमा अहो लोगा? । खीरहरियस्स रन्नो जेणं खीरं न मे दिन्नं ॥३२॥ इय खणमेगं वाहरिय गाढघाएण मम्मिओ संतो । रोद्दज्झाणोवगओ मरिऊणं नारगो जाओ ॥ ३३ ॥ एवं सच्छंदपयट्टचित्तदोघट्टपडिहयप्पाणो । जम्हा जीवा ठाउं खणं पि न सुहेण पारेंति ॥ ३४ ॥ तेणाणुसासणं माणसस्स कीरइ पइक्खणं चेव । इहरोवदंसियठिईए होति न खणं पि कुसलत्तं ॥ ३५ ॥ किं च । दासं व मणं अवसं सवसं जो कुणति तेण जयरंगे । गहिया विजयपडागा सो चिय सूरो सविक्कमवं ॥ ३६ ॥ अवि नाम कहवि कीरति पिवणं पुरिसेण जलनिहीणं पि । पज्जलियजलणजालाकलावमज्झे य सयणं पि ॥ ३७ ॥ चंकमणं पि हु तिक्खग्गखग्गधाराए वीरचरिएण । पउमासणं पि वज्झइ तिव्वग्गिजलंतकुंतग्गे ॥ ३८ ॥

---

व्याहरति चोर्ध्वकरो ब्रह्महत्येमा अहो लोकाः? । क्षीरहृतस्य राज्ञो येन क्षीरं न न मे प्रदत्तम् ॥ ३२ ॥ इति क्षणमेकं व्याहृत्य गाढघातेन मर्मितः सन् । रौद्रध्यानोपगतो मृत्वा नारको जातः ॥ ३३ ॥ एवं स्वच्छन्दप्रवृत्तचित्तदौर्घट्यप्रतिहतात्मानः । यस्माज्जीवाः स्थातुं क्षणमपि न सुखेन शक्नुवन्ति ॥ ३४ ॥ तेनानुशासनं मानसस्य क्रियते प्रतिक्षणं चैव । इतरथोपदर्शितस्थित्या भवति न क्षणमपि कुशलत्वम् ॥ ३५ ॥ किञ्च । दासमिव मनोऽवशं स्ववशं यः करोति तेन जयरंगे । गृहीता विजयपताका स एव शूरः सद्विक्रमवान् ॥ ३६ ॥ अपि नाम कथमपि क्रियते पानं पुरुषेण जलनिधीनामपि । प्रज्वलितज्वलनज्वालाकलापमध्ये च शयनमपि ॥ ३७ ॥ चंक्रमणमपि हि तीक्ष्णाग्रखड्गधारायां वीरचर्येण । पद्मासनमपि वध्यते तीव्राग्निज्वलत्कुन्ताग्रे ॥ ३८ ॥

न य पुण पयईच्चिय चलस्स कुप्पहपसज्जमाणस्स । कीरति जओ जए माणसस्स अकयाओहस्सा वि ॥ ३९ ॥ मत्तगइंदं पि दमन्ति निंति सीहंपि अप्पवसिगत्तं । पक्खुहियजलहिजलपसरमपि लहुं निरुंभन्ति ॥ ४० ॥ न य सक्का अकिलेसेण चेव पुण माणसं जिणेउं जे । अह कह वि तं पि हु जियं जियं खु ता सव्वजेयव्वं ॥ ४१ ॥ किं बहुणा। तव्विजए विजिओ च्चिय दुज्जओ हवति अप्पा । सो पुण विजिओ जायइ परमप्पा परमपयसामी ॥ ॥ ४२ ॥ इय मण अलिमालइमालियाए संवेगरंगसालाए । परिकम्मविहीपामोक्खचउमहामूलदाराए ॥ ४३ ॥ आराहणाए पनरसपडिदारमयस्स पढमदारस्स । चित्ताणुसासणमिणं भणियं छट्ठं पडिदारं ॥ ४४ ॥ अणुसासिज्जंतं पि हु चित्तं पाएण निच्चवासाओ । पडिबन्धलेवलित्तं निरभिस्संगं न भविउमलं ॥ ४५ ॥

---

न च पुनः प्रकृत्या किल चलस्य कुपथप्रसज्जमानस्य । क्रियते जयो जगति मानसस्याकृतौघस्यापि (अकृतायुधस्यापि) ॥ ३९ ॥ मत्तगजेन्द्रमपि दमन्ति नयन्ति सिंहमप्यात्मवशिगात्रम् । प्रक्षुभितजलधिजलप्रसारमपि लघु निरुंधन्ति ॥ ४० ॥ न च शक्ता अक्लेशेन चैव पुनर्मानसं जेतुं ये । अथ कथमपि तदपि हि जितं जितं खलु तदा सर्वजेतव्यम् ॥ ४१ ॥ किं बहुना । तद्विजये विजित एव दुर्ज्जयो भवत्यात्मा । स पुनर्विजितो जायते परमात्मा परमपदस्वामी ॥ ४२ ॥ इति मनोऽलिमालतिमालिकायां संवेगरंगशालायाम् । परिकर्म्मविधिप्रमुखचतुर्महामूलद्वारायाम् ॥ ४३ ॥ आराधनायाः पञ्चदशप्रतिद्वारमयस्य प्रथमद्वारस्य । चित्तानुशासनमिदं भणितं षष्ठं प्रतिद्वारम् ॥ ४४ ॥ अनुशास्यमानमपि हि चित्तं प्रायेण नित्यवासात् । प्रतिबन्धलेपलिप्तं निरभिष्वङ्गं न भवितुमलम् ॥ ४५ ॥

अनिययविहारमेत्तो ता कित्तेमो समत्थदोसहरं । जं सोचा परिचइउं आलस्समवस्समुज्जुत्तो ॥ ४६ ॥ वसहीसु य उपहीसु य गामे नयरे गणे य सन्निजणे । सव्वत्थ अपडिबन्धो विसुद्धसद्धम्मकरणरई ॥ ४७ ॥ सइ अनिययं विहारं करेज्ज साहू विसेसगुणकंखी । तित्थजत्ताइकरणे जएज्ज तह सावगो वि सया ॥ ४८ ॥ जम्हा निययविहारो सक्खं चिय नत्थि किर गिहत्थस्स । किन्तु गिहत्थो वि अहं दव्वत्थयसारमरिहन्ते ॥४९॥ निक्खमणपमुहतित्थेसु ताव वंदामि तो पवज्जिस्सं । चेचा संगमसेसं आराहणमहव पव्वज्जं ॥ ५० ॥ एवंविहबुद्धीए पसत्थतित्थेसु वच्चमाणस्स । सुट्ठियगवेसणं वा कुणमाणस्स य भवे सो वि ॥ ५१ ॥ तत्थ य जो पव्वज्जं काउं आराहणं समीहइ से । सुट्ठियगवेसणं गणसंकमदारे निदंसिस्सं ॥ ५२ ॥

---

अनियतविहारमितस्तस्मात् कीर्त्तयामः समस्तदोपहरम् । यं श्रुत्वा परित्यज्याऽऽलस्यमवश्यमुद्युक्तः ॥ ४६ ॥ वसतिषु चोपधिषु च ग्रामे नगरे गणे च संज्ञिजने । सर्वत्राप्रतिबन्धो विशुद्धसद्धर्म्मकरणरतः ॥ ४७ ॥ सदाऽनियतं विहारं कुर्यात् साधुर्विशेषगुणाकांक्षी । तीर्थयात्रादिकरणे यतेत तथा श्रावकोऽपि सदा ॥ ४८ ॥ यस्मान्नियतविहारः साक्षादेव नास्ति किल गृहस्थस्य । किन्तु गृहस्थोऽप्यहं द्रव्यस्तवसारमर्हतः ॥ ४९ ॥ निःक्षमणप्रमुखतीर्थेषु तावद् वन्दे ततः प्रव्रजिष्यामि । त्यक्त्वा संगमशेषमाराधनामथवा प्रव्रज्याम् ॥ ५० ॥ एवंविधबुद्ध्या प्रशस्ततीर्थेषु व्रजतः । सुस्थितगवेषणं वा कुर्वाणस्य च भवेत् सोऽपि ॥ ५१ ॥ तत्र च यः प्रव्रज्यां कृत्वाराधनां समीहते तस्य । सुस्थितगवेषणं गणसंक्रमणद्वारे निदर्शयिष्यामि ॥ ५२ ॥

जो पुण गिहट्ठिओ चिय आराहणमेक्कमेव काउमणो । सुट्ठियगवेसणविही वत्तवो तस्स इह चेव ॥ ५३ ॥ अह साहुसावयाणं सवाण वि जिणमयाणुसारीणं । खित्ताओ खित्तमन्नं गच्छंताणं विहीएसो ॥ ५४ ॥ किर जस्स जेण सद्धिं मणसा वयणेण अहव काएणं । किं पि कयं कारियमणुमयं च जं दुक्कडं अत्थि ॥५५॥ थेवं पि तं समच्छं सम्मं खामेति समहिमगंतो । मा होउ कहवि मरणाइए वि वेराणुबन्धो त्ति ॥ ५६ ॥ जइ ताव मुणी गंता वंदित्ता सूरिणो सउवज्झाए। परियायलहू पुण सेसए वि समणे भिवंदित्ता ॥ ५७ ॥ इय भणति जहाहं तुज्झ सन्तियं चेइयाण साहूणं । संघस्स य नयराइसु गच्छंतो वंदणं काहं ॥ ५८ ॥ अहवा गंता जेट्ठो तो तं वंदित्तु बिंति ठियसमणा । अम्हेचयं करेज्जसु चेइयसाहूण वंदणयं ॥ ५९ ॥

---

यः पुनर्गृहस्थित एवाऽऽराधनामेकामेव कर्तुमनाः । सुस्थितगवेषणविधिर्वक्तव्यस्तस्येह चैव ॥ ५३ ॥ अथ साधुश्रावकाणां सर्वेषामपि जिनमतानुसारिणाम् । क्षेत्रात् क्षेत्रमन्यत् गच्छतां विधिरेषः ॥ ५४ ॥ किल यस्य येन सार्द्धं मनसा वचनेनाथवा कायेन । किमपि कृतं कारितमनुमतं च यद् दुष्कृतमस्ति ॥ ५५ ॥ स्तोकमपि तत् समक्षं सम्यक् क्षाम्यति ० ० ० ० । मा भवतु कथमपि मरणादिकेऽपि वैरानुबन्ध इति ॥ ५६ ॥ यदि तावन्मुनिर्गत्वा वन्दित्वा सूरीन् सोपाध्यायान् । पर्यायलघून् पुनः शेषकानपि श्रमणानभिवन्द्य ॥ ५७ ॥ इति भणति यथाहं युष्माकं सम्बन्धिचैत्यानां साधूनाम् । संघस्य च नगरादिषु गच्छन् वन्दनं करिष्यामि ॥ ५८ ॥ अथवा गन्ता ज्येष्ठस्ततस्तं वन्दित्वा वदन्ति स्थितश्रमणाः । अस्माकं कुर्याश्चैत्यसाधूनां वन्दनकम् ॥ ५९ ॥

तत्तो चेइयभवणे गंतुं भत्तीए चेइयाण पुरो । सम्मं तव्वंदणपच्चयमिह कुणइ पणिहाणं ॥ ६० ॥ एमेव सावगो वि हु सम्मं खामियसमच्छवत्थव्वो । सम्मं कयचेइयसूरिसाहुवंदणविहाणो य ॥ ६१ ॥ तद्दिन्नगहियनिरवज्ज-विसयसंदेसगो सपणिहाणो । गामनगरागराइसु महया जाणाइविहवेण ॥ ६२ ॥ नायाज्जियवित्तेणं मब्भुट्ठि-यभूरिधम्मठाणेसु । जिणसासणुन्नइं निच्चमेव परमं पकुव्वन्तो ॥ ६३ ॥ दीणाणाहाण परं अणुकंपादाणओ य आणंदं । उप्पायन्तो धीमं परिभमइ समत्थतित्थेसु ॥ ६४ ॥ तत्थ गिही साहू वि य पासित्ता चेइयाइं तो सम्मं । संघो किरेस वंदइ इय पणिहाणेण पढमं तु ॥ ६५ ॥ काऊणं वंदणं संघसंतियं चेइयाणमुवउत्तो । तो अप्पसंतियं पि हु तदवत्थो चिय कुणति सम्मं ॥ ६६ ॥

---

ततश्चैत्यभवने गत्वा भक्त्या चैत्यानां पुरः । सम्यक् तद्वन्दनप्रत्ययमिह करोति प्रणिधानम् ॥ ६० ॥ एवमेव श्रावकोऽपि हि सम्यक् क्षमितसमस्तवास्तव्यः । सम्यक् कृतचैत्यसूरिसाधुवन्दनविधानश्च ॥ ६१ ॥ तद्दत्तगृहीतनिरवद्यविषयसंदेशकः सप्रणिधानः । ग्रामनगराकरादिषु महता यानादिविभवेन ॥ ६२ ॥ न्यायार्जितवित्तेनाभ्युत्थितभूरिधर्मस्थानेषु । जिनशासनोन्नतिं नित्यमेव परमां प्रकुर्वाणः ॥ ६३ ॥ दीनानाथानां परमनुकम्पादानाच्चानन्दम् । उत्पादयन् धीमान् परिभ्रमति समस्ततीर्थेषु ॥ ६४ ॥ तत्र गृही साधुरपि च दृष्ट्वा चैत्यादि ततः सम्यक् । संघः किलैष वन्दते इति प्रणिधानेन प्रथमन्तु ॥ ६५ ॥ कृत्वा वन्दनं संघसत्कं चैत्यानामुपयुक्तः । तत आत्मसत्कमपि हि तदवस्थ एव करोति सम्यक् ॥ ६६ ॥

अह दव्वखेत्तकालाइयाण संकिन्नया भवे कहवि । ताहे पणिहाणाई संखित्तं पि हु कुणति चेव ॥ ६७ ॥ अह साहुसावगजणं नाणाइगुणागरं भणति दट्ठुं । अमुगत्थाने तुब्भे वंदाविज्जह जिणवरिन्दे ॥६८॥ ते वि ससंभमपाउब्भंतरोमांचकंचुइयकाया । महिवट्ठठवियसीसा सुभत्तिभरनिब्भरमणाय ॥ ६९ ॥ जय तइलोक्कमहापहु ? पभूयगुणरयणसायरजिणिंद ? । इय देवगुणे अहवा नमोत्थुणं एवमाईणि ॥७०॥ सक्कत्थयवयणाइं किन्तंती ताव जाव आगंता । भणइ पुणो आयरियाइ पेसिए धम्मलाभाई ॥ ७१ ॥ अभिवन्दणाणुवन्दणरूवं उचियट्ठिइं ठियजणो ता । कुणंति ततो अन्नोन्नं विसेसपुच्छाइ सुविभासा ॥ ७२ ॥ इय पेरणीयपेरगभावा सुहजोगओ य उभएसिं । सुहबन्धो जयगुरुणा निद्दिट्ठो इट्ठसिद्धिफलो ॥ ७३ ॥

---

अथ द्रव्यक्षेत्रकालादिकानां संकीर्णता भवेत् कथमपि । तदा प्रणिधानादि संक्षिप्तमपि हि करोति सम्यक् ॥ ६७ ॥ अथ साधुश्रावकजनं ज्ञानादिगुणाकरं भणति दृष्ट्वा । अमुकस्थाने यूयं वन्दत जिनवरेन्द्रान् ॥ ६८ ॥ तेऽपि ससंभ्रमप्रादुर्भवद्रोमाञ्चकञ्चुकितकायाः । महीपृष्ठस्थापितशिराः सुभक्तिभरनिर्भरमनसः ॥ ६९ ॥ जय त्रैलोक्यमहाप्रभो ? प्रभूतगुणरत्नसागरजिनेन्द्रः ? । इति देवगुणानथवा नमोऽस्तुणमेवमादीनि ॥ ७० ॥ शक्रस्तववचनानि कुर्वन्ति तावद्यावदागन्ता । भणति पुनराचार्यादिः प्रेषिकान् धर्म्मलाभादिः ॥ ७१ ॥ अभिवन्दनानुवन्दनरूपामुचितस्थितिं स्थितजनास्तदा । ते कुर्वन्त्यन्योन्यं विशेषपृच्छादि सुविभाषाः ॥७२॥ इति प्रेषणीयप्रेरकभावात् शुभयोगतश्चोभयेषाम् । शुभबन्धो जगद्गुरुणा निर्दिष्ट इष्टसिद्धिफलः ॥ ७३ ॥

एयं सामायारिं नाऊण विहीए जे पउंजन्ति । ते चेव एत्थ कुसला सेसा सव्वे अकुसला उ ॥७४॥ इय भणियविहीए गिही हिंडंतो तेसु तेसु देसेसु । अप्पाणए परम्मि य सविसेसे कुणति धम्मगुणे ॥ ७५ ॥ तहाहि—दट्ठूण सावगजणं सविसेसं दव्वभावथयनिरयं । सयमवि सविसेसं चिय तक्करणपरायणो होति ॥ ७६ ॥ तं च तहा विहिनिरयं पए पए पासिउं पवट्टंतं । पवियंभन्ति सुहगुणा धम्मपराणं पराणं पि ॥ ७७ ॥ किंच । तद्दंसणाउ सद्धा पायमसद्धालुणो वि सद्धम्मे । सद्धालुणो सयं पुण संजायति तप्पवित्ती वि ॥७८॥ अथिरा जायन्ति थिरा थिराओ गिण्हन्ति तह विसेसगुणे । अगुणा वि होंति सगुणा सगुणा दढबहुतरगुणा य ॥७९॥ इय जिणदिक्खानिव्वाणनाणतित्थेसु सुप्पसत्थेसु । वंदंतो सव्वन्नू सुट्ठियगुरुणो य पेहन्तो ॥ ८० ॥

---

एतां सामाचारीं ज्ञात्वा विधिना ये प्रयोजयन्ति । ते चैवात्र कुशलाः शेषाः सर्वेऽकुशलास्तु ॥ ७४ ॥ इति भणितविधिना गृही गच्छन् तेषु तेषु देशेषु । आत्मनि परस्मिंश्च सविशेषान् करोति धर्म्मगुणान् ॥ ७५ ॥ तथाहि—दृष्ट्वा श्रावकजनं सविशेषं द्रव्यभावस्तवनिरतम् । स्वयमपि सविशेषमेव तत्करणपरायणो भवति ॥ ७६ ॥ तं च तथा विधिनिरतं पदे पदे दृष्ट्वा प्रवर्त्तमानम् । प्रविजृम्भन्ति शुभगुणा धर्म्मपराणां पराणामपि ॥ ७७ ॥ किञ्च । तद्दर्शनाद् श्रद्धा प्रायः श्रद्धालोरपि सद्धर्म्मे । श्रद्धालोः स्वयं पुनः संजायते तत्प्रवृत्तिरपि ॥ ७८ ॥ अस्थिरा जायन्ते स्थिराः स्थिरा अगृह्णन्ति तथा विशेषगुणान् । अगुणा अपि भवन्ति सगुणाः सगुणा दृढबहुतरगुणाश्च ॥ ७९ ॥ इति जिनदीक्षानिर्वाणज्ञानतीर्थेषु सुप्रशस्तेषु । वन्दमानः सर्वज्ञान् सुस्थितगुरूंश्च पश्यन् ॥ ८० ॥

ता भमति गिही जा कह वि पाविओ सुट्ठिओगुरू परमो । पत्ते य तम्मि हरिसुल्लसंतरोमंचकंचुइओ ॥ ॥ ८१ ॥ संपत्तपावणिज्जं समत्थतित्थोहपूयपावं च । अप्पाणं मन्नंतो विहिणा आलोयणं देज्जा ॥८२॥ तो गुरुजणोवइट्ठं पडिवज्जेज्जा य सम्मं पच्छित्तं । एवं च विचिन्तेज्जा अहो कहं पावकलुसो वि ॥ ८३ ॥ पच्छित्तदाणजलखालणेण नीओ परं विसोहिमहं । निक्कारणकरुणासायरेण एएण मुणिवइणा ॥ ८४ ॥ नूणमिमो जणणिं पि हु जणगं पि हु बन्धवं पि मेत्तं पि । अभिभविऊणं वच्छल्लभावतो विहरति जयम्मि ॥ ८५ ॥ कहमन्नहा अदिट्ठं असुयं देसंतरागयं च ममं । पियपुत्तं पिव एवं बहुमन्नेज्जा महाभागो ॥ ८६ ॥ अह परमविम्हिउप्फुल्ललोयणो पज्जुवासिऊण चिरं । तस्सुवएसे गिण्हिय निमन्तइ गुरुं विहारेण ॥ ८७ ॥

---

तावद् भ्रमति गृही यावत् कथमपि प्राप्तः सुस्थितगुरुः परमः । प्राप्ते च तस्मिन् हर्षोल्लसद्रोमाञ्चकञ्चुकितः ॥ ८१ ॥ संप्राप्तं प्रापणीयं समस्ततीर्थौघपूतपापमिव । आत्मानं मन्यमानो विधिनाऽऽलोचनं दद्यात् ॥८२॥ ततो गुरुजनोपदिष्टं प्रतिपद्येत च सम्यक् प्रायश्चित्तम् । एवं च विचिन्तयेदहो कथं पापकलुषोऽपि ॥ ८३ ॥ प्रायश्चित्तदानजलक्षालनेन नीतः परमविशुद्धिमहम् । निष्कारणकरुणासागरेण एतेन मुनिपतिना ॥८४॥ नूनमयं जननीमपि हि जनकमपि हि बान्धवमपि मित्रमपि। अभिभूय वात्सल्यभावतो विहरति जगति॥ ८५॥ कथमन्यथाऽदृष्टमश्रुतं देशान्तरागतं च माम् । प्रियपुत्रमिवैवं बहु मन्येत महाभागः ॥ ८६ ॥ अथ परमविस्मितोत्फुल्ललोचनः पर्युपास्य चिरम् । तस्योपदेशान् गृहीत्वा निमन्त्रयति गुरुं विहारेण ॥ ८७ ॥

इय ताव पुन्नपब्भारपुन्नवंछस्स सावयवरस्स । कस्सवि निव्विग्घं चिय वंछियसिद्धी हवेज्ज फुडं ॥८८॥ कस्सवि तहा संपट्ठियस्स अवि नाम अंतरा चेव । होज्जा पाणविपत्ती उवक्कमाउ विहिवसेण ॥ ८९ ॥ सुहपणिहाणगुणेणं तित्थाईणं अपूयणेणावि । दुग्गयनारीए इव तस्स प्पफलं तहा वि होज्जा ॥ ९० ॥ तहाहि—कायंदीए पुरीए सुरसिरमणिकिरणविच्छुरियचरणो । चरणपयट्टियलोगो लोगालोगप्पयासकरो ॥ ९१ ॥ करुणामयखीरनिही निहीणउत्तमजणेसु समदिट्ठी । सिद्धत्थपत्थिवसुओ समोसढो सिरिमहावीरो ॥ ९२ ॥ पवरमणिरयणरुइरं नाणाविहधुव्वमाणधवलधयं । सिंहासणाभिरामं सुरेहिं रइयं च ओसरणं ॥ ९३ ॥ तत्थ य पुव्वाभिमुहो ससुरासुरतिजयपूयणिज्जक्कमो । आसीणो जयनाहो भव्वजणविबोहओ वीरो ॥ ९४ ॥

---

इति तावत् पुण्यप्राग्भारपूर्णवाछस्य श्रावकवरस्य । कस्यापि निर्विघ्नमेव वांछितसिद्धिर्भवेत् स्फुटम् ॥ ८८ ॥ कस्यापि तथा संप्रस्थितस्यापि नाम अन्तरा चैव । भवेत् प्राणविपत्तिरुपक्रमायुर्विधिवशेन ॥ ८९ ॥ शुभप्रणिधानगुणेन तीर्थादिनामपूजनेनापि । दुर्गतनार्य्याइव तस्याल्पफलं तथापि भवति ॥ ९० ॥ तथाहि—काकन्द्यां नगर्य्यां सुरशिरोमणिकिरणविच्छुरितचरणः । चरणप्रवर्त्तितलोको लोकालोकप्रकाशकरः ॥ ९१ ॥ करुणामृतक्षीरनिधिर्निहीनोत्तमजनेषु समदृष्टिः । सिद्धार्थपार्थिवसुतः समवसृतः श्रीमहावीरः ॥ ९२ ॥ प्रवरमणिरत्नरुचिरं नानाविधधुन्वद्धवलध्वजम् । सिंहासनाभिरामं सुरै रचितं चावसरणम् ॥ ९३ ॥ तत्र च पूर्वाभिमुखः ससुरासुरत्रिजगत्पूजनीयक्रमः । आसीनो जगन्नाथो भव्यजनविबोधको वीरः ॥ ९४ ॥

अ‍सुरसुरखयरकिंणरनरनरवइणो य पुलइयसरीरा । जिणवन्दणट्ठमचिरा ओसरणमहिं समल्लीणा ॥ ९५ ॥ नयरीजणो वि हरिकरिजाणविमाणाइएसु आरूढो । उब्भडकयसिंगारो तियससमूहो व सोहंतो ॥ ९६ ॥ धूवसमुग्गयवरगन्धकुसुमपडलाइवावडकरेण । किंकरनिकरेण समं झत्ति जिणं वंदिउं चलिओ ॥ ९७ ॥ अह तत्थेव पुरीए वत्थवाए दरिद्दथेरीए । घेत्तूण दारुयाइं इंतीए नगरीबाहिम्मि ॥ ९८ ॥ अच्चंतविम्हियाए पुट्ठो एगो नरो अहो भद्द ?। एगाभिमुहो लोगो कत्थ इमो गन्तुमारद्धो ॥ ९९ ॥ तेण पयंपियं तिजयबन्धुणो धुयकिलेस-कलुसस्स । जम्मजरामरणवल्लीवियाणविच्छेयपरसुस्स ॥२१००॥ सिरिवीरजिणस्स पदारविंदपूयणनिमित्तमेस जणो । वच्चइ सिवसुहकारणधम्मनिसामणनिमित्तं च ॥ १ ॥

---

असुरसुरखचरकिन्नरनरनरपतयश्च पुलकितशरीराः । जिनवन्दनार्थमचिरादवसरणमहीं समलीनाः ॥ ९५ ॥ नगरीजनोऽपि हरिकरियानविमानादिकेष्वारूढः । उद्भटकृतशृंगारस्त्रिदशसमूह इव शोभमानः ॥ ९६ ॥ धूपसमुद्गतवरगन्धकुसुमपटलादिव्याप्रतकरेण । किंकरनिकरेण समं झटिति जिनं वन्दितुं चलितः ॥ ९७ ॥ अथ तत्रैव पुर्यां वास्तव्यया दरिद्रस्त्रिया । गृहीत्वा दारुकान्यायान्त्या नगर्या वहिः ॥ ९८ ॥ अत्यन्तविस्मितया पृष्ट एको नरोऽहो भद्र ? । एकाभिमुखो लोकः कुत्रायं गन्तुमारब्धः ॥ ९९ ॥ तेन प्रजल्पितं त्रिजगद्वन्धोर्धूतक्लेशकालुष्यस्य । जन्मजरामरणवल्लीवितानविच्छेदपरशोः ॥ २१०० ॥ श्रीवीरजिनस्य पदारविन्दपूजननिमित्तमेष जनः । व्रजति शिवसुखकारणधर्म्मनिशामननिमित्तं च ॥ १ ॥

एवं सोच्चा सुहकम्मजोगओ जायभत्तिपब्भारा । सा चिन्तिउं पवत्ता किमिममहमपुण्णा दरिद्दा च ॥ २ ॥ पकरेमि जेण सुविसिट्ठणग्घपूयंगवग्गसामग्गी । नेवत्थि जीए जिणवरचरणुप्पलजुगलमच्चेमि ॥ ३ ॥ अह वा किमणेणं सिंदुवारकुसुमाइं पुव्वदिट्ठाइं । मुहियालब्भाइं लहुं घेत्तूण करेमि जिणपूयं ॥ ४ ॥ ताहे ताइं घेत्तुं वड्ढंतजिणिंदपूयपरिणामा । ओसरणस्साभिमुहं तुरियं गन्तुं समारद्धा ॥ ५ ॥ नवरं अद्धपहे च्चिय अच्चन्तथेरभावविहुरंगी । पंचत्तमुवगया सा वड्ढंतविसुद्धपरिणामा ॥६॥ अह जिणपूयापणिहाणमेत्तविढत्तकुसलकम्मेण । सोधम्मदेवलोए अतुच्छसुरलच्छिमणुपत्ता ॥ ७ ॥ थेरत्तणेण मुच्छं गयत्ति सुढियत्ति वा विचिन्तंतो । अणुकंपाए लोगो जलेण सिंचइ य से अंगं ॥ ८ ॥

---

एवं श्रुत्वा शुभकर्मयोगाज्जातभक्तिप्राग्भारा । सा चिन्तितुं प्रवृत्ता किमियमहमपुण्या दरिद्रा च ॥ २ ॥ प्रकरोमि येन सुविशिष्टानर्घपूजाङ्गवर्गसामग्री । नैवास्ति यया जिनवरचरणोत्पलयुगलमर्चयामि ॥ ३ ॥ अथवा किमनेन सिन्दुवारकुसुमानि पूर्वदृष्टानि । अमूल्यलभ्यानि लघु गृहीत्वा करोमि जिनपूजाम् ॥ ४ ॥ तदा तानि गृहीत्वा वर्धमानजिनेन्द्रपूजापरिणामा । समवसरणस्याभिमुखं त्वरितं गन्तुं समारब्धा ॥ ५ ॥ नवरमर्धपथ्येवात्यन्तं स्थविरभावविधुराङ्गी । पञ्चत्वमुपगता सा वर्धमानविशुद्धपरिणामा ॥ ६ ॥ अथ जिनपूजाप्रणिधानमात्रविवृद्धकुशलकर्मणा । सौधर्मदेवलोकेऽतुच्छसुरलक्ष्मीमनुप्राप्ता ॥ ७ ॥ स्थविरत्वेन मूर्च्छां गतेति शिथिलतयेति वा विचिन्तयन् । अनुकम्पया लोको जलेन सिञ्चति च तस्या अङ्गम् ॥ ८ ॥

अपरिप्फंदं य तयं पलोइयं पुच्छई जिणं भन्ते ?। किं सा जियइ मिया वा वुत्तं नाहेण य मय त्ति ॥ ९ ॥ अह सो थेरीजीवो देवत्तं पाविऊण तव्वेलं। ओहीए सुणिय नियपुव्ववइयरो परमभत्तीए ॥ १० ॥ जयगुरुचरणसरोरुहमभिवन्दिय संनिहिंमि वट्टंतो । लोगस्स दंसिओ भगवया य जह तीए थेरीए ॥ ११ ॥ जीवो देवो एसो त्ति विम्हिओ तो पयंपई लोगो। सुकयविरहे वि कह तीए सुरसिरी एरिसी पत्ता ॥ १२ ॥ नाणं दाणं य तवो सीलं सव्वन्नपूयणं वा वि। सोग्गइनिबन्धणं नाह ? कित्तियं किर तए एयं ॥ १३ ॥ एयं च कहमिमीए सयावि दारिद्दरुंद्दकंदाए। आजम्मदुक्खियाए परपेसत्तोवतत्ताए ॥ १४ ॥ तो जयगुरुणा कहियो पूयापणिहाणगोयरो सव्वो। तव्वुत्तन्तो पुणरवि लोगेण पुच्छिओ सामी ॥ १५ ॥

---

अपरिस्पन्दां च तां प्रलोक्य पृच्छति जिनं भदन्त ? । किं सा जीवति मृता वोक्तं नाथेन च मृतेति ॥ ९ ॥ अथ स स्थविराजीवो देवत्वं प्राप्य तद्वेलायाम्। अवधिना ज्ञात्वा निजपूर्वव्यतिकरः परमभक्त्या ॥ १० ॥ जगद्गुरुचरणसरोरुहमभिवन्द्य सन्निधौ वर्त्तमानः । लोकस्य दर्शितो भगवता च यथा तस्याः स्थविरायाः ॥ ११ ॥ जीवो देव एष इति विस्मितस्ततः प्रजल्पति लोकः । सुकृतविरहेऽपि कथं तया सुरश्रीरीदृशी प्राप्ता ॥ १२ ॥ ज्ञानं दानं च तपः शीलं सर्वज्ञपूजनं वापि । सुरगतिनिबन्धनं नाथ? कीर्त्तितं किल त्वयैतत् ॥ १३ ॥ एतच्च कथमनया सदापि दारिद्रविस्तृतकन्दया । आजन्मदुःखितया परप्रैष्यत्वोपतप्तया ॥ १४ ॥ ततो जगद्गुरुणा कथितः पूजाप्रणिधानगोचरः सर्वः । तद्वृत्तान्तः पुनरपि लोकेन पृष्टः स्वामी ॥ १५ ॥

अन्नाणजिणवरगुणा पूयापणिहाणमेत्तओ चेव । कह भयवं? उप्पन्ना सुरलोयम्मि इमा थेरी ॥ १६ ॥ भणियं जिणेण अमुणियगुणा वि मणिणो जहा पणासिंति । जररोगाइसमुदयं तह जयगुरुणो जिणिंदा वि ॥ १७ ॥ अच्चन्तगुणपहाणत्तणेण सामन्नमेत्तमुणिया वि । बहुमाणपराण पराणमसुहकम्मं पणासिंति ॥ १८ ॥ एत्तोच्चि-यणुन्नाओ एत्थ दव्वत्थवो गिहत्थाणं । एयविरहम्मि जम्हा दंसणसुद्धी वि नेव भवे ॥ १९ ॥ ता मोक्खसो-क्खमूलं पुव्वज्जियपावसेलवज्जसमं । जिणपूयापणिहाणं निहाणमभिवंछियत्थाण ॥ २० ॥ जिणपूयापरिणामो न होंति सुहकम्मुणो अभावम्मि । अच्चंतकंतचिन्तामणिग्गहणिच्छेव मुद्धाण ॥ २१ ॥ ता भो देवाणुपिया? एत्ति-यमेत्ते वि चोज्जमुव्वहह । अज्जंवि एस महप्पा सिवपयमवि पाविही जम्हा ॥ २२ ॥

---

अज्ञातजिनवरगुणा पूजाप्रणिधानमात्रतश्चैव । कथं भगवन्नुत्पन्ना सुरलोक इयं स्थविरा ॥ १६ ॥ भणितं जिनेनाज्ञातगुणा अपि मणयो यथा प्रणाशयन्ति । ज्वररोगादिसमुदयं तथा जगद्गुरवो जिनेन्द्रा अपि ॥ १७ ॥ अत्यन्तगुणप्रधानत्वेन सामान्यमात्रज्ञाना अपि । बहुमानपराणां परेषामशुभकर्म प्रणाशयन्ति ॥ १८ ॥ अत एवानुज्ञातोऽत्र द्रव्यस्तवो गृहस्थानाम् । एतद्विरहे यस्माद्दर्शनशुद्धिरपि नैव भवेत् ॥ १९ ॥ तस्मान्मोक्षसौख्यमूलं पूर्वार्जितपापशैलवज्रसमम् । जिनपूजाप्रणिधानं निधानमभिवांछितार्थानाम् ॥२०॥ जिनपूजा-परिणामो न भवति शुभकर्म्मणोऽभावे । अत्यन्तकान्तचिन्तामणिग्रहणेच्छेव मुग्धानाम् ॥ २१ ॥ तस्माद्भो देवानुप्रिया? एतावन्मात्रेऽपि चोद्यमुद्वहत । अद्याप्येष महात्मा शिवपदमपि प्राप्स्यति यस्मात् ॥ २२ ॥

एसो इओ चइत्ता कुले पहाणम्मि पाविउं जम्मं। सुसाहुसंगईए पव्वज्जिही पवरपव्वज्जं ॥ २३ ॥ तत्तो देवो होही पुणो वि पुण्णाणुबन्धिपुण्णेण। मणुओ एवं अट्ठमभवम्मि नयरम्मि कणगपुरे ॥ २४ ॥ होही पुहवीनाहो कणगज्झयनामगो जयपसिद्धो। सो अन्नया य धन्नो काले सरयम्मि संपत्ते ॥ २५ ॥ इंदमहपेच्छणट्ठा महाविभूईए निग्गओ संतो। अवलोइऊण दद्दुरमहिणा महया गसिज्जंतं ॥ २६ ॥ अहि मवि कुररेणं चण्डचंचुणा कुररमवि करुणरवं। घोरेणमयगरेणं गसिज्जमाणं जमेणे व ॥ २७ ॥ परिचिन्तिही महप्पा मंडुक्क इव इमो जणो हीणो। अहिगारिणा गसिज्जति भीमेण भुयंगमेणेव ॥ २८ ॥ अहिगारी वि गसिज्जति कुररेण व मण्डलस्स अहिवइणो। सो वि य सव्वगासेण अयगरेणं पिव जमेण ॥ २९ ॥

---

एप इतश्च्युत्वा कुले प्रधाने प्राप्य जन्म। सुसाधुसंगत्या प्रव्रजिष्यति प्रवरप्रव्रज्याम् ॥ २३ ॥ ततो देवो भविष्यति पुनरपि पुण्यानुबन्धिपुण्येन। मनुज एवमष्टमभवे नगरे कनकपुरे ॥ २४ ॥ भविष्यति पृथिवीनाथः कनकध्वजनामको जगत्प्रसिद्धः। सोऽन्यदा च धन्यः काले शरदि संप्राप्ते ॥ २५ ॥ इन्द्रमहप्रेक्षणार्थं महाविभूत्या निर्गतः सन्। अवलोक्य दर्दुरमहिना महता ग्रस्यमानम् ॥ २६ ॥ अहिमपि कुररेण चण्डचञ्चुना कुररमपि करुणरवम्। घोरेणाजगरेण ग्रस्यमानं यमेनेव ॥ २७ ॥ परिचिन्तयति महात्मा मण्डूक इवायं जनो हीनः। अधिकारिणा ग्रस्यते भीमेन भुजंगमेनेव ॥ २८ ॥ अधिकारिरपि ग्रस्यते कुररेणेव मण्डलस्याधिपतिना। सोऽपि च सर्वग्रासेनाजगरेणेव यमेन ॥ २९ ॥

इय अनवरतं निपडंतआवयावायपूरिए लोए। भोगप्पसंगवंछा जणस्स ही ही महामोहो ॥ ३० ॥ जम्मणमरणविमुक्को तइलोक्कंमि न विज्जए कोइ। वेरगं तह वि न अत्थि अहह मणुयाण मूढत्तं ॥ ३१ ॥ इय चिन्तिऊण रज्जं रट्ठं अंतेउरं पुरं चेचा। समणो होही सिद्धिं च पाविही खवियकम्मं सो ॥ ३२ ॥ एवमरिहंतपूयापणिहाणं पि हु हवेज्ज मोक्खकरं। पत्तो य भन्नइ इहं पूयापणिहाणओ चेव ॥ ३३ ॥ तित्थाण पूयणफलं सड्ढो पावेज्ज अद्धमग्गे वि। पंचत्तं संपत्तो वि कह वि तिव्वावयवसेण ॥ ३४ ॥ एवं आलोयणपरिणओ वि संपट्ठिओ गुरुसयासं। जइ अंतरा वि असुहो हवेज्ज आराहओ तहवि ॥ ३५ ॥ आलोयणापरिणओ सम्मं संपट्ठिओ गुरुसयासे। जइ अंतरा स कालं करेज्ज आराहओ तह वि ॥ ३६ ॥

---

इत्यनवरतं निपतदापद्वातपूरिते लोके। भोगप्रसङ्गवांछा जनस्य धिग् धिङ् महामोहः ॥ ३० ॥ जन्ममरणविमुक्तस्त्रैलोक्येऽपि न विद्यते कोऽपि। वैराग्यं तथापि नास्त्यहह मनुजानां मूढत्वम् ॥ ३१ ॥ इति चिन्तयित्वा राज्यं राष्ट्रमन्तःपुरं पुरं त्यक्त्वा। श्रमणो भविष्यति सिद्धिं च प्राप्स्यति क्षपितकर्म्मा सः ॥ ३२ ॥ एवमर्हत्पूजाप्रणिधानमपि हि भवेन्मोक्षकरम्। पात्रश्च भण्यत इह पूजाप्रणिधानतश्चैव ॥ ३३ ॥ तीर्थानां पूजनफलं श्राद्धः प्राप्नोत्यर्द्धमार्गेऽपि। पञ्चत्वं संप्राप्तोऽपि कथमपि तीव्रापद्वशेन ॥ ३४ ॥ एवमालोचनपरिणतोऽपि संप्रस्थितो गुरुसकाशम्। यद्यन्तराप्यसुखो भवेदाराधकस्तथापि ॥ ३५ ॥ आलोचनापरिणतः सम्यक् संप्रस्थितो गुरुसकाशे। यद्यन्तरा स कालं करोत्याराधकस्तथापि ॥ ३६ ॥

एवं आलोयणपरिणयस्स संपट्ठियस्स वि गुरुसयासे । असुहो भवेज्ज अहवा मरेज्ज आराहओ तह वि ॥३७॥ सल्लं उद्धरिउं मणो संवेगुव्वेयतिवसद्धाए । जं जायइ सुद्धिहेउं सो तेणाराहओ होति ॥ ३८ ॥ एवं तवस्सिणो वि हु आलोयणापरिणयस्स इंतस्स । गुरुणो व अप्पणो वा वियलत्ते होज्ज संसोही ॥ ३९ ॥ अहवा साहु-गिहीणं दोण्ह वि साहारणे गुणे पायं । अणिययविहारजणिए सव्वन्नुमए इमे सुणह ॥ ४० ॥ दंसणसोही ।१। थिरकरण ।२। भावण ।३। अइसयत्थ ।४। कुसलत्थं ।५। जणवयपरिछणा वि य ।६। अणिययवासे गुणा होंति ॥ ४१ ॥ दार गाहा । निक्खमणनाणनिव्वाणठाणचिइचिन्धजम्मभूमीओ । पेच्छंतो उ जिणाणं सुवि-सुद्धं दंसणं कुणति ॥ ४२ ॥

---

एवमालोचनपरिणतस्य संप्रस्थितस्यापि गुरुसकाशे । असुखो भवेदथवा म्रियेत आराधकस्तथापि ॥ ३७ ॥ शल्यमुद्धर्तुं मनः संवेगोद्वेगतीव्रश्रद्धया । यज्जायते शुद्धिहेतु स तेनाराधको भवति ॥ ३८ ॥ एवं तपस्विनोऽपि ह्यालोचनापरिणतस्य गच्छतः । गुरोर्वाऽऽत्मनो वा विकलत्वे भवेत् संशुद्धिः ॥ ३९ ॥ अथवा साधुगृहिणोरुभयोरपि साधारणान् गुणान् प्रायः । अनियतविहारजनितान् सर्वज्ञमतानिमान् शृणुत ॥ ४० ॥ दर्शनशुद्धिस्थिरकरण–भावनातिशयार्थकुशलार्थम् । जनपदपरीक्षणापि चानियतवासे गुणा भवन्ति ॥ ४१ ॥ द्वारगाथा ॥ निष्क्रमणज्ञाननिर्वाणस्थानचैत्यचिह्नजन्मभूमयः । पश्यन् तु जिनानां सुविशुद्धं दर्शनं करोति ॥ ४२ ॥

दारं । संवेगं संविग्गाणं जणइ इय सुविहिओ सुविहियाण । अत्थिरमईणं य पुणो जणेइ धम्मम्मि थिरीकरणं ॥ ४३ ॥ संविग्गपरे पासिय पियधम्मपरे यवज्जभीरू य । सयमवि पियथिरधम्मो पायं विहरं तओ होति ॥ ४४ ॥ दारं । चरिया छुहा य तण्हा सीयं उण्हं च भावियं होति । अहियासिया य सेज्जा सम्मं अणिययविहारेण ॥ ४५ ॥ दारं । सुतत्थथिरीकरणं अइसइयत्थाण होति उवलंभो । अइसइयसुयहराणं पलोयणे विहरमाणस्स ॥ ४६ ॥ दारं । निक्खमणपवेसाइसु आयरियाणं च बहुप्पयाराणं । सामायारीकुसलो जायति गणसंपवेसेण ॥ ४७ ॥ दारं । साहूणं सुहविहारो निरवज्जो जत्थ सुलहवित्ती य । तं खेत्तं विहरंतो नाही आराहणाजोग्गं ॥ ४८ ॥

---

द्वारम् । संवेगं संविग्नानां जनयतीति सुविहितः सुविहितानाम् । अस्थिरमतीनां च पुनर्जनयति धर्म्मे स्थिरीकरणम् ॥४३॥ संविग्नपरान् दृष्ट्वा प्रियधर्म्मपरांश्चावद्यभीरूंश्च । स्वयमपि प्रियस्थिरधर्म्मः प्रायो विहरन् ततो भवति ॥ ४४ ॥ द्वारं । चर्य्या क्षुधा च तृष्णा शीतमुष्णं च भावितं भवति । अध्यासिता च शय्या सम्यगनियतविहारेण ॥ ४५ ॥ द्वारं । सूत्रार्थस्थिरीकरणमतिशयार्थानां भवत्युपलम्भः । अतिशयसूत्रधराणां प्रलोकने विहरमाणस्य ॥ ४६ ॥ द्वारं । निष्क्रमणप्रवेशादिष्वाचार्याणां च बहुप्रकाराणाम् । सामाचारीकुशलो जायते गणसंप्रवेशेन ॥ ४७ ॥ द्वारं । साधूनां शुभविहारो निरवद्यो यत्र सुलभवृत्तिश्च । तं क्षेत्रं विहरन् ज्ञास्यति आराधनायोग्यम् ॥ ४८ ॥

एमाइयं गुणगणं समीहमाणेण साहुणा निच्चं । अणिययविहारचरियाए वट्टियव्वं सइ बलम्मि ॥४९॥ जो पुण रसाइगिद्धीवसेण बलवं पि इह पमाएज्ज । न स केवलं मुणीहिं मुंचेज्ज गुणेहिं वि अवस्सं ॥ ५० ॥ पच्चागयसुहभावो सो च्चिय इह उज्जओ मुणि गुणेहिं । परिवारिज्जइ सज्जो उभयत्थ सेलगो नायं ॥ ५१ ॥ तहाहि—सेलगपुरम्मि नगरे आसि निवो सेलगो पुरा तस्स । पउमावई य देवी ताण सुओ मड्डुगो नाम ॥ ५२ ॥ थावच्चापुत्तमुणिन्दचरणसेवोवलद्धजिणधम्मो । सो राया नयसारं भुंजति निरवज्जरज्जसुहं ॥ ५३ ॥ एगम्मि य पत्थावे थावच्चापुत्तसूरिपयवित्तो । सुयसूरी विहरंतो समागओ तत्थ नयरम्मि ॥ ५४ ॥ मियवणउज्जाणम्मि य समोसढो मुणिजणो च्चिय पएसे । मुणियागमो य राया समागतो वन्दणनिमित्तं ॥ ५५ ॥

---

इत्यादिकं गुणगणं समीहमानेन साधुना नित्यम् । अनियतविहारचर्यया वर्त्तितव्यं सति बले ॥ ४९ ॥ यः पुना रसादिगृद्धिवशेन वलवानपीह प्रमादयति । न स केवलं मुनिभिर्मुच्यते गुणैरप्यवश्यम् ॥ ५० ॥ प्रत्यागतशुभभावः स एवेहोद्यतो मुनिर्गुणैः । परिवार्येते सद्य उभयत्र शेलको न्यायम् ॥ ५१ ॥ तथाहि—शेलकपुरे नगर आसीन्नृपः शेलकः पुरा तस्य । पद्मावती च देवी तयोः सुतो मडुको नाम ॥ ५२ ॥ थावच्चापुत्रमुनीन्द्रचरणसेवोपलब्धजिनधर्मः । स राजा नयसारं भुञ्जति निरवद्यराज्यसुखम् ॥ ५३ ॥ एकस्मिंश्च प्रस्तावे थावच्चापुत्रसूरिपदवृत्तिः । श्रुतसूरिर्विहरन् समागतस्तत्र नगरे ॥ ५४ ॥ मृगवनोद्याने च समवसृतो मुनिजश्चैव प्रदेशे । ज्ञातागमश्च राजा समागतो वन्दननिमित्तम् ॥ ५५ ॥

तिपयाहिणापुरस्सर मह तच्चलणुप्पले नमंसित्ता । हरिसवसपुलइयंगो आसीणो धम्मसवणत्थं ॥ ५६ ॥ मुणिवइणा वि हु संसारपरमनिव्वेयकारिणी तस्स । विसयविरागुप्पायणपवणा संमोहनिमहणी ॥५७॥ संसारसमुत्थसमत्थवत्थुविगुणत्तपयडणपहाणा । धम्मकहा सुहवयणवित्थरेणं कया सुचिरं ॥ ५८ ॥ पडिबुद्धो नरनाहो परमपमोयउब्भवन्तरोमंचो । गुरुचरणे पणमित्ता जंपिउमेवं समाढत्तो ॥ ५९ ॥ भयवं ? जाव नियसुयं ठवेमि रज्जम्मि ताव तुह पासे । उज्झित्ता रज्जमहं पव्वजं संपवज्जामि ॥ ६० ॥ जुत्तमिणं जाणियभवठितीणं तुम्हारिसाण नरनाह ? । ता एत्तो पडिबन्धं मा काहिसि थेवम वि एत्थ ॥ ६१ ॥ एवं गुरुणा अणुसासिओ य राया गयो सगेहम्मि । नियपयम्मि निवेसइ महुगनामं वरकुमारं ॥ ६२ ॥

---

त्रिप्रदक्षिणापुरस्सरमथ तच्चरणोत्पलौ नत्वा । हर्षवशपुलकिताङ्ग आसीनो धर्म्मश्रवणार्थम् ॥ ५६ ॥ मुनिपतिनापि हि संसारपरमनिर्वेदकारिणी तस्य । विपयविरागोत्पादनप्रवणा संमोहनिर्मथिनी ॥ ५७ ॥ संसारसमुत्थसमस्तवस्तुविगुणत्वप्रकटनप्रधाना । धर्म्मकथा शुभवचनविस्तरेण कृता सुचिरम् ॥ ५८ ॥ प्रतिबुद्धो नरनाथः परमप्रमोदोद्भवद्रोमाञ्चः । गुरुचरणौ प्रणम्य जल्पितुमेवं समारब्धः ॥ ५९ ॥ भगवन् ? यावन्निजसुतं स्थापयामि राज्ये तावत्ते पार्श्वे । उज्झित्वा राज्यमहं प्रव्रज्यां संप्रपत्स्यामि ॥ ६० ॥ युक्तमिदं ज्ञातभवस्थितीनां युष्मादृशा नरनाथ ? । तस्मादितः प्रतिबन्ध मा कार्षीत् स्तोकमप्यत्र ॥ ६१ ॥ एवं गुरुणानुशासितश्च राजा गतः स्वगेहे । निजपदे निवेशयति मद्दुकनामानं वरकुमारम् ॥ ६२ ॥

तत्तो कयसिंगारो सहस्सनरवाहिणीए सिवियाए। आरूढो पंथयपमुहमंतिसयपंचगाणुगओ ॥६३॥ गन्तूण गुरुसमीवे उज्झियसंगो पवज्जई दिक्खं। संवेगसारमणुदिणमुज्जमई य धम्मकम्मेसु ॥ ६४ ॥ कालक्कमेण एक्कारसा वि अंगाणि सो अहिज्जेति। दुक्करतवकरणपरो विहरइ महीए वाउव्व ॥ ६५ ॥ अह पंथयपमुहाणं पंचण्हं मुणिसयाणं सुयसूरी। तं सूरित्ते ठविउं साहुसहस्सेण परियरिओ ॥ ६६ ॥ विहरित्ता बहुकालं पुंडरियमहानगे कयाणसणो। असुरसुरविहियपूओ निव्वाणपयं समणुपत्तो ॥ ६७ ॥ सो पुण सेलगसूरी तवोविसेसेहिं अरसविरसेहिं। पाणेहिं भोगणेहिं य जातो धम्मट्ठिमेत्ततणू ॥ ६८ ॥ गहिओ रोगेहिं पि य तहावि सत्ताहिओ त्ति विहरंतो। सेलगपुरे पहुत्तो समोसढो मिगवणुज्जाणे ॥ ६९ ॥

---

ततः कृतशृंगारः सहस्रनरवाहिन्यां शिबिकायाम्। आरूढः पान्थकप्रमुखमन्त्रिशतपंचकानुगतः ॥ ६३ ॥ गत्वा गुरुसमीपे उज्झितसङ्गः प्रपद्यते दीक्षाम्। संवेगसारमनुदिनमुद्यच्छति च धर्म्मकर्म्मसु ॥ ६४ ॥ कालक्रमेणैकादशाप्यङ्गानि सोऽधीते। दुष्करतपःकरणपरो विहरति मह्यां वायुरिव ॥ ६५ ॥ अथ पान्थकप्रमुखानां पञ्चानां मुनिशतानां श्रुतसूरिः। तं सूरित्वे स्थापयित्वा साधुसहस्रेण परिचलितः ॥ ६६ ॥ विहृत्य बहुकालं पुंडरीकमहानगे कृतानशनः। असुरसुरविहितपूजो निर्वाणपदं समनुप्राप्तः ॥ ६७ ॥ स पुनः शेलकसूरिस्तपोविशेषैररसविरसैः। पानैर्भोजनैश्च जातो धर्म्मास्थिमात्रतनुः ॥ ६८ ॥ गृहीतो रोगैरपि च तथापि सत्त्वाधिक इति विहरन्। शेलकपुरे प्राप्तः समवसृतो मृगवनोद्याने ॥ ६९ ॥

पिइपडिवन्धेण य मड्डुगो निवो वन्दणट्ठया पत्तो । सोऊण य धम्मकहं पडिबुद्धो सावगो जातो ॥ ७० ॥ अह सो सूरिं दट्ठुं सरोगमच्चंतकिससरीरं च । जंपेति अहं भन्ते अहापवत्तेण ते गिच्छं ॥ ७१ ॥ कारेमि तुम्ह एसणियभत्तपाणोसहाइएणं ति । पडिसुणियं मुणिवइणा कारविया तयणु से किरिया ॥ ७२ ॥ अह पगुणीभूयतणू वि पवलरसगारवाइपडिवद्धो। सूरी मुणिगुणविमुहो तत्थेव ठाउमारद्धो॥ ७३ ॥ पंथगवज्जेहिं ततो परिचत्तो सेसएहिं साहूहिं । अह चउम्मासगरयणीए निब्भरं सुहपसुत्तो सो ॥ ७४ ॥ चउमासियाइयारं खामेउं पंथगेण सीसेणं । छिक्को चलणेसु ततो झत्ति विउद्धो भणति कुद्धो॥ ७५ ॥ को एस दुरायारो मं पाएसुं सिरेण घट्टेति । तेणं भणियं भन्ते पंथगनामो अहं साहू ॥ ७६ ॥

---

पितृप्रतिवन्धेन च मह्रुको नृपो वन्दनार्थाय प्राप्तः । श्रुत्वा च धर्म्मकथां प्रतिबुद्धः श्रावको जातः ॥ ७० ॥ अथ सँ सूरिं दृष्ट्वा सरोगमत्यन्तकृशशरीरं च । जल्पत्यहं भदन्त! यथाप्रवर्त्तेन तव चिकित्साम् ॥ ७१ ॥ करोमि युष्माकमेषणीयभक्तपानौषधादिकेनेति । प्रतिश्रुतं मुनिपतिना कारिता तदनु तस्य क्रिया ॥ ७२ ॥ अथ प्रगुणीभूततनुरपि प्रबलरसगौरवातिप्रतिवद्धः । सूरिर्मुनिगुणविमुखस्तत्रैव स्थातुमारब्धः ॥ ७३ ॥ पान्थकवर्ज्यैस्ततः परित्यक्तः शेषकैः साधुभिः । अथ चातुर्मासिकरजन्यां निर्भरसुखप्रसुप्तः सः ॥ ७४ ॥ चातुर्मासिकातिचारं क्षामयितुं पान्थकेन शिष्येण। स्पृष्टश्चरणेषु ततो झटिति विबुद्धो भणति क्रुद्धः ॥ ७५ ॥ क एष दुराचारो मां पादेषु शिरसा घट्टयति । तेन भणितं भदन्त? पन्थको नामाहं साधुः ॥ ७६ ॥

खामेमि चउम्मासियमेक्कसि खमह न पुणो इमं काहं। अह संवेगोवगओ सूरी इय भणिउमाढत्तो ॥ ७७ ॥ रसगारवाइविसविहयचेयणो सुट्ठुबोहिओ तुमए । पंथय ता कयमेत्तो एत्थावत्थाणसोक्खेण ॥ ७८ ॥ अह विहरिउमारद्धो स महप्पा अणिययाए वित्तीए। विहरंतो परिचरिओ पुणरवि पोराणसिस्सेहिं ॥ ७९ ॥ कालंतरे य विहुणियरयममलो मलियपबलमोहभडो। सेत्तुञ्जपव्वयम्मि निव्वाणमणुत्तरं पत्तो ॥ ८० ॥ इय दोसगुणे नाउं सीयलउज्जयविहारचरियाए । अविहारपक्खमासज्ज को णुवट्टेज्ज कुसलत्थी ॥ ८१ ॥ किंच ॥ पडिबन्धो लहुयत्तं न जणुवयारो न देसविन्नाणं। नाणाराहणमेए दोसा अविहारपक्खम्मि ॥ ८२ ॥ कालाइदोसओ पुण न दव्वओ एस कीरई नियमा। भावेण उ कायव्वो संथारगवच्चयाईहिं ॥ ८३ ॥

---

क्षामयामि चातुर्मासिकमेकं क्षमयत न पुनरिमं करिष्यामि। अथ संवेगोपगतः सूरिरिति भणितुमारब्धः ॥ ७७ ॥ रसगौरवातिविषविहतचेतनः सुप्रबोधितस्त्वया। पन्थक ? तस्मात् कृतमितोऽत्रावस्थानसौख्येन ॥ ७८ ॥ अथ विहर्तुमारब्धः स महात्माऽनियतया वृत्त्या। विहरन् परिचरितः पुनरपि पौराणशिष्यैः ॥ ७९ ॥ कालान्तरे च विधूतरजा अमलो मलितप्रबलमोहभटः। शत्रुंजयपर्वते निर्वाणमनुत्तरं प्राप्तः ॥ ८० ॥ इति दोषगुणान् ज्ञात्वा शीतलोद्यतविहारचर्ययोः । अविहारपक्षमासाद्य कोऽनुवर्त्तेत कुशलार्थी ॥ ८१ ॥ किञ्च। प्रतिबन्धो लघुत्वं न जनोपकारो न देशविज्ञानम्। नाज्ञाराधनमेते दोषा अविहारपक्षे ॥ ८२ ॥ कालादिदोषात् पुनर्न द्रव्यत एष क्रियते नियमात्। भावेन तु कर्त्तव्यः संस्तारक प्रत्ययादिभिः ॥ ८३ ॥

इय पावकलिलजलविब्भमाए संवेगरंगसालाए । परिकम्मविहीपामोक्खचउमहामूलदाराए ॥ ८४ ॥ आराहणाए पनरसपडिदारमयस्स पढमदारस्स । अणिययविहारनामं सत्तमदारं समत्तमिमं ॥ ८५ ॥ अणिययविहारचरिया एसा गिहिसाहुगोयरा भणिया । संपइ नरिंदविसयं एयं चिय किं पि कित्तेमि ॥ ८६ ॥ जम्हा को वि हु चिरभूरिसुकयसंभारभाविकल्लाणो । नरनाहो वि य होउं अच्चंतं पसमरसरसिओ ॥ ८७ ॥ परलोयभीरुचित्तो सम्मं विसकप्पकलियविसयसुहो । मोक्खसुहबद्धबुद्धी आराहणकरणमीहेज्जा ॥ ८८ ॥ तस्स सए चिय देसे जिणिन्दबिंबाइं वंदमाणस्स । होज्ज अणिययविहारो परदेसे । विग्घसब्भावा ॥ ८९ ॥ तहाहि ॥ करिघडुब्भडसुहडोहतुरयरहवूहपरिवुडे तम्मि । परदेसेसु वि तित्थाइं वंदिउं संपयट्टम्मि ॥ ९० ॥

---

इति पापकलिलजलविभ्रमायां संवेगरंगशालायाम् । परिकर्मविधिप्रमुखचतुर्महामूलद्वारायाम् ॥ ८४ ॥ आराधनायाः पञ्चदशप्रतिद्वारमयस्य प्रथमद्वारस्य । अनियतविहारनाम सप्तमद्वारं समाप्तमिदम् ॥ ८५ ॥ अनियतविहारचरिकैषा गृहिसाधुगोचरा भणिता । संप्रति नरेन्द्रविषयामेतामेव किमपि कीर्त्तयामि ॥ ८६ ॥ यस्मात् कोऽपि हि चिरभूरिसुकृतसंभारभाविकल्याणः । नरनाथोऽपि च भूत्वाऽत्यन्तं प्रशमरसरसिकः ॥ ८७ ॥ परलोकभीरुचित्तः सम्यग्विषकल्पकलितविषयसुखः । मोक्षसुखबद्धबुद्धिराराधनाकरणमीहते ॥ ८८ ॥ तस्य स्वके एव देशे जिनेन्द्रबिम्बानि वन्दमानस्य । भवत्यनियतविहारः परदेशे विघ्नसद्भावात् ॥ ८९ ॥ तथाहि—करिघटोद्भटसुभटौघतुरगरथव्यूहपरिवृते तस्मिन् । परदेशेष्वपि तीर्थानि वन्दितुं संप्रवृत्ते ॥ ९० ॥

रज्जावहारमासंकिऊण पडिनरवई पकुप्पेज्जा । हीरेज्ज च तद्देसो पडिरिउणा सामिरहिओ त्ति ॥ ९१ ॥ तम्हा भत्ते गुणसंगयम्मि सत्थत्थबोहकुसलम्मि । मंतिम्मि रज्जभारं आरोविय अप्पतुल्लम्मि ॥९२॥ साहियजेयव्वगणो सुत्थीकयमण्डलमहाकोसो । नियनियनियोगेसु निउत्तभत्तिमन्तप्पहाणजणो ॥ ९३ ॥ अच्चंतपवरपूयापुरस्सरं लोकपीडमकरेंतो । जिणभवणाइं वन्देज्जा नियदेसे च्चिय नरिंदो ॥ ९४ ॥ अह तं अदुट्ठदोघट्टघट्टपडिरुद्धरायपहपसरं । सहरिसहरिहेसारवखरखुररवभरियनहविवरं ॥ ९५ ॥ पम्मुक्कहक्कापोक्कारघोरपाइक्कचक्कपरिकिन्नं । पउरसियछत्तच्छाइयदिणयरकरपहकराभोगं ॥ ९६ ॥ नियदेसट्ठियजिणभवणाण पेच्छणं आयरेण कुणमाणं । दट्ठुं धम्मपसंसं के के मणुया पकुप्पंति ॥ ९७ ॥

---

राज्यापहारमाशंक्य प्रतिनरपतिः प्रकुप्यति । ह्रियते च तद्देशः प्रतिरिपुणा स्वामिरहित इति ॥ ९१ ॥ तस्माद् भक्ते गुणसंगते शस्त्रार्थबोधकुशले । मन्त्रिणि राज्यभारमारोप्यात्मतुल्ये ॥ ९२ ॥ साधितजेतव्यगणः सुस्थीकृतमण्डलो महाकोशः । निजनिजनियोगेषु नियुक्तभक्तिमत्प्रधानजनः ॥ ९३ ॥ अत्यन्तप्रवरपूजापुरस्सरं लोकपीडामकुर्वन् । जिनभवनानि वन्देत निजदेश एव नरेन्द्रः ॥ ९४ ॥ अथ तमदुष्टदौर्घट्टघटाप्रतिरुद्धराजपथप्रसारम् । सहर्षहरिह्रेषारवखरखुररवभरितनभोविवरम् ॥ ९५ ॥ प्रमुक्तहक्कापूत्कारघोरप्राकृतचक्रपरिकीर्णम् । प्रचुरसितछत्रच्छादितदिनकरकरप्रभाकराभोगम् ॥ ९६ ॥ निजदेशस्थितजिनभवनानां प्रेक्षणमादरेण कुर्वाणम् । दृष्ट्वा धर्मप्रशंसां के के मनुजाः प्रकुप्यन्ति ॥ ९७ ॥

के वा उत्तमजणपूइयंति सोमं ति मोक्खहेउं ति । वीमंसिऊण जिणधम्ममेक्कचित्तान गेण्हंति ॥ ९८ ॥ एवं च सो महप्पा संपाइयपवरधम्मकायव्वो । कइया वि विसयनिंदं करेइ जिणभणियनीईए ॥ ९९ ॥ कइया वि महामुणिपवरचरियमेगग्गमाणसो सुणति । कइयावि मंतिसामन्तसंगओ कुणति जणचिन्तं ॥ २२०० ॥ धम्मविरोहं कइया वि पेच्छिउं सव्वहा निरुंभेति । कइयावि निययपरियणमुवउत्तो एवमुल्लवति ॥ १ ॥ हंहो निउणं पेहह संसारे सारमत्थि नो किं पि । जं तडिचवलं जीयं तरंगतरलाओ रिद्धीओ ॥ २ ॥ अवरोप्परपडिवन्धा वन्धा इव दिन्ति निव्वुइं नेव । निच्चपगुणो य मच्चू निस्सारो वत्थुपरिणामो ॥ ३ ॥ कम्मविपागो अच्चंतभीसणो सोक्खसंभवो तुच्छो । असंखदुक्खकारी सेविज्जंतो पमाओ य ॥ ४ ॥

---

के वोत्तमजनपूजितमिति सौम्यमिति मोक्षहेतुमिति । विमन्य जिनधर्म्ममेकचित्तानं गृह्णन्ति ॥ ९८ ॥ एवं च स महात्मा संपादितप्रवरधर्म्मकर्त्तव्यः । कदापि विषयनिन्दां करोति जिनभणितनीत्या ॥ ९९ ॥ कदापि महामुनिप्रवरचरितमेकाग्रमानसः शृणोति । कदापि मन्त्रिसामन्तसंगतः करोति जनचिन्ताम् ॥ २२०० ॥ धर्म्मविरोधं कुत्रापि प्रेक्ष्य सर्वथा निरुणद्धि । कुत्रापि निजकपरिजनमुपयुक्त एवमुल्लपति ॥ १ ॥ भो! भो! निपुणं पश्यत संसारे सारमस्ति न किमपि । यत् तडिच्चपलं जीवनं तरङ्गतरला ऋद्धयः ॥ २ ॥ अपरोपरप्रतिवन्धाद् वन्धा इव ददति निर्वृतिं नैव । नित्यप्रगुणश्च मृत्युर्निस्सारो वस्तुपरिणामः ॥ ३ ॥ कर्म्मविपाकोऽत्यन्तभीषणः सुखसंभवस्तुच्छः । असंख्यदुःखकारी सेव्यमानः प्रमादश्च ॥ ४ ॥

दुल्लहो य मणुस्सभवो दुलहा सद्धम्मकम्मसामग्गी । नीसेसदोसकारणअतुच्छमिच्छत्तचाएण ॥५॥ तइलोक्कचक्कमढणविहत्तजयकाममल्लमलणखमो । दुलहो देवो भवजलहितारगो वीयरागो वि ॥ ६ ॥ दुलहा विमुक्कसंगा गुरुणो सवन्नुसासणं दुलहं । लद्धे वि एत्थ धम्मुज्जमो न जं तं महच्छरियं ॥ ७ ॥ एवं समीववत्तिणमणुसासित्ता जणं स कइया वि । गीयत्थे संविग्गे मुणिवइणो पज्जुवासेइ ॥८॥ ते वि य गम्भीरुत्तीहिं जुत्तिजुत्ताहिं वागरिन्ति जहा । नरवर? पयईए च्चिय चीमं तुम्हारिसो पुरिसो ॥ ९ ॥ जिणवयणाओ ना उं निबन्धणं असुहकम्मबन्धस्स । अवराहकरे वि परे न पउस्सेज्जा मणागं पि ॥ १० ॥ नमिरनरिंदामरमउडलग्गरयणप्पहासिल्लं । चक्कधरसुरपहुत्तं पि मोक्खकंखी न कंखेज्जा ॥ ११ ॥

---

दुर्लभश्च मनुष्यभवो दुर्लभा सद्धर्म्मकर्म्मसामग्री । निःशेषदोषकारणातुच्छमिथ्यात्वत्यागेन ॥ ५ ॥ त्रैलोक्यचक्रावमथनविक्षिप्तजयकाममल्लमलनक्षमः । दुर्लभो देवो भवजलधितारको वीतरागोऽपि ॥ ६ ॥ दुर्लभा विमुक्तसंगा गुरवः सर्वज्ञशासनं दुर्लभम् । लब्धेऽप्यत्र धर्म्मोद्यमो न यत्तन्महाश्चर्यम् ॥ ७ ॥ एवं समीपवर्त्तिनमनुशिष्य जनं स कदाचिदपि । गीतार्थान् संविग्नान् मुनिपतीन् पर्युपासयति ॥ ८ ॥ तेऽपि च गम्भीरोक्तिभिर्युक्तियुक्ताभिः कथयन्ति यथा । नरवर? प्रकृत्यैव धीमान् युष्मादृशः पुरुषः ॥ ९ ॥ जिनवचनाद् ज्ञात्वा निवन्धनमशुभकर्म्मवन्धस्य । अपराधकृतेऽपि परे न प्रद्विषीत मनागपि ॥ १० ॥ नमितनरेन्द्रामरमुकुटलग्नरत्नप्रभावत्त्वम् । चक्रधरसुरप्रभुत्वमपि मोक्षाकांक्षी न कांक्षेत ॥ ११ ॥

सारीरमाणसाणेगतिक्खदुक्खोहखोहपउराओ । गुत्तिट्ठिओ व्व मुत्तिं चिन्तेज्जा पयइभीमभवा ॥ १२ ॥
दट्ठूण य दुक्खत्ते तद्दुक्खालिंगिओ व्व सव्वंगं । करुणापहाणचित्तो दीणाणाहे णुकंपेज्जा ॥ १३ ॥ जीवाजीवाइ-
समत्थवत्थुवित्थारमवितहं सम्मं । मन्नेज्ज जिणाणाए सम्मत्तविसुद्धिमिच्छंतो ॥ १४ ॥ कामो कोहो लोहो
हरिसो माणो मओ य इय रूवं । दरियारिछक्कमन्तरमलद्धपसरं सया कुज्जा ॥ १५ ॥ सव्वाउ वि किरियाओ
किलिट्ठचित्तस्स होंति विहला तो । तस्साफल्लकए ता सयावि सुद्धं धरेज्ज मणं ॥ १६ ॥ विसपरिभावियधारा
करालकरवालतच्छियंगो व्व । संजायइ जीवपरो न तं गिरं कह वि भासेज्जा ॥ १७ ॥ न कयाइ कुलपसूओ
सुहलेसविमोहिओ महासत्तो । खणभंगिसरीरेणं किलिट्ठचेट्ठं अणुट्ठेज्जा ॥ १८ ॥

---

शारीरमानसानेकतीक्ष्णदुःखौघक्षोभप्रचुरात् । गुप्तिस्थित इव मुक्तिं चिन्तेत् प्रकृतिभीमभवात् ॥ १२ ॥ दृष्ट्वा च दुःखार्त्तान् तद्दुःखा-
लिङ्गित इव सर्वाङ्गम् । करुणाप्रधानचित्तो दीनानाथाननुकम्पेत ॥ १३ ॥ जीवाजीवादिसमस्तवस्तुविस्तारमवितथं सम्यक् । मन्येत
जिनाज्ञया सम्यक्त्वविशुद्धिमिच्छन् ॥१४॥ कामः क्रोधो लोभो हर्षो मानो मदश्चेति रूपम् । दृप्तारिषट्कमन्तरमलब्धप्रसरं सदा कुर्यात्
॥ १५ ॥ सर्वा अपि क्रियाः क्लिष्टचित्तस्य भवन्ति विफलास्ततः । तत्साफल्यकृते तत् सदापि शुद्धं धरेत मनः ॥ १६ ॥ विषपरिभा-
वितधाराकरालकरवालतक्षिताङ्ग इव । संजायते जीवपरो न तां गिरं कथमपि भाषेत ॥ १७ ॥ न कदापि कुलप्रसूतः सुखलेशविमो-
हितो महासत्त्वः । क्षणभङ्गिशरीरेण क्लिष्टचेष्टामनुतिष्ठेत् ॥ १८ ॥

तहा–चिन्ताणंतरसमकालमेव संपज्जमाणसयलत्थं । वीरस्स धरापहुणो रज्जं पि हु भुंजमाणस्स ॥ १९ ॥ धम्माभिमुहा चिन्ता सम्मं संवेगभावियमइस्स । संसारसरूवविभाविरस्स एवं विहा होज्जा ॥ २० ॥ हंदी सव्वंगं पि हु सयावि सावज्जजीविणो मज्झ । संसारसरणकारणवावारपरायणमणस्स ॥ २१ ॥ नणु होही तं किंपि हु भविस्सवरिस्सं रिऊ य सा का वि । सो मासो पक्खो वा तमहोरत्तं अहवा दिवसो ॥ २२ ॥ दिवसे वा स मुहुत्तो तम्मि खणो अहवा को वि सो वारो । वारे तं नक्खत्तं जत्थाहं विइयपरमत्थो ॥ २३ ॥ संकामिऊण पुत्ते रज्जधुरं धीरपुरिसपन्नत्तं । सव्वन्नुपणीयाणाए पारतंतं परिवहंतो ॥ २४ ॥ संवेगगरुयगीयत्थसुकिरियाणं गुरूणं पयमूले । पडिवज्जिऊण दिक्खं निरवेक्खो सव्वसंगेसु ॥ २५ ॥

---

तथा–चिन्तनानन्तरसमकालमेव संपद्यमानसकलार्थम् । वीरस्य धराप्रभो राज्यमपि हि भुञ्जमानस्य ॥ १९ ॥ धर्माभिमुखा चिन्ता सम्यक् संवेगभावितमतेः । संसारस्वरूपविभाविन एवंविधा भवति ॥ २० ॥ भो ! भोः ! सर्वांगमपि हि सदापि सावद्यजीविनो मम । संसारशरणकारणव्यापारपरायणमनसः ॥ २१ ॥ ननु भविष्यति तत्किमपि हि भविष्यवर्षमृतुश्च सा कापि । स मासः पक्षो वा तदहोरात्रमथवा दिवसः ॥ २२ ॥ दिवसे वा स मुहूर्त्तस्तस्मिन् क्षणोऽथवा कोऽपि स वारः । वारे तन्नक्षत्रं यत्राहं विदितपरमार्थः ॥ २३ ॥ संक्राम्य पुत्रे राज्यधुरं धीरपुरुषप्रज्ञप्तम् । सर्वज्ञप्रणीताज्ञया पारतन्त्र्यं परिवहन् ॥ २४ ॥ संवेगगुरुगीतार्थसुक्रियाणां गुरूणां पादमूले । प्रतिपद्य दीक्षां निरपेक्षः सर्वसङ्गेषु ॥ २५ ॥

छट्ठट्ठमदसमदुवालसाइविविहेहिं तवविसेसेहिं । संलिहियप्पा तह दव्वभावसंलेहणविहीए ॥ २६ ॥ वोसट्ठचत्तदेहो निवद्धपउमासणो गिरिसिलाए । थाणुमईए परिजुत्तहरिणकयकायकंडुयणो ॥२७॥ सव्वाहारचाई जहट्ठियाराहणाविहाणेण । पंचनमोक्कारपरो पाणचायं करिस्सामि ॥ २८ ॥ नवरं नो जावज्जवि लभामि पव्वज्जमकयपुन्नो हं । ता सगिहे चिय वसहिं दाउं सेवेमि मुणिणोत्ति ॥ २९ ॥ जुत्ता य इमा चिन्ता विसेसओ वसहिदाणविसयम्मि । जं सेसदाणविक्खाए वसहिदाणं चिय पहाणं ॥ ३० ॥ वसहिअलाभे हि मुणीण दाउमणवट्ठियाण न तरंति । अत्ताणुग्गहहेउं गिहिणो भत्ता वि भत्ताइं ॥ ३१ ॥ न य भेसज्जं न य ओसहं च नो कंवलं न वत्थं च । फासुयमकयमकारियमणणुमयं नेव पायं पि ॥ ३२ ॥

---

षष्ठमाष्टमदशमद्वादशादिविविधैस्तपोविशेषैः । संलिखितात्मा तथा द्रव्यभावसंलेखनविधिना ॥ २६ ॥ व्युत्सृष्टत्यक्तदेहो निवद्धपद्मासनो गिरिशिलायाम् । स्थाणुमत्या परियुक्तहरिणकृतकायकण्डुयनः ॥ २७ ॥ सर्वाहारत्यागी यथास्थिताराधनाविधानेन । पञ्चनमस्कारपरः प्राणत्यागं करिष्यामि ॥ २८ ॥ नवरं—नो यावदद्यापि लभे प्रव्रज्यामकृतपुण्योऽहम् । तावत् स्वगृहे चैव वसतिं दातुं सेवे मुनीनिति ॥२९॥ युक्ता चेमा चिन्ता विशेषतः वसतिदानविषये । यच्छेषदानविख्याते वसतिदानं चैव प्रधानम् ॥ ३० ॥ वसत्यलाभे हि मुनीनां दातुमनवस्थिताना न शक्नुवन्ति । आत्मानुग्रहहेतुं गृहिणो भक्ता अपि भक्तादि ॥ ३१ ॥ न च भैषज्यं न चौषधं च नो कम्बलं न वस्त्रं च । प्राशुकमकृतमकारितमननुमतं नैव प्रायमपि ॥ ३२ ॥

नो पायपुंच्छणं डंडगं च (मय) मइमत्तयं विणेयं च । सत्थं पोत्थयमन्नं पि साहुजणजोग्गमुवगरणं ॥ ३३ ॥ दाउं पारेन्ति न सुगुरुसेवणं नेव तव्वयणसवणं । काउं खमंति के वि हु भववासविरत्तचित्तावि ॥३४॥ अणियय-विहारचरियाए आगयाणं च जइ न खेत्तम्मि । वसहीलाभो जायइ जईण ता कह ठिती तत्थ ॥ ३५ ॥ ठिइमन्तरेण य तक्खेत्तजा य कह उभयलोयसंभविणो । समणाण गिहत्थाण य पत्तेयं संभवंति गुणा ॥ ३६ ॥ तत्थ इहलोइया संजयाण असणाईलाभपभिइया । परलोयसंभवा पुण संजमपरिपालणाइया ॥ ३७ ॥ गिहीण उ इहभविया मुणिसंगाउ कुसंगचागाई । परभविया पुण सद्धम्मसवणपमुहा गुणा णेगे ॥ ३८ ॥ तह ते सयं न गेहं कुणन्ति न य कारविंति अन्नेहिं । अणुमन्नंति वि नो परकयं पि मणवयणकाएहिं ॥ ३९ ॥

---

न पादप्रोंछनं दण्डकं मृन्मात्रकमपि नैवं च । शास्त्रं पुस्तकमन्यदपि साधुजनयोग्यमुपकरणम् ॥ ३३ ॥ दातुं शक्नुवन्ति न सुगुरुसेवनं नैव तद्वचनश्रवणम् । कर्तुं क्षमन्ते केऽपि हि भववासविरक्तचित्ता अपि ॥ ३४ ॥ अनियतविहारचर्ययाऽऽगतानां च यदि न क्षेत्रे । वसतिलाभो जायते यतीनां तदा कथं स्थितिस्तत्र ॥ ३५ ॥ स्थितिमन्तरेण च तत्क्षेत्रजाश्च कथमुभयलोकसंभविनः । श्रमणानां गृहस्थानां च प्रत्येकं संभवन्ति गुणाः ॥ ३६ ॥ तत्रेह लौकिकाः संजयानामशनादिलाभप्रभृतिकाः । परलोकसंभवाः पुनः संयमपरिपालनादिकाः ॥ ३७ ॥ गृहिणां तु इहभवा मुनिसंगात् कुसङ्गत्यागादयः । परभविकाः पुनः सद्धर्मश्रवणप्रमुखा गुणा अनेकाः ॥ ३८ ॥ तथा ते स्वयं न गेहं कुर्वन्ति न च कारयन्त्यन्यैः । अनुमन्यन्तेऽपि नो परकृतमपि मनोवचनकायैः ॥ ३९ ॥

जम्हा न सुहुमबायरछज्जीवनिकायहणणविरहेण । जायइ गिहं कुडीरगमेत्तं पि अओ च्चिय पवुत्तं ॥ ४० ॥ अविकंतिऊण जीवे कत्तो घरसरणगुत्तिसंठप्पं । अविकंतिऊण तं तह पडिओ असंजयाण पहे ॥ ४१ ॥ अन्नं च ॥ जइ तूररवपुरस्सरमणेणजणसुगुरुसंघपच्चक्खं । चइय गिहं च करेमि भन्ते सामाइयं इण्हिं ॥ ४२ ॥ सव्वं पि हु सावज्जं जोगं पच्चक्खिमो उ जाजीवं । तिविहं तिविहेणं ती महापइन्ना कया एसा ॥ ४३ ॥ ता कह सव्वंगेहिं छज्जीवनिकायरक्खणेक्कपरं । सकयपइन्नं भेत्तुं कुणंति मुणिणो गिहाइ सयं ॥ ४४ ॥ तम्हा अन्नकए च्चिय पारद्धं निट्ठीयं च अन्नकए । मणवइकाएहिं सयं अकयमकारियमह परेहिं ॥ ४५ ॥ अणणुमयं च अओ च्चिय मूलुत्तरगुणजुयं पमाणिल्लं । थीपसुपंडगदुस्सीलवज्जमुज्झियतदासन्नं ॥ ४६ ॥

---

यस्मान्न सूक्ष्मवादरषड्जीवनिकायहननविरहेण । जायते गृहं कुटीरकमात्रमप्यत एव प्रोक्तम् ॥ ४० ॥ अविक्रम्य जीवान् कुतो गृहसरणगुप्तिसंस्थाप्यम् । अविक्रम्य तं तथा पतितोऽसंजयानां पथि ॥ ४१ ॥ अन्यच्च—यदि ताररवपुरस्सरमनेकजनसुगुरुसंघप्रत्यक्षम् । त्यक्त्वा गृहं च करोमि भदन्त? सामायिकमिदानीम् ॥ ४२ ॥ सर्वमपि हि सावद्यं योगं प्रत्याख्यामि तु यावज्जीवम् । त्रिविधं त्रिविधेनेति महाप्रतिज्ञा कृतैषा ॥ ४३ ॥ तस्मात् कथं सर्वाङ्गैः षड्जीवनिकायरक्षणैकपराम् । स्वकृतप्रतिज्ञां भेत्तुं कुर्वन्ति मुनयो गृहाणि स्वयम् ॥ ४४ ॥ तस्मादन्यकृते एव प्रारब्धां निष्ठितां चान्यकृते । मनोवृत्तिकायैः स्वयमकृतामकारितामथ परैः ॥ ४५ ॥ अननुमतां चात एव मूलोत्तरगुणयुतां प्रमाणवतीम् । स्त्रीपशुपण्डकदुश्शीलवर्ज्यामुज्झिततदासन्नाम् ॥ ४६ ॥

सज्झायकालउच्चारपासवणभूमिसंजुयं गुत्तं । जइजोग्गं निरवज्जं सेज्जं देज्जा जईण गिही ॥ ४७ ॥ दव्वं खेत्तं कालं भावं च पडुच्च जइ तहा रूवा । नो संपज्जइ तहवि हु चिन्तिय सारेतरविभागं ॥ ४८ ॥ सुहुमप्पदोसजुत्तं गुरुबहुगुणसंगयं सया वसहिं । देज्ज जईणं न जं ते तीए विणा संजमायालं ॥ ४९ ॥ दुत्तरमवि भवजलहिं सेज्जाए तरइ जेण तद्दाया । सेज्जायरो त्ति वुत्तो एत्तो चिय समयकेऊहिं ॥ ५० ॥ तत्थ ट्ठिया य जइणो अन्नेहिं तो वि वत्थपत्ताइं । जं पावंति तयं पि हु दिन्नं परमत्थओ तेण ॥ ५१ ॥ जइ वि न कहिं पि हु सयं संपत्तं पुव्ववत्तियं ताण । तह वि हु वसही दाया जातो तम्मूलहेउत्ति ॥ ५२ ॥ जं मूलकारणं सो अह उत्तरकारणाइं इयरे उ । सइ मूलंगे पायं विसयो किर उत्तरंगाणं ॥ ५३ ॥

---

स्वाध्यायकालोच्चारप्रस्रवणभूमीसंयुतां गुप्ताम् । यतियोग्यां निरवद्यां शय्यां ददाति यतीनां गृही ॥ ४७ ॥ द्रव्यं क्षेत्रं कालं भावं चाश्रित्य यदि तथा रूपा । न संपद्यते तथापि हि चिन्तित्वा सारेतरविभागम् ॥४८॥ सूक्ष्माल्पदोषयुक्तां गुरुबहुगुणसंगतां सदा वसतिम् । ददाति यतीनां न यत्ते तया विना संयमायालम् ॥ ४९ ॥ दुस्तरमपि भवजलधिं शय्याया तरति येन तद्दाता । शय्यातर इत्युक्त अत एव समयकेतुभिः ॥ ५० ॥ तत्र स्थिताश्च यतयोऽन्येभ्योऽपि वस्त्रपात्रादि । यत् प्राप्नुवन्ति तदपि हि दत्तं परमार्थतस्तेन ॥ ५१ ॥ यद्यपि न कुत्रापि हि स्वयं संप्राप्तं पूर्ववर्तित्वं तेषाम् । तथापि हि वसतिदाता जातस्तन्मूलहेतुरिति ॥ ५२ ॥ यन्मूलकारणं सोऽथोत्तर-कारणानीतराणि तु । सति मूलाङ्गे प्रायं विषयः किलोत्तरांगानाम् ॥ ५३ ॥

वलिए मूलजयंमी जहा तरू लहति परमवित्थारं । तह वसहिमूलबलितो पावइ पसरं जइजणो वि ॥ ५४ ॥ किंच । वायरयवासधारासीयायवमारुओवसग्गाणं । चोराण दुट्ठसावयगणाण तह दंसमसगाण ॥ ५५ ॥ रक्खेमाणो मुणिपुंगवे उ सगिहम्मि वसहिदाणाओ । ताण मणवयणकाये कुणति पसन्ने सयाकालं ॥ ५६ ॥ जोगप्पसन्नताए य चेव जायइ सुई मई सन्ना । तह निव्वुईसुहं तणुबलं च सुहज्झाणवुड्ढिकए ॥ ५७ ॥ जम्हा सुमणुन्नालयसयणासणभोयणेसु पाएणं । सुमणुन्नज्झाणज्झाई जायति साहू भवविरागी ॥ ५८ ॥ जस्सासमम्मि मुणिणो मुहुत्तमेत्तं पि विस्समन्ति सो । कयकिच्चो तेण चिय किमन्नपुन्नेण किर तस्स ॥५९॥ धन्नो तेसिं जम्मो कुलं च धन्नं सयं पि ते धन्ना । पक्खालियपावमला सुसाहुणो जाण ठंति गिहे ॥ ६० ॥

---

वलिते मूले जगति यथा तरुर्लभते परमविस्तारम् । तथा वसतिमूलवलितः प्राप्नोति प्रसरं यतिजनोऽपि ॥ ५४ ॥ किंच—वातरजोवर्षाधाराशीतातपमारुतोपसर्गेभ्यः । चौरेभ्यो दुष्टश्वापदगणेभ्यस्तथा दंशमशकेभ्यः ॥ ५५ ॥ रक्षयन् मुनिपुङ्गवांस्तु स्वगृहे वसतिदानतः । तान् मनोवचनकायेन करोति प्रसन्नान् सदा कालम् ॥५६॥ योगप्रसन्नतया च चैव जायते श्रुति मतिः संज्ञा । तथा निर्वृतिसुखं तनुबलं च शुभध्यानवृद्धिकृते ॥ ५७ ॥ यस्मात् सुमनोज्ञालयशयनासनभोजनेषु प्रायेण । सुमनोज्ञध्यानध्यायी जायते साधुर्भवविरागी ॥ ॥ ५८ ॥ यस्याश्रमे मुनयो मुहूर्तमात्रमपि विश्राम्यन्ति सः । कृतकृत्यस्तेनैव किमन्यपुण्येन किल तस्य ॥ ५९ ॥ धन्यस्तेषां जन्म कुलं च धन्यं स्वयमपि ते धन्याः । प्रक्षालितपापमलाः सुसाधवो येषां तिष्ठन्ति गृहे ॥ ६० ॥

जइ पुण दुगुंछिएसु कुलेसु एयाण जणणमिह हुंतं । ता कह जअएक्कपुज्जा ठायंता तग्गिहे मुणिणो ॥ ६१ ॥ पुन्नकलियाण गिहेसु ठन्ति मुणिणो पणट्ठमयमोहा । न कयाइ रयणवुट्ठी निवडति पावाणं गेहेसु ॥ ६२ ॥ सो नाम को वि कालो कलिकलुसविवज्जिये जियाणं भवे । गुणरयणमहानिहिणो जम्मि गिहे ठंति वरमुणिणो ॥६३॥ सेवा वि दुल्लहा चिय महाणुभावाण पावनिद्दलिणी । छाया वि कप्पतरुणो पुन्नेहिं विणा न संपडइ ॥ ६४ ॥ अक्खण्डसंजमधुरंधराण धीराण धम्मवुद्धीए । मुणिवसभाणं वसहिं दिंतेण इमं इमं च कयं ॥ ६५ ॥ चारित्तपक्खवाओ गुणाणुरागित्तणं सुधम्मित्तं । सुट्ठाणपक्खवाइत्तणं च कित्तीसमुच्छालो ॥ ६६ ॥ संमग्गवुड्ढिकरणं कुसंगचाइत्तणं सुसंगरई । सगिहंगणम्मि कप्पदुम्मस्स आरोपणविहाणं ॥ ६७ ॥

---

यदि पुनर्जुगुप्सितेषु कुलेष्वेतेषां जननमिहाभविष्यत् । तदा कथं जगदेकपूज्या अशास्यन् तद्गृहे मुनयः ॥ ६१ ॥ पुण्यकलितानां गेहेषु तिष्ठन्ति मुनयः प्रणष्टमदमोहाः । न कदाचिद् रत्नवृष्टिर्निपतति पापानां गेहेषु ॥ ६२ ॥ स नाम कोऽपि कालः कलिकलुषविवर्जितो जीवानां भवेत् । गुणरत्नमहानिधयो यस्मिन् गृहे तिष्ठन्ति वरमुनयः ॥ ६३ ॥ सेवापि दुर्लभा किल महानुभावानां पापनिर्दलिनी । छायापि कल्पतरोः पुण्यैर्विना न संपतति ॥ ६४ ॥ अखण्डसयमधुरंधराणां धीराणां धर्म्मबुद्ध्या । मुनिवृषभानां वसतिं ददतेदमियं च कृतम् ॥ ६५ ॥ चारित्रपक्षपातो गुणानुरागित्वं सुधार्म्मिकत्वम् । सुस्थानपक्षवादित्वं च कीर्त्तिसमुच्छालः ॥ ६६ ॥ सन्मार्गवृद्धिकरणं कुसङ्गत्यागित्वं सुसङ्गरतिः । स्वगृहाङ्गणे कल्पद्रुमस्यारोपणविधानम् ॥ ६७ ॥

कामदुहधेणुगहणं चिन्तामणिणो य करयले धरणं । निययभवणंगणे चिय पहाणरयणायराणयणं ॥ ६८ ॥ धम्मपवाए दाणं पियणं अमयस्स पवरनिहिगहणं । सव्वसुहसंचयारोविजयपडायाए गहणं च ॥ ६९ ॥ परमं च सव्वकामियविज्जामन्ताण साहणविहाणं । भवइ य विवेगसंगयगुणन्नया पयडणं च कयं ॥ ७० ॥ तह तस्सुवस्सए संठियाण साहूण गुणसमिद्धाणं । पायसमीवमुवागम्म धम्मसवणं कुणंति जणा ॥ ७१ ॥ जं जं च तदायन्नणपच्चागयचेयणा भवियसत्ता । धम्मकीरियासु निच्चं रमंति विविहासु जं च तहा ॥७२॥ पडणीया भद्दत्ते भद्दाउ दयाए जं च जह सत्तिं । मंसासचाइणियमे अन्ने पुण जं च संमत्ते ॥ ७३ ॥ संपावियसम्मत्ता य जं परे परमभत्तिसंजुत्ता । मणहरजिणिंदमंदिरविंबपइट्ठच्चणाईसु ॥ ७४ ॥

---

कामदुघधेनुग्रहणं चिन्तामणेश्च करतले धरणम् । निजभवनाङ्गण एव प्रधानरत्नाकरानयनम् ॥ ६८ ॥ धर्म्मप्रवादे दानं पानममृतस्य प्रवरनिधिग्रहणम् । सर्वशुभसंचयारोपिजयपताकाया ग्रहणं च ॥ ६९ ॥ परमं च सर्वकामिकविद्यामन्त्राणां साधनविधानम् । भवति च विवेकसंगतगुणज्ञताप्रकटनं च कृतम् ॥७०॥ तथा तस्योपाश्रये संस्थितानां साधूनां गुणसमृद्धानाम् । पादसमीपमुपागम्य धर्म्मश्रवणं कुर्वन्ति जनाः ॥ ७१ ॥ यद्यच्च तदाकर्ण्णनप्रत्यागतचेतना भविकसत्त्वाः । धर्म्मक्रियासु नित्यं रमन्ते विविधासु यच्च तथा ॥ ७२ ॥ पतनीया भद्रत्वे भद्रास्तु दयायां यच्च यथाशक्ति । मांसाशत्यागिनियमेऽन्ये पुनर्यच्च सम्यक्त्वे ॥ ७३ ॥ संप्राप्तसम्यक्त्वाश्च यत् परे परमभक्तिसंयुक्ताः । मनोहरजिनेन्द्रमन्दिरविम्बप्रतिष्ठार्च्चनादिषु ॥ ७४ ॥

जिणहरजत्ताईसु य महुसवेसु सया पयट्टंति । जं जं च जिणप्पवयणपभावणापमुहकिचे य ॥७५॥ जं उज्जमंति केई गिलाणसाहम्मियाइकज्जेसु । जं च जिणागमपोत्थयलिहावणं के वि कारिंति ॥ ७६ ॥ जं केइ देसविरतिं गिण्हंती जं च सव्वविरइं च । जं च विचित्तेसु तवोकम्मेसु य के वि हु रमंति ॥ ७७ ॥ सव्वाण ताण तेहिं विहिज्जमाणाण पुन्नहेऊण । साहूवस्सयदाया निद्दिट्ठो मूलहेउत्ति ॥ ७८ ॥ सो च्चिय राया सो चेव रायमत्थयमणी स थिररज्जो । रज्जे जस्स जइजणो विहरति अप्पडिहयप्पसरं ॥ ७९ ॥ रज्जे य सेसदेसाण रायभूओ स चेव देसो वि । उव्वहइ आरियत्तं सुसाहुणो जत्थ वि हरंति ॥ ८० ॥ देसे पुन नयरं सेसनयरसिरसेहरं पवित्तं च । तं चिय चरंति निच्चं जत्थ गुणड्ढा महामुणिणो ॥ ८१ ॥

---

जिनगृहयात्रादिषु च महोत्सवेषु सदा प्रवर्त्तन्ते । यद्यच्च जिनप्रवचनप्रभावनाप्रमुखकृत्ये च ॥ ७५ ॥ यदुद्यमन्ति केचित् ग्लानसाधर्म्मिकादिकार्य्येषु । यच्च जिनागमपुस्तकलेखनं केऽपि कारयन्ति ॥ ७६ ॥ यत् केऽपि देशविरतिं गृह्णन्ति यच्च सर्वविरतिं च । यच्च विचित्रेषु तपःकर्म्मसु च केऽपि हि रमन्ते ॥ ७७ ॥ सर्वासां तासां तैर्विधीयमानानां पुण्यहेतूनाम् । साधूपाश्रयदाता निर्दिष्टो मूलहेतुरिति ॥७८॥ स एव राजा स चैव राजमस्तकमणिः स स्थिरराज्यः । राज्ये यस्य यतिजनो विहरत्यप्रतिहतप्रसरम् ॥ ७९ ॥ राज्ये च शेषदेशानां राजभूतः स चैव देशोऽपि । उद्वहति आर्य्यत्वं सुसाधवो यत्र विहरन्ति ॥ ८० ॥ देशे पुनर्नगरं शेषनगरशिरशेखरं पवित्रं च । तदेव चरन्ति नित्यं यत्र गुणाढ्या महामुनयः ॥ ८१ ॥

नगरे य पाडगो पावसाडगो जइजणो जहिं वसइ । सो च्चिय धन्नो पुन्नो सुन्नो अन्नो त्ति मन्ने हं ॥ ८२ ॥ तत्थ पुण जत्थ गीयत्थसुत्थियजईण जायए वसही । भवणं तं च्चिय एक्कं लक्खणपुन्नं खु मन्ने हं ॥ ८३ ॥ लच्छीए तमावासो तं अरिहं पवररयणवुड्ढीए । वत्थु पुरिसो वि भुवि तस्स चेव परमत्थओ उदई ॥ ८४ ॥ कहमन्नहा मुणीणं संजमसिरिपरमरमणभूमीणं । तत्थावत्थाणं पि हु होज्जा जिणवयणनिरयाणं ॥ ८५ ॥ नहि होंति तत्थ दोसा सिद्धंतुग्घोसणाझुणिगुणेण । खुद्दोवद्दवपमुहा अब्भुदयाई य होंति गुणा ॥८६॥ जं रोगग्गि पिसायग्गहपभिइयखुद्ददेवजा दोसा । कूरनरतिरियजा वि य पावा पावाउ पभवंति ॥ ८७ ॥ पावस्स य पडिवक्खो दक्खो नेओ जिणिंदसद्धम्मो । जत्थ पुण तप्पयारो पाववियारा कओ तत्थ ॥ ८८ ॥

---

नगरे च पाटकः पापशाटको यतिजनो यत्र वसति । स एव धन्यः पुण्यः शून्योऽन्य इति मन्येऽहम् ॥ ८२ ॥ तत्र पुनर्यत्र गीतार्थसुस्थितयतीनां जायते वसतिः । भवनं तदेवैकं लक्षणपूर्णं खलु मन्येऽहम् ॥ ८३ ॥ लक्ष्म्यास्तदावासस्तदर्हः प्रवररत्नवृद्ध्या । वस्तु पुरुषोऽपि भुवि तस्य चैव परमार्थत उदयो ॥ ८४ ॥ कथमन्यथा मुनीनां संयमश्रीपरमरमणभूमीनाम् । तत्रावस्थानमपि हि भवेज्जिनवचननिरतानाम् ॥ ८५ ॥ नहि भवन्ति तत्र दोषाः सिद्धान्तोद्घोषणाध्वनिगुणेन । क्षुद्रोपद्रवप्रमुखा अभ्युदयादयश्च भवन्ति गुणाः ॥ ८६ ॥ यद् रोगाग्निपिशाचग्रहप्रभृतिकक्षुद्रदेवजा दोषाः । क्रूरनरतिर्यग्जा अपि च पापाः पापतः प्रभवंति ॥ ८७ ॥ पापस्य च प्रतिपक्षो दक्षो ज्ञेयो जिनेन्द्रसद्धर्मः । यत्र पुनस्तत्प्रचारः पापविकाराः कुतस्तत्र ॥ ८८ ॥

नहि बलियम्मि सपक्खे दीसति पडिवक्खसंभवो पायं । पभवंते सइ मायंडमंडले तिमिरनियरो व्व ॥ ८९ ॥ इय मोक्खसाहणावज्झहेउणो नाणसामग्गा। विविहतवनियमसंजमसज्झायज्झयणज्झाणाई ॥ ९० ॥ सद्धम्मगुणा गुणिसेवगस्स रन्नो अथवा अमच्चस्स । सेट्ठिस्स सत्थवाहस्स इब्भपमुहस्स वसहीए॥९१॥ अन्नस्स व जस्स परं अणुग्गहं समणुमन्नमाणस्स । चिट्ठंताणं साहूण निव्वहंति निराबाहं ॥ ९२ ॥ धम्माणुभावओ चेव तस्स दोसा न होंति पावकया । हुंति य सद्धम्मकया परमब्भुदया विविहरूवा ॥ ९३ ॥ अच्चंतणुरत्तकलत्तपुत्तसुविणीयपरियणप्पमुहा । चउरंगबलाई वा नियनियपयवीए अणुसरिसा ॥ ९४ ॥ दाउं वसहिमिह भवे जरंततणकयकुडीरकोणे वि । भवसोक्खनिराकंखीण मोक्खसोक्खेक्कलक्खाणं ॥ ९५ ॥

---

नहि बलिके सपक्षे दृश्यते प्रतिपक्षसंभवः प्रायम् । प्रभवति सति मार्तण्डमण्डले तिमिरनिकर इव ॥ ८९ ॥ इति मोक्षसाधनावन्ध्यहेतवो ज्ञानसामग्र्यः । विविधतपोनियमसंयमस्वाध्यायाध्ययनध्यानादयः ॥ ९० ॥ सद्धर्म्मगुणागुणिसेवकस्य राज्ञोऽथवामात्यस्य । श्रेष्ठिनः सार्थवाहस्येभ्यप्रमुखस्य वसतौ ॥ ९१ ॥ अन्यस्य वा यस्य परमनुग्रहं समनुमन्यमानस्य । तिष्ठतां साधूनां निर्वहन्ति निरावाधम् ॥ ९२ ॥ धर्म्मानुभावतश्चैव तस्य दोषा न भवन्ति पापकृताः । भवन्ति च सद्धर्म्मकृताः परमाभ्युदया विविधरूपाः ॥ ॥ ९३ ॥ अत्यन्तानुरक्तकलत्रपुत्रसुविनीतपरिजनप्रमुखाः । चतुरङ्गबलादिर्वा निजनिजपदव्या अनुसदृशाः ॥ ९४ ॥ दत्त्वा वसतिमिह भवे जीर्णतृणकृतकुटीरकोणेऽपि । भवसौख्यनिराकांक्षिणां मोक्षसौख्यैकलक्षाणाम् ॥ ९५ ॥

साहूण सुविहियाणं महाणुभावाणं परमभत्तीए । चइउं मलाविलं देहपंजरं अन्नजम्मम्मि ॥९६॥ मणिमय-महंतभासंतभित्तिविच्छित्तिचित्तरइजणए । सुविसालसालभंजियमत्तालंबाइसयकलिए ॥ ९७ ॥ नाणामणिघडणुब्भडथंभसहस्सूसियम्मि रयणयले । अणवरयरयणमणिकंतकिरणभरनिब्भरुज्जोए ॥ ९८ ॥ गयणंगणसंलग्गग्गतुंगतोरणमणोभिरामिल्ले । धुवंतधवलधयवडमालाकलिए परमरम्मे ॥ ९९ ॥ आएसाणंतरत्तुरमाणअणुरत्तकिंकरसुरड्ढे । ललमाणजणियनयणच्छणच्छराजणसमाकिन्ने ॥ २३०० ॥ वररयणकणगमणिमयसयणासणछत्तचमरभिंगारे । तह पंचवन्नमणिरयणकुसुमदेवंसुयसमिद्धे ॥ १ ॥ चिंताणंतरसमकालसंमिलंताणुकूलसयलत्थे । सव्वुत्तमे विमाणे जायति देवो महिड्ढीओ ॥ २ ॥

---

साधूनां सुविहितानां महानुभावानां परमभक्त्या । त्यक्त्वा मलाविलं देहपञ्जरमन्यजन्मनि ॥ ९६ ॥ मणिमयमहद्भासद्भित्तिविच्छित्तिचित्तरतिजनके । सुविशालशालभञ्जिकामत्तालम्बादिशतकलिते ॥ ९७ ॥ नानामणिघटनोद्भटस्तम्भसहस्रोषिते रत्नतले । अनवरतरत्नमणिकान्तकिरणभरनिर्भरोद्योते ॥ ९८ ॥ गगनाङ्गणसंलग्नाग्रतुङ्गतोरणमनोऽभिरामवति । धुन्वद्धवलध्वजपटमालाकलिते परमरम्ये ॥ ९९ ॥ आदेशानन्तरत्वर्यमाणानुरक्तकिंकरसुराढ्ये । ललमानजनितनयनक्षणाप्सरोजनसमाकीर्णे ॥ २३०० ॥ वररत्नकनकमणिमयशयनासनच्छत्रचामरभृङ्गारे । तथा पञ्चवर्णमणिरत्नकुसुमदेवांशुकसमृद्धे ॥ १ ॥ चिन्तनानन्तरसमकालसंमिलदनुकूलसकलार्थे । सर्वोत्तमे विमाने जायते देवो महर्द्धिकः ॥ २ ॥

तत्तो य पच्चुओ संतो उदग्गसोहग्गरूवधारी य । जणमणनयणाणंदी निरुवक्कमदीहनिरुयाऊ ॥ ३ ॥ लायन्नपुन्नगत्तो वंदियणुग्घुस्समाणगुणनिवहो । मणिकणगरुयणसयणासणड्ढपासायतरललणो ॥ ४ ॥ संपज्जमाणस्ससमाहियत्थो महाविभूइल्लो । सव्वाइसयनिहाणं दिसि दिसि पसरंतजसपसरो ॥ ५ ॥ पुन्नाणुबंधिपुन्नो अक्खंडछक्खंडभरहभोत्ता य । होज्जेह चक्कवट्टी राया वा खंडमंडलिओ ॥ ६ ॥ तदमच्चो वा सेट्ठी सत्थाहो वा महिब्भपुत्तो वा । संपाविऊण परमे चारित्तगुणे ततो धन्नो ॥ ७ ॥ तेणेव भवेणं सो तिहिं सत्तहिं वा भवेहिं नियमेणं । काऊण कम्मखयं खिप्पं मोक्खं पि पाउणति ॥ ८ ॥ इय भावसारवसहीदाणेण नरिंदपुन्नमकलंकं । वंछियपूरणप्पवणं जं जायति तं किमच्छरियं ॥ ९ ॥

---

ततश्च प्रच्युतः सन्नुदग्रसौभाग्यरूपधारी च । जनमनोनयनानन्दी निरुपक्रमदीर्घनिरोगायुः ॥ ३ ॥ लावण्यपूर्णगात्रो वन्दिजनोद्घोष्यमाणगुणनिवहः । मणिकनकरोचनशयनासनाढ्यप्रासादतरललनः ॥ ४ ॥ संपद्यमानस्वसमाहितार्थो महाविभूतिमान् । सर्वातिशयनिधानो दिशि दिशि प्रसरद्यशःप्रसरः ॥ ५ ॥ पुण्यानुबन्धिपुण्योऽखण्डषट्खण्डभरतभोक्ता च । भवेदिह चक्रवर्त्ती राजा वा खण्डमाण्डलिकः ॥ ६ ॥ तदमात्यो वा श्रेष्ठी सार्थवाहो वा महेभ्यपुत्रो वा । संप्राप्य परमांश्चारित्रगुणान् ततो धन्यः ॥ ७ ॥ तेनैव भवेन स त्रिभिः सप्तभिर्वा भवैर्नियमेन । कृत्वा कर्म्मक्षयं क्षिप्रं मोक्षमपि प्राप्नोति ॥ ८ ॥ इति भावसारवसतिदानेन नरेन्द्र ? पुंण्यमकलङ्कम् । वांछितपूरणप्रवणं यज्जायते तत्किमाश्चर्यम् ॥ ९ ॥

अच्छरियं पुण तं जं उवरोहेणावि वसहिदाणाओ । अणवरयसाहुदंसण ईसिं पडिबन्धभावेण ॥ १० ॥ अहमगइमुवगओ वि हु पमायमयमोहिओ वि मुद्धो वि । पडिवुद्धो कुरुचंदो जाइं सरिऊण सयमेव ॥ ११ ॥ तहाहि–कुलभवणं व सिरीए अच्छरियाणं पि जम्मभूमि व्व । विज्ञाणमागरो इव सावत्थी नाम आसि पुरी ॥१२॥ तत्थ य नमंतपत्थिवसिररयणपहापहासिपयजुयलो । नामेणाइवराहो भुवणपसिद्धो महीनाहो ॥ १३ ॥ तस्स य अप्पडिमगुणो रूवेण वम्महो व्व पच्चक्खो । समरंगणरणपरिहत्थहयाए जिण्हुव्व विण्हु व्व ॥ १४ ॥ ताराचंदो नामेण अत्तओ रायलक्खणाणुगतो । नियजीयनिव्विसेसो कुरुचंदो नाम से मित्तो ॥ १५ ॥ अह सो ताराचंदो जुवरायपयप्पयाणकामेण । इयरकुमारेहिंतो सविसेसं पेहिओ रन्ना ॥ १६ ॥

---

आश्चर्यं पुनस्तद् यदुपरोधेनापि वसतिदानात् । अनवरतसाधुदर्शनादीषत्प्रतिबन्धभावेन ॥ १० ॥ अधमगतिमुपगतोऽपि हि प्रमादमदमोहितोऽपि मुग्धोऽपि । प्रतिबुद्धः कुरुचन्द्रो जातिं स्मृत्वा स्वयमेव ॥ ११ ॥ तथाहि–कुलभवनमिव श्रिया आश्चर्याणामपि जन्मभूमीव । विज्ञानानामाकर इव सावत्थी नाम्न्यासीत्पुरी ॥ १२ ॥ तत्र च नमत्पार्थिवशिरोरत्नप्रभाप्रभासिपदयुगलः । नाम्नादिवराहोः भुवनप्रसिद्धो महीनाथः ॥ १३ ॥ तस्य चाप्रतिमगुणो रूपेण मन्मथ इव प्रत्यक्षः । समराङ्गणरणपरिहस्तघटायां जिष्णुरिव विष्णुरिव ॥ १४ ॥ ताराचन्द्रो नाम्नाऽऽत्मजो राजलक्षणानुगतः । निजजीवनिर्विशेषः कुरुचन्द्रो नामा तस्य मित्रम् ॥ १५ ॥ अथ स ताराचन्द्रो युवराजपदप्रदानकामेन । इतरकुमारेभ्यः सविशेषं प्रेक्षितो राज्ञा ॥ १६ ॥

अह निवसिणिद्धसवियासचक्खुविक्खेवगोयरीभूयं । दट्ठुं सवत्तिजणणीए रायसन्निहिनिसन्नाए ॥ १७ ॥ नियसुयरज्जविग्घं विभावयंतीए निहुयणगंते । भक्खविमिस्सं कम्मणमुवणीयं तस्स हणणट्ठा ॥१८॥ अविगप्पिऊण तेण य उवभुत्तं अह तदुत्थदोसेण । रूवबलंगविणासी पाउब्भूओ महावाही ॥ १९ ॥ तेण य विहुरमसारं दुगुंछणिज्जं च पेच्छिय सरीरं। अचंतसोगयत्थो ताराचंदो विचिंतेति ॥ २० ॥ अधणाण गरुयरोगाउराण नियसयणपरिहवहयाण । मरणमहवन्नदेसे गमणं जुज्जइ सुपुरिसाण ॥ २१ ॥ ता एत्थ निवसिउं मे खणं पि न खमं विणट्ठदेहस्स । खलसविलासद्धच्छीहिं निच्चं पेच्छिज्जमाणस्स ॥ २२ ॥ तो रयणीए अनिमेइऊण नियपरियणस्स विसवत्तं । गंतुं जवा पयट्टो पुव्वदिसा दुत्तमेगागी ॥ २३ ॥

---

अथ नृपस्निग्धसविकाशचक्षुर्विक्षेपगोचरीभूतम् । दृष्ट्वा सपत्नीजनन्या राजसन्निधिनिषण्णया ॥ १७ ॥ निजकसुतराज्यविघ्नं विभावयन्त्या निधुवनान्ते । भक्ष्यविमिश्रं कार्म्मणमुपनीतं तस्य हननार्थम् ॥ १८ ॥ अविकल्प्य तेन चोपभुक्तमथ तदुत्थदोषेण । रूपबलाङ्गविनाशी प्रादुर्भूतो महाव्याधिः ॥ १९ ॥ तेन च विधुरमसारं जुगुप्सनीयं च प्रेक्ष्य शरीरम् । अत्यन्तशोकग्रस्तस्ताराचन्द्रो विचिन्तयति ॥ ॥ २० ॥ अधनानां गुरुरोगातुराणां निजस्वजनपरिभवहतानाम्। मरणमथवान्यदेशे गमनं युज्यते सुपुरुषाणाम् ॥ २१ ॥ तस्मादत्र निवसितुं मे क्षणमपि न क्षमं विनष्टदेहस्य । खलसविलासार्द्धाक्षिभिर्नित्यं प्रेक्ष्यमाणस्य ॥ २२ ॥ ततो रजन्यामनिवेद्य निजपरिजनस्य विषवार्त्ताम् । गन्तुं जवात् प्रवृत्तः पूर्वदिशि द्रुतमेकाकी ॥ २३ ॥

अच्चंतं विमणमणो सणियं सणियं कमेण गच्छंतो। अन्नन्नगागरनगरगामनियरं च पेछंतो ॥२४॥ सम्मेय-महागिरिपरिसरम्मि पत्तो पुरम्मि एगम्मि। लोगो य पुच्छिओ तत्थ को गिरी भन्नइ इमो त्ति ॥२५॥ लोगेण जंपियं मुद्ध! दूरदेसागयत्तणेण इमं। रविमिव सुविस्सुयं पि हु जइ पुछसि ता निसामेसु ॥ २६ ॥ सम्मेय-महागिरिराओ एस जहिं जिणसमूहु परिचत्तदेहु। निव्वाणहपत्तु सुरासुरेहिं थुवंतु भत्तिभरनिब्भरेहिं ॥ २७॥ पवणुल्लसंततरुपल्लवेहिं सव्वायरेण नाचइ करेहिं। आराहणत्थु पहि इंतभव जो विहंगरवेहिं निमंतइ व्व ॥ २८ ॥ नासग्गनिवेसियचक्खुलक्खु थेवं पि देहसोक्खाणपेक्खु। एगग्गचित्तु निविग्घु जित्थु परमक्खरु झायइ जोगिसत्थु ॥ २९ ॥

---

अत्यन्तं विमनमनाः शनैः शनैः क्रमेण गच्छन्। अन्यान्यनगाकरनगरग्रामनिकरं च पश्यन् ॥ २४ ॥ सम्मेतमहागिरिपरिसरे प्राप्तः पुरे चैके। लोकश्च पृष्टस्तत्र को गिरिर्भण्यतेऽयमिति ॥ २५ ॥ लोकेन जल्पितं मुग्ध? दूरदेशागतत्वेनेमम्। रविमिव सुविश्रुतमपि हि यदि पृच्छसि तदा निशामय ॥ २६ ॥ सम्मेतमहागिरिराज एष यत्र जिनसमूहः परित्यक्तदेहः। निर्वाणप्राप्तः सुरासुरैः स्तूयमानो भक्तिभरनिर्भरैः ॥ २७ ॥ पवनोल्लसत्तरुपल्लवैः सर्वादरेण नृत्यति करैः। आराधनार्थं पथि गच्छतो भव्यान् यो विहंगरवैर्निमन्त्रयतीव ॥ २८ ॥ नासाग्रनिवेशितचक्षुर्लक्षः स्तोकमपि देहसौख्यानपेक्षः। एकाग्रचित्तोनिर्विघ्नं यत्र परमाक्षरं ध्यायते योगिसार्थः ॥ २९ ॥

भूमीगुणेण जहिं मुक्कवेर कीलंति दुट्ठसत्ता वि पउर । मुद्धा वि जेत्थु कयपाणचाया देवत्तणु पावहिं गयविसाय ॥३०॥ अइरम्मयगुणरंजिय पडिभयवज्जिय विलसहिं जहिं किन्नरमिहुण । सव्वोउयकुसुमुद्धुरफलभरमणहर चाउद्दिसि छज्जंति वण ॥ ३१ ॥ एवं निसामिऊणं अच्चंतं जायचित्तपरितोसो । स देहं चइउमणो चलितो तित्थं ति काऊण ॥ ३२ ॥ गयणग्गलग्गदीहरकरालसिहरोवरुद्धदिसिपसरं । अह उवउत्तो सम्मं सणियं सणियं तमारूढो ॥ ३३ ॥ कयकरचरणविसुद्धी सरसीरुहाइं गहाय सरसीओ । अंसुयसंजमियमुहो अजियाईणं जिणिंदाणं ॥ ३४ ॥ मणिरयणभासुराणं पडिमाणं कांतिसलिलधोयाण । फालियसिद्धसीलाण य पूयापब्भारमुवरयइ ॥ ३५ ॥

---

भूमीगुणेन यत्र मुक्तवैराः क्रीडन्ति दुष्टसत्त्वा अपि प्रचुराः । मुग्धा अपि यत्र कृतप्राणत्यागा देवत्वं प्राप्नुवन्ति गतविषादाः ॥ ३० ॥ अतिरम्यकगुणरजितानि प्रतिभयवर्जितानि विलसन्ति यत्र किन्नरमिथुनानि । सर्वर्त्तुककुसुमोद्धुरफलभारमनोहराणि चातुर्दिक्षु राजन्ते वनानि ॥ ३१ ॥ एवं निशम्यात्यन्तं जातचित्तपरितोषः । स देहं त्यक्तुमनाश्चलितस्तीर्थमिति कृत्वा ॥ ३२ ॥ गगनाग्रलग्नदीर्घकरालशिखरोपरुद्धदिक्प्रसरम् । अथोपयुक्तः सम्यक् शनैः शनैस्तमारूढः ॥ ३३ ॥ कृतकरचरणविशुद्धिः सरोरुहानि गृहीत्वा सरस्याः । अंशुकसंयमितमुखोऽ-जितादीनां जिनेन्द्राणाम् ॥ ३४ ॥ मणिरत्नभासुराणां प्रतिमानां कान्तिसलिलधौतानाम् । स्फाटिकसिद्धशिलानां च पूजाप्राग्भारमुपरचति ॥ ३५ ॥

जिणपायपूयसुहसिद्धखेत्तगुणवद्धमाणसुहभावो । आणन्दसंदिरच्छो थुइं च इय काउमाढत्तो ॥ ३६ ॥ इह निहणियमोहाणंतकालप्परूढप्पबलजणणमच्चूवेल्लिमुल्लरिऊणं । दरिसियसिवमग्गा जे गया सिद्धिवासं ॥ ३७ ॥ सिवमयलमणंतं ते जिणिंदा जयंति पयपणइप्पभावेणं पि । जेसिं असेसप्पवरसुहसणाहा हुंति लीलाए भव्वा ॥ ३८ ॥ निययकरयलं वालोइयालोयलोया । तिहुयणजणपुज्जा ते जिणिन्दा जयंति ॥ ३९ ॥ इय थोऊण जिणिंदे समुच्चगिरिसिहरमवरमारुहति । रोगघुणजज्जरं देहमुज्झिउं जाव परितुट्ठो ॥४०॥ ताव सरइंदुसुंदरपसरंतुद्दामकंतिपब्भारं । सीलंगसरक्कंतं व दूरमोणमियकायलयं ॥ ४१ ॥ हेट्ठामुहलंबियदीहबाहुकरनहमऊहरज्जूहिं । नरयावडनिवडियपाणिलोयमागरिसंतं व ॥ ( ४२ ) ॥

---

जिनपादपूजाशुभसिद्धक्षेत्रगुणवर्द्धमानशुभभावः । आनन्दस्यन्दिनयनः स्तुतिं चेति कर्तुमारब्धः ॥ ३६ ॥ इह निहतमोहा अनन्तकालप्ररूढप्रबलजननमृत्युवल्लिमुच्छिद्य । दर्शितशिवमार्गा ये गताः सिद्धिवासम् ॥ ३७ ॥ शिवमचलमनन्तं ते जिनेन्द्रा जयन्ति पदप्रणतिप्रभावेनापि । येषाम् अशेषप्रवरसुखसनाथा भवन्ति लीलया भव्याः ॥ ३८ ॥ जिनककरतलमिवालोकितालोकलोकाः । त्रिभुवनजनपूज्यास्ते जिनेन्द्रा जयन्ति ॥ ३९ ॥ इति स्तुत्वा जिनेन्द्रान् समुच्चगिरिशिखरमपरमारोहति । रोगघुणजर्जरं देहमुज्झितुं यावत् परितुष्टः ॥ ४० ॥ तावच्छरदिन्दुसुन्दरप्रसरदुद्दामकान्तिप्राग्भारम् । शीलाङ्गसरकान्तमिव दूरमवनमितकायलतम् ॥ ४१ ॥ अधोमुखलम्बितदीर्घबाहुकरनखमयूखरज्जुभिः । नरकावटनिपतितप्राणिलोकमाकर्षयन्तमिव ॥ ( ४२ ) ॥

अमराचलनिच्चलचलणअंगुलीविमलकंतिनहमिसओ । खंतिपमोक्खदसविहमुणिधम्मं पिव पयासंतं ॥ ४३ ॥ फालियमणिरुइरप्पहगिरिकंदरसंठियं सुदिव्वतणुं । साहुं उस्सग्गगयं पेच्छति सुहनिवहभूमिं व ॥ ४४ ॥ सवसं च्चिय मरणं मह ताव मुणिंदं इमं नमंसामि । इति चिंतिऊण संभमभरियच्छो नमइ सो साहुं ॥ ४५ ॥ नमिऊण भत्तिसारं रूवं जा नियइ विम्हइयचित्तो । ता विज्जाहरमिहुणं गयणयलाओ समोयरियं ॥ ४६ ॥ हरिसवसवियसियच्छं पडियं चलणुप्पलम्मि से मुणिणो । गुणसंथवं च काउं निसन्नममले महीवट्ठे ॥ ४७ ॥ ताराचंदेण ततो भणियं इह भे कुतो समागमणं । केण य कज्जेण तत्तो वुत्तं विज्जाहरेण इमं ॥ ४८ ॥ विज्जाहरसेणीअपहुणो एयस्स वंदणनिमित्तं । भणियं ताराचंदेण भद्द? को एस मुणिसीहो ॥ ४९ ॥

---

अमराचलनिश्चलचरणाङ्गुलिविमलकान्तिनखमिषतः । क्षान्तिप्रमुखदशविधमुनिधर्म्ममिव प्रकाशयन्तम् ॥ ४३ ॥ स्फाटिकमणिरुचिरप्रभागिरिकन्दरासंस्थितं सुदिव्यतनुम् । साधुमुत्सर्गगतं पश्यति शुभनिवहभूमिमिव ॥ ४४ ॥ स्ववशमेव मरणं मम तावन्मुनीन्द्रमिमं नमस्यामि । इति चिन्तयित्वा संभ्रमभरिताक्षो नमति स साधुम् ॥ ४५ ॥ नत्वा भक्तिसारं रूपं यावत् पश्यति विस्मयितचित्तः । तावद् विद्याधरमिथुनं गगनतलात् समवतरितम् ॥ ४६ ॥ हर्षवशविकसिताक्षं पतितं चरणोत्पले तस्य मुनेः । गुणसंस्तवं च कृत्वा निषण्णममले महीपृष्ठे ॥ ४७ ॥ ताराचन्द्रेण ततो भणितमिह युष्माकं कुतः समागमनम् । केन च कार्येण तत उक्तं विद्याधरेणेदम् ॥ ४८ ॥ विद्याधरश्रेणिकप्रभोरेतस्य वन्दननिमित्तम् । भणितं ताराचन्द्रेण भद्र? क एष मुनिसिंहः ॥ ४९ ॥

परिचत्ताभरणो वि हु दिव्वालंकारभूसियंगो व । लक्खिज्जइ मणुओ वि हु अमणुयमाहप्पकलिओ व ॥५०॥ अह खेयरेण हरिसूसियेण अच्चंतपयत्तेण पुच्छिएण। पडिभणिओ निसुणि बहुगुणसणाहु विज्जाहरसेणिहि पहु ॥ ५१ ॥ जरजम्ममरणरणरणयभीमु सयमेव मुणिवि भवदुहु असीमु । रज्जम्मि ठविणु निययपुत्तु सुस्समणु जाउ समसत्तुमित्तु ॥ ५२ ॥ सा रायलच्छी अच्चंतभत्त जिं लीलइं खलमहिल व चत्त। जसु अज्ज वि विरहहुयासतत्तु अंतेउरु विरमति नो रुयंतु ॥ ५३ ॥ पन्नतिपमोक्खपहाणविज्ज दासि व जस्सु कज्जेसु सज्ज । विरूवड्ढिय नट्टिय जेम्व कित्ति तइलोक्क रंगि नच्चिय सुदित्ति ॥ ५४ ॥ तस्सत्तिए जायअणेगलद्धि जस्सु अणुवम रेहइ सुसमिद्धि । जो कुणाति अखंडिउ मासखवणु तस्सु तुल्लु होउ धरणीए कवणु ॥ ५५ ॥

---

परित्यक्ताभरणोऽपि हि दिव्यालंकारभूपिताङ्ग इव । लक्ष्यते मनुजोऽपि ह्यमनुजमाहात्म्यकलित इव ॥ ५० ॥ अथ विद्याधरेण हर्षोच्छ्वसितेनात्यन्तप्रयत्नेन पृष्टेन। प्रतिभणिनो निशृणु बहुगुणसनाथो विद्याधर श्रेणिकस्य प्रभुः ॥ ५१ ॥ जराजन्ममरणरणरणकभीमं स्वयमेव ज्ञात्वा भवदुःखमसीमम् ॥ । राज्ये स्थापयित्वा निजपुत्रं सुश्रमणो जातः समशत्रुमित्रः ॥ ५२ ॥ सा राजलक्ष्मीरत्यन्तभक्ता येन लीलया खलमहिलेव त्यक्ता । यस्याद्यापि विरहहुताशतप्तोऽन्तःपुरो विरमति नो रुदन् ॥ ५३ ॥ प्रज्ञप्तिप्रमुखप्रधानविद्या दासीव यस्य कार्येषु सज्जा । निरूपर्द्धिका नर्त्तिता यथा कीर्त्तिस्त्रैलोक्यरङ्गे नाटिता सुदीप्तिः ॥ ५४ ॥ तच्छक्त्या जातानैकलब्धिर्यस्यानुपमा राजते सुसमृद्धिः । यः करोत्यखण्डितं मासक्षपणं तस्य तुल्यो भवति धरण्यां कः ॥ ५५ ॥

एरिसगुणजुत्तउ भवह विरत्तउ चारित्तुत्तमरयणनिहि । एहु मुणहि मुणीसरु पणयनरेसरु निरुवमकरुणामयरसजलहि ॥ ५६ ॥ इय जंपिऊण विरए खयरे रोमंचकंचुकियकाओ । ताराचंदो भत्तीए तं मुणिं पणमति पुणो वि ॥ ५७ ॥ अह तस्स तणुं गुरुरोगजज्जरं पेच्छिउं भणति खयरो । हंहो महायस तुमं न कीस एयस्स वरमुणिणो ॥ ५८ ॥ कप्पतरुकिसलयसमं पयजुगलं नणु परामुसित्ताणं । अवणेसि रोगमेयं अणप्पमाहप्पगुणनिहिणो ॥ ५९ ॥ एवं वुत्तो परमप्पमोयलच्छि समुव्वहंतो सो । परिमुसति महामुणिणो पयपंकयमुत्तमंगेण ॥ ६० ॥ अह मुणिमाहप्पेणं तक्खणमेव य पणट्ठचिररोगो । अब्भहियसुरूवतणू ताराचंदो दढं जातो ॥ ६१ ॥ परमपरितोससारं तद्दिवसुवलद्धजीवियव्वं व । अप्पाणं मन्नंतो य थोउमेवं समाढत्तो ॥ ६२ ॥

---

ईदृशगुणयुक्तं भवतो विरक्तं चारित्रोत्तमरत्ननिधिम् । एतं जानीहि मुनीश्वरं प्रणतनरेश्वरं निरुपमकरुणामृतरसजलधिम् ॥ ५६ ॥ इति जल्पित्वा विरते खेचरे रोमाञ्चकञ्चुकितकायः । ताराचन्द्रो भक्त्या तं मुनिं प्रणमति पुनरपि ॥ ५७ ॥ अथ तस्य तनुं गुरुरोगजर्जरं प्रेक्ष्य भणति खचरः । भो भो महायशस्त्वं न कस्मादेतस्य वरमुनेः ॥ ५८ ॥ कल्पतरुकिसलयसमं पदयुगलं ननु परामृश्य । अपनयसि रोगमेतमनल्पमाहात्म्यगुणनिधेः ॥ ५९ ॥ एवमुक्तः परमप्रमोदलक्ष्मीं समुद्वहन् सः । परिमृशति महामुनेः पदपङ्कजमुत्तमाङ्गेन ॥ ६० ॥ अथ मुनिमाहात्म्येन तत्क्षणमेव च प्रणष्टचिररोगः । अभ्यधिकसुरूपतनुस्ताराचन्द्रो दृढं जातः ॥ ६१ ॥ परमपरितोषसारं तद्दिवसोपलब्धजीवितव्यमिव । आत्मानं मन्यमानश्च स्तोतुमेवं समारब्धः ॥ ६२ ॥

जय निज्जियकुसुमाउह? वज्जियसावज्जकज्जपडिबंध? । अंगीकयसंजमभर? समाहिनिग्गहियमोहग्गह ॥ ॥ ६३ ॥ सुरविज्जाहरवंदिय? रागमहाकरिविणासखरनहर? । हरिणच्छिसुतिक्खकडक्खबाणलक्खेहिं विअखुद्ध? ॥ ६४ ॥ तिव्वदुहजलणसंतत्तसत्तपीऊसवरिससंकास? । कासकुसुमप्पगासुच्छलंतजसधवलियदियंत? ॥६५॥ कलिकालुब्भडपसरंतधंतहीरंतसिवपहपईव? । निस्सामन्नमहागुणरयणोहनिहाण? जयसि तुमं॥६६॥ रोगाउरंगचागत्थमित्थ मज्झागमो वि धुवमिण्हिं । सहलो जाओ तुह नाह पायपंकयपभावेण ॥ ६७ ॥ ता इत्तो जयबंधव? माया जणगो य बंधवो सयणो । तुममेवेक्को मुणिवर? आइससु मए जमिह किच्चं ॥ ६८ ॥ अह मुणिवइणा जोग्गोत्ति कलिय पाराविऊण उस्सग्गं । सम्मत्तुत्तममूलो पंचाणुव्वयमहाखंधो ॥ ६९ ॥

---

जय निर्जितकुसुमायुध? वर्जितसावद्यकार्यप्रतिबन्ध? । अङ्गीकृतसंयमभार? समाधिनिर्गृहीतमोहग्रह? ॥ ६३ ॥ सुरविद्याधरवन्दित? रागमहाकरिविनाशखरनखर? । हरिणाक्षिसुतीक्ष्णकटाक्षवाणलक्षैरप्यक्षुब्ध? ॥ ६४ ॥ तीव्रदुःखज्वलनसन्तप्तसत्त्वपीयूपवर्षसंकाश? । काशकुसुमप्रकाशोच्छलद्यशोधवलितदिगन्त? ॥ ६५ ॥ कलिकालोद्भटप्रसरद्ध्वान्तह्रियमाणशिवपथप्रदीप? । निस्सामान्यमहागुणरत्नौघनिधान? जयसि त्वम् ॥ ६६ ॥ रोगातुरांगत्यागार्थमत्र ममागमोऽपि ध्रुवमिदानीम् । सफलो जातस्तव नाथ? पादपंकजप्रभावेन ॥६७॥ तस्मादितो जगद्बान्धव? माता जनकश्च बान्धवः स्वजनः । त्वमेवैको मुनिवर? आदिश मम यदिह कृत्यम् ॥ ६८ ॥ अथ मुनिपतिना योग्य इति कलित्वा पारयित्वा कायोत्सर्गम् । सम्यक्त्वोत्तममूलः पञ्चाणुव्रतमहास्कन्धः ॥ ६९ ॥

तिगुणव्वयसाहालो चउसिक्खावयमहंत—पडिसाहो। बहुनियमकुसुमकिन्नो जससोरभभरियदिसिनिवहो ॥ ७० ॥ सुरमणुयरिद्धिफलपडलमणहरो पावतावपसरहरो। उवदिट्ठो तस्स जिणिंदकहियसद्धम्मकप्पतरू ॥ ७१ ॥ अच्चंतसुद्धसद्धावेरग्गविलग्गतिव्वभावेण। सद्दहणनाणसारं जहोचियं तेण य पवन्नो ॥७२॥ पडिबोहिऊण एवं ताराचंदं पुणो वि मुणिवसभो। मुक्खेक्कबद्धलक्खो काउस्सग्गे ठितो थिमिओ ॥ ७३ ॥ तो विज्जाहरमिहुणं ताराचंदो य झाणविग्घो त्ति। बाहिं नीहरियाइं सप्पणयं नमिउं साहुं ॥ ७४॥ साहम्मिओ त्ति संजायपणयभावेण तेण खयरेण। ताराचंदस्स विसाइदोसविद्धंसणी गुलिया ॥ ७५ ॥ दिन्ना भणितो य इमो अहो महाभाग तुममिमं भोत्तु। विसकम्मणाइभोगे वि निब्भओ भमसु निस्संकं ॥ ७६ ॥

---

त्रिगुणव्रतशाखावान् चतुःशिक्षाव्रतमहाप्रतिशाखः। बहुनियमकुसुमकीर्णो यशः सौरभभृतदिग्निवहः ॥ ७० ॥ सुरमनुजर्द्धिफलपटलमनोहरः पापतापप्रसारहरः। उपदिष्टस्तस्य जिनेन्द्रकथितसद्धर्म्मकल्पतरुः ॥ ७१ ॥ अत्यन्तशुद्धश्रद्धावैराग्यविलग्नतीव्रभावेन। श्रद्दहनज्ञानसारं यथोचितं तेन च प्रपन्नः ॥ ७२ ॥ प्रतिबोध्यैवं ताराचन्द्रं पुनरपि मुनिवृषभः। मोक्षैकबद्धलक्षः कायोत्सर्ग्गे स्थितः स्तिमितः ॥ ७३ ॥ ततो विद्याधरमिथुनं ताराचन्द्रश्च ध्यानविघ्न इति। बहिर्निस्सृतौ सप्रणयं प्रणम्य साधुम् ॥ ७४ ॥ साधर्म्मिक इति संजातप्रणयभावेन तेन खचरेण। ताराचन्द्रस्य विषादिदोषविध्वंसिनी गुलिका ॥ ७५ ॥ दत्ता भणितश्चायमहो महाभाग? त्वमिमां भुक्त्वा। विषकार्म्मणादिभोगेऽपि निर्भयो भ्रमसि निःशंकम् ॥ ७६ ॥

गहिया ताराचंदेण सायरं तयणु खयरमिहुणम्मि । गयणयलं उप्पइए सा उवभुत्ता पहिट्ठेण ॥७७॥ ओयरिओ सेलाओ पगुणसरीरो कमेण गच्छन्तो । पुव्वमहोयहितीरे रयणपुरं नयरमणुपत्तो ॥ ७८ ॥ अइकसिणकुंतलकलावरेहंतसीरमइरुइरं । रूवजियकुसुमविसिहं दट्ठूण तं च गणियाए ॥ ७९ ॥ रूवागरिसियहिययाए मयणमंजूसानामधेयाए । भणिया जणणी अंमो जइ पुरिसमिमं न आणेसि ॥ ८० ॥ ता जीवियव्वमुज्झामि निच्छियं मा करेज्जसु विगप्पं । इय भणिए अत्ताए रायसुओ आणीओ सगिहे ॥ ८१ ॥ न्हाणविलेवणभोयणपमुहप्पडिपत्तिपुव्वमह तत्थ । वुछो तीए सद्धिं सुचिरं सो नियगेहि व्व ॥ ८२ ॥ नवरं अत्ता जंपति आ पावे मुद्धि मयणमंजूस । समणं व निद्धणं धरसि कीस एयं तुमं पहियं ॥ ८३ ॥

---

गृहीता ताराचन्द्रेण सादरं तदनु खचरमिथुने । गगनतलमुत्पतिते सोपभुक्ता प्रहृष्टेन ॥ ७७ ॥ अवतीर्णः शैलात् प्रगुणशरीरः क्रमेण गच्छन् । पूर्वमहोदधितीरे रत्नपुरं नगरमनुप्राप्तः ॥ ७८ ॥ अतिकृष्णकुन्तलकलापराजच्छिरमतिरुचिरम् । रूपजितकुसुमविशिखं दृष्ट्वा तं च गणिकया ॥ ७९ ॥ रूपाकर्षितहृदयया मदनमञ्जूषानामधेयया । भणिता जनन्यम्ब ? यदि पुरुषमिमं नानयसि ॥ ८० ॥ तदा जीवितव्यमुज्झामि निश्चितं मा कुरु विकल्पम् । इति भणिते श्वश्र्वा राजसुत आनीतः स्वगृहे ॥ ८१ ॥ स्नानविलेपनभोजनप्रमुखप्रतिपत्तिपूर्वमथ तत्र । उषितस्तया सार्द्धं सुचिरं स निजकगेह इव ॥ ८२ ॥ नवरं श्वश्रूः जल्पति आ पापे ? मुग्धे ? मदनमञ्जूषे ? । श्रमणमिव निर्धनं धरसि कस्मादेतं त्वं पथिकम् ॥ ८३ ॥

जेण पणरमणीणं वच्छे कुलक्कमो एस जं न धणहीणो । कामिज्जइ वज्जहरो वि अहव मीणज्झओ वि सयं ॥ ८४ ॥ धूयाए जंपियं अम्म तुज्झपायपसायओ होही । आसत्तवेणियं धणमिमं पि किं काहिसि परेण ॥८५॥ अह निट्ठुरेहिं वयणेहिं तज्जिया वारिया य सा बहुसो । जा नेव तं विमुंचति अत्ताए चिन्तियं ताए ॥ ८६ ॥ एयम्मि जीवंते पडिवज्जति मज्झ नेव वयणमिमा । ता उग्गविसं दाउं हणामि निहुयणट्ठियाहमिमं ॥ ८७ ॥ तो एगम्मि अवसरे उग्गविसुम्मिस्सचुन्नयसणाहो । तंबोलवीडगो सि उवणीओ तीए पणएण ॥ ८८ ॥ गहितो ताराचन्देण भक्खिओ वि य वियप्परहिएण । जाओ य विसवियारो न पुव्वगुलियाणुभावेण ॥ ८९ ॥ हा कहं विसप्पओगे वि नो मओ एस संपयं पावो । इइ तीए जीयहरणं पुणो वि से कम्मणं दिन्नं ॥ ९० ॥

---

येन पण्यरमणीनां वत्से ? कुलक्रम एप यन्न धनहीनः । काम्यते वज्रधरोऽप्यथवा मीनध्वजोऽपि स्वयम् ॥ ८४ ॥ वध्वा जल्पितमम्ब ? त्वत्पादप्रसादाद् भविष्यति । आसत्त्वव्ययनीयं धनमिदमपि किं करिष्यस्यपरेण ॥८५॥ अथ निष्ठुरैर्वचनैस्तार्जिता वारिता च सा बहुशः ॥ यावन्नैव तं विमुञ्चति श्वश्र्वा चिन्तितं तदा ॥ ८६ ॥ एतस्मिन् जीवति प्रतिपद्यते मम नैव च वचनमियम् । तस्मादुग्रविषं दत्त्वा हनामि निधुवनस्थिताहमिमम् ॥ ८७ ॥ तत एकस्मिन्नवसर उग्रविषोन्मिश्रचूर्णसनाथः । ताम्बूलवीटिकस्तस्मै उपनीतस्तया प्रणयेन ॥ ८८ ॥ गृहीतस्ताराचन्द्रेण भक्षितोऽपि च विकल्परहितेन। जातश्च विपविकारो न पूर्वगुलिकानुभावेन ॥ ८९ ॥ हा कथं विषप्रयोगेऽपि नो मृत एप सांप्रतं पापः । इति तया जीवहरणं पुनरपि तस्मै कार्मणं दत्तम् ॥ ९० ॥

तेणावि तस्स गुलियाणुभावओ न अहेसि जियनासो । अवि य हियवरी आरोग्गरूवलच्छी पवित्थरिया ॥ ९१ ॥ वज्जाहय व्व सुसिय व्व सयणदूरुज्झिय व्व सा तत्तो । करपल्हत्थियवयणा सोगं काउं समाढत्ता ॥९२॥ भणिया ताराचंदेण अम्म तं कीस अज्ज कसिणमुही । पेच्छिज्जसि पढमसमुब्भवंतघणपाउससिरि व्व ॥ ९३ ॥ तीए भणियं हे वच्छ? तेण कहिएण को गुणो होही। हियमवि सुजुत्तियं पि हि जं काउं नेव सिक्किहसि ॥९४॥ तेणं पयंपियं अम्म ? कहसु काहामहं तुहं वयणं । तीए वुत्तं पुत्तय जइ एवं ता निसामेहि ॥ ९५॥ सुविसिट्ठ-लक्खणधरो रूवी सुगुणो मणोरमसरीरो । तं वच्छ विसयगिद्धीए निहणमचिरेण पाविहसि ॥९६॥ जं वायामं न करेसि नेव उववसिससि सिट्ठगोट्ठीसु । देव भवणासमेसु य न कयाचि वि जं च परिभमसि ॥ ९७ ॥

---

तेनापि तस्य गुलिकानुभावान्नासीज्जीवनाशः। अपि च हितकारिण्यारोग्यरूपलक्ष्मीः प्रविस्तारिता ॥ ९१ ॥ वज्राहतेव शुष्केव स्वजन-दूरोज्झितेव सा ततः । करपरिच्छादितवदना शोकं कर्तुं समारब्धा ॥ ९२ ॥ भणिता ताराचन्द्रेणाम्ब ? त्वं कस्मादद्य कृष्णमुखी । दृश्यसे प्रथमसमुद्भवद्घनप्रावृट्श्रीरिव ॥ ९३ ॥ तया भणितं हे वत्स ? तेन कथितेन को गुणो भवति । हितमपि सुयुक्तिकमपि यत्कर्तुं नैव शिक्षिष्यसि ॥ ९४ ॥ तेन प्रजल्पितमम्ब ? कथय करिष्याम्यहं तव वचनम् । तयोक्तं पुत्र ? यद्येवं तदा निशामय ॥ ९५ ॥ सुविशिष्ट-लक्षणधरो रूपी सुगुणो मनोरमशरीरः । त्वं वत्स ? विषयगृद्ध्या निधनमचिरेण प्राप्स्यसि ॥ ९६ ॥ यद् व्यायामं न करोषि नैवोप-विशसि श्रेष्ठगोष्ठीषु । देवभवनाश्रमेषु च न कदाचिदपि यच्च परिभ्रमसि ॥ ९७ ॥

अच्छिन्नविसयवंछाए वच्छ गच्छति हरी ति मच्चुमुहं । किं पुण तुमं सरोरुहमुणालदलकोमलसरीरो ॥९८॥ दुल्लहलंभं पि हु वच्छुमवरमिह घडेज्ज विही जोगा । पुरिसरयणाण तुम्हारिसाण कत्तो पुणो घडणा ॥९९॥ ता वच्छ अहं एयाए चेव चिंताए सोगसंतत्ता । पइदियहहीयमाणं दट्ठुं तुममेव वड्ढामि ॥ २४०० ॥ सच्छसहावत्तणओ ताराचंदेण पडिस्सुयमिमं च । नवरं रहम्मि इयरीए कवडमेयंति सिट्ठं से ॥ १ ॥ अह पुव्वट्ठिईए पडिदिणं पि वट्टंतम्मि सा तम्मि । चिंतेइ विसाईण वि अगोयरो एस पाविट्ठो ॥ २ ॥ जइ सत्थेण हणिज्जइ एसो ता मरइ नूणं धूया वि । अहह पडियाररहियं केरिसगं वसणमावडियं ॥ ३ ॥ इय सोगाउलहियया गिहम्मि ठाउं अपारयंती सा । चेडीहिं परिवुडा नयरपरिसरं निग्गयादट्ठुं ॥ ४ ॥

---

अच्छिन्नविषयवांछया वत्स? गच्छति हरिरपि मृत्युमुखम् । किं पुनस्त्वं सरोरुहमृणालदलकोमलशरीरः ॥ ९८ ॥ दुर्लभलभ्यमपि हि वस्तु अपरमिह घटेत विधिर्योगात् । पुरुषरत्नानां युष्मादृशानां कुतः पुनर्घटना ॥ ९९ ॥ तस्माद् वत्स? अहमेतया चैव चिन्तया शोकसंतप्ता । प्रतिदिवसं हीयमानं दृष्ट्वा त्वामेव वर्द्धये ॥ २४०० ॥ स्वच्छस्वभावत्वात् ताराचन्द्रेण प्रतिश्रुतमिदं च । नवरं रहसीतरया कपटमेतदिति शिष्टं तस्मै ॥ १ ॥ अथ पूर्वस्थित्या प्रतिदिनमपि वर्त्तमाने सा तस्मिन् । चिन्तति विषादीनामप्यगोचर एष पापिष्ठः ॥ २ ॥ यदि शस्त्रेण हन्यत एप तदा म्रियते नूनं वधूरपि । अहह प्रतिकाररहितं कीदृशं व्यसनमापतितम् ॥ ३ ॥ इति शोकाकुलहृदया गृहे स्थातुमशक्नुवन्ती सा । चेटीभिः परिवृता नगरपरिसरं निर्गता द्रष्टुम् ॥ ४ ॥

पेच्छंती य जहिच्छं इओ तओ जलहितीरमणुपत्ता । दिट्ठं च तत्थ देसंतरागयं तीए बोहित्थं ॥५॥ पुट्ठो तव्वासिजणो कत्तो इममागयं कया जाही । तेण वुत्तं दूराओ आगयं अज्जनिसि जाही ॥ ६ ॥ एवं भणिए तीए विचिन्तियं होउ सेसचिंताहिं । इह सो आरोविज्जउ निसाए अइनिब्भरपसुत्तो ॥७॥ वचइ य दूरदेसंतरम्मि तह जह पुणो वि न वलेज्ज । एवं च कए धूया वि मज्झ नो जीवियं चइही ॥ ८ ॥ अह जाणवत्तनाहो एगंते तीए भासिओ एवं । पुत्तसमेया अहयं तुमए सह आगमिस्सामि ॥ ९ ॥ तेणं पयंपियं अम्ब जइ तुमं इच्छसे समागन्तुं । ता मज्झरत्तसमए अज्जं नावं सरेज्जासि ॥ १० ॥ पडिवन्नं तीए गया य मंदिरे आगए य निसिमज्झे । निब्भरनिद्दासुत्तो ताराचंदो ससयणिज्जे ॥ ११ ॥

---

पश्यन्ती च यथेच्छमितस्ततो जलधितीरमनुप्राप्ता । दृष्टं च तत्र देशान्तरागतं तया जलयानम् ॥ ५ ॥ पृष्टस्तद्वासिजनः कुत इदमागतं कदा यास्यति । तेनोक्तं दूरादागतमद्यनिशि यास्यति ॥ ६ ॥ एवं भणिते तया विचिन्तितं भवतु शेषचिन्ताभिः । इह स आरोप्यते निशायामतिनिर्भरप्रसुप्तः ॥ ७ ॥ व्रजति च दूरदेशान्तरे तत्र यत्र पुनरपि न वलेत । एवं च कृते वधूरपि मम नो जीवितं त्यक्ष्यति ॥ ८ ॥ अथ यानपात्रनाथ एकान्ते तया भाषित एवम् । पुत्रसमेताहं त्वया सहागमिष्यामि ॥ ९ ॥ तेन प्रजल्पितमम्ब ? यदि त्वमिच्छसि समागन्तुम् । तदा मध्यरात्रसमयेऽद्य नावं सरिष्यसि ॥ १० ॥ प्रतिपन्नं तया गता च मन्दिर आगते च निशामध्ये । निर्भरनिद्रासुप्तस्ताराचन्द्रः स्वशयनीये ॥ ११ ॥

धूयाए पसुत्ताए सणिहं चेडीहिं उक्खिविय नीओ। नावाए एगदेसे सेज्जारूढो चिय विमुक्को ॥१२॥ भणिओ य तीए नावाए नायगो एस मुज्झ पुत्तो त्ति । एसा अहंपि एत्तो तुममेक्को अम्ह सत्थवाहो ॥ १३ ॥ आमंति जाणनाहेण जंपिए भूरिकवडभरिया सा । तज्जणदिट्ठिं वंचिय जहा गयं लहु पडिनियत्ता ॥ १४॥ मुक्कं च जाणवत्तं वज्जंताउज्जघोररसिएण । बुद्धो ताराचंदो य संभमुब्भंतनयणपुडो ॥ १५ ॥ किं एयं को देसो कत्थाहं को व मम इह सहाओ। इय चिंतन्तो जा नियइ ताव पेच्छति महाजलहिं ॥ १६ ॥ अच्चंतचंडकोदंडमुक्ककंडं व सिग्घवेगेण । आपूरियसियवडयं गच्छंतं जाणवत्तं पि ॥ १७ ॥ विम्हियमणो य चिन्तति छायाखेड्डं व इंदजालं व । अविभावणिज्जरूवं किमिव ममावडियमिममहवा ॥ १८ ॥

---

वध्वां प्रसुप्तायां शनैश्चेटीभिरुत्क्षिप्य नीतः । नाव एकदेशे शय्यारूढ एव विमुक्तः ॥ १२ ॥ भणितश्च तया नावो नायक एष मम पुत्र इति । एषाहमपीतस्त्वमेक अस्माकं सार्थवाहः ॥ १३ ॥ आमिति याननाथेन जल्पिते भूरिकपटभृता सा । तज्जनदृष्टिं वञ्चित्वा यथा गता लघु प्रतिनिवृत्ता ॥ १४ ॥ मुक्तं च यानपात्रं व्रजदातोद्यघोररसितेन । बुद्धस्ताराचन्द्रश्च संभ्रमोद्भ्रान्तनयनपुटः ॥ ॥ १५ ॥ किमेतत् को देशः कुत्राहं को वा ममेह सहायः । इति चिन्तन् यावत् पश्यति तावत् प्रेक्षते महाजलधिम् ॥ १६ ॥ अत्यन्तचण्डकोदण्डमुक्तकाण्डमिव शीघ्रवेगेन । आपूरितसितपटलं गच्छन्तं यानपात्रमपि ॥ १७ ॥ विस्मितमनाश्च चिन्तति छायाखेड्यं वेन्द्रजालं वा । अविभावनीयरूपं किमिव ममापतितमिदमथवा ॥ १८ ॥

चिंताइक्कंतमवयणगोयरं विहलपुरिसवावारं । अघडंतघडणरइणो हयविहिणो विलसियं किं पि ॥ १९ ॥ ता होउइण्हिं एयं पि किं पि किं एत्थ विहलचिन्ताए । इति साविऊण पुणरवि सुत्तो सेज्जाए निचिन्तो ॥ २० ॥ अह उग्गमंतरविमंडलम्मि अत्ताए विलसियं नाउं । सुपसन्नवयणकमलो सेज्जाए समुट्ठिओ संतो ॥ २१ ॥ नावाहिवेण चिररूढगाढपणएण बालमत्तेण । कुरुचंदेण दिट्ठो झडत्ति तह पच्चभिन्नाओ ॥ २२ ॥ आलिंगिऊण गाढं ससंभमं पुच्छिओ य सो तेण । अच्छरियमिमं कत्तो वयंस? तुह एत्थ आगमणं ॥ २३ ॥ कत्थ व एत्तियकालं सावत्थीओ विणिक्खमित्ताणं । भमिओ सि कह व संपइ पुण नवंगो तुमं जातो ॥ २४॥ ताराचन्देण ततो ता नयरीनिग्गमाओ आरब्भ । कहिओ से वुत्तंतो जाव निसंते पवुद्धो त्ति ॥ २५ ॥

---

चिन्तातिक्रान्तमवचनगोचरं विफलपुरुषव्यापारम् । अघटमानघटनरतेर्हतविधेर्विलसितं किमपि ॥ १९ ॥ तस्माद् भवत्विदानीमेतदपि किमपि किमत्र विफलचिन्तया । इति श्रावयित्वा पुनरपि सुप्तः शय्यायां निश्चिन्तः ॥ २० ॥ अथोद्गच्छति रविमण्डले श्वश्र्वा विलसितं ज्ञात्वा । सुप्रसन्नवदनकमलः शय्यायाः समुत्थितः सन् ॥ २१ ॥ नावधिपेन चिररूढगाढप्रणयेन बालमित्रेण । कुरुचन्द्रेण दृष्टो झटिति तथा प्रत्यभिज्ञातः ॥ २२ ॥ आलिंग्य गाढं ससंभ्रमं पृष्टश्च स तेन । आश्चर्यमिदं कुतो वयस्य? तवात्रागमनम् ॥ २३ ॥ कुत्र चेयत्कालं श्रावस्तितो विनिष्क्रम्य । भ्रमितोऽसि कथं वा संप्रति पुनर्नवाङ्गस्त्वं जातः ॥ २४ ॥ ताराचन्द्रेण ततस्तदा नगरीनिर्गमादारभ्य । कथितस्तस्य वृत्तान्तो यावन्निशान्ते प्रबुद्ध इति ॥ २५ ॥

कुरुचन्देण वि सिट्ठो अत्ताए वइयरो समग्गो वि । तो नायतप्पवंचो ताराचन्दो विचिन्तेति ॥ २६ ॥
अन्नं जपंति कुणंति अन्नमन्नं नियन्ति ससिणेहं । नेहरहिया वि कामिंति अन्नमित्थीणं धी चरियं ॥ २७ ॥
मायंगाण वि गंडं जाओ चुंवंति दाणलोभेण । भमरीओ वि च जुवईण ता किं एत्थ वयणिज्जं ॥ २८ ॥
अहवा गिरिसिरनिवडंतसरियकल्लोलचंचलमणाण । कवडकुडीणं रामाण नूण एसोच्चिय सहावो ॥ २९ ॥
इइ चिन्तिऊण भणियं हंहो कुरुचंद कहसु नियवत्तं । किं एत्थ तुहागमणं गमणं च पुणो कहिं होही ॥३०॥
कह वा ताओ निवसति अवि कुसलं सयलरायचक्कस्स । सुत्था सावत्थी वि च सगामपुरजणवया धणियं ॥
॥ ३१ ॥ कुरुचंदेण भणियं रायाएसेण एत्थ रयणपुरे । आयाओम्हि संपयं पुण सावत्थीए गमिस्सामि ॥ ३२ ॥

---

कुरुचन्द्रेणापि शिष्टः श्वश्र्वा व्यतिकरः समग्रोऽपि । ततो ज्ञाततत्प्रपञ्चस्ताराचन्द्रो विचिन्तति ॥ २६ ॥ अन्यज्जल्पन्ति कुर्वन्त्यन्यदन्यं पश्यन्ति सस्नेहम् ! स्नेहरहिता अपि कामयन्त्यन्यं स्त्रीणां धिक् चरितम् ॥ २७ ॥ मातङ्गानामपि गण्डं याश्चुम्बन्ति दानलोभेन ! भ्रमर्योऽपि च युवतीनां तत् किमत्र वदनीयम् ॥ २८ ॥ अथवा गिरिशिरोनिपतत्सरित्कल्लोलचञ्चलमनसाम् । कपटकुटीनां रामाणां नूनमेष एव स्वभावः ॥ २९ ॥ इति चिन्तित्वा भणितं भो भोः कुरुचन्द्र ? कथय निजवृत्तम् । किमत्र तवागमनं गमनं च पुनः कुत्र भविष्यसि ॥ ३० ॥ कथं वा तातो निवसत्यपि कुशलं सकलराजचक्रस्य । सुस्था सावस्थिरपि च सग्रामपुरजनपदात्यन्तम् ॥ ३१ ॥ कुरुचन्द्रेण भणितं राजादेशेनात्र रत्नपुरे । आयातोऽस्मि सांप्रतं पुनः सावस्थ्यां गमिष्यामि ॥ ३२ ॥

कुसलं च रायचक्कस्स तह य नयरीए जणवयजुयाए । तुह गाढविरहदुहं एक्कं मोत्तुं महीनाहं ॥३३॥ जद्दियहाओ तं निग्गओ सि तत्तो वि पेसिया पुरिसा । सव्वदिसासुं रन्ना तुज्झ पउत्तीए लहणत्थं ॥ ३४ ॥ ता रयणपुरागमणं जायं मे बहुफलं महाभाग । जं लद्धो तुममिण्हिं पुन्नेणातक्कियागमणो ॥ ३५ ॥ इओ य ताराचंदं सयणे पडिबुद्धिया झत्ति मयणमंजूसा । अनियंती हा पिययम कहिं सि इति जंपिरी जाव ॥ ३६ ॥ रोविउमारद्धा ताव तीए अत्ताए रयणलंकारं । अवहरिऊण भणिया अच्छिन्नं रुयसि किं वच्छे ॥ ३७ ॥ तीए कहियं पेच्छामि एत्थ नो हिययवल्लभं अंमो । तो कवडेण पलोइय स-बाहिरब्भंतरं गेहं ॥ ३८ ॥ अत्ताए आउलाए वुत्तं सो वि हु न रयणलंकारो । दीसति मन्ने तं गिण्हिऊण सो अज्ज नट्ठो त्ति ॥ ३९ ॥

---

कुशलं च राजचक्रस्य तथा च नगर्या जनपदयुतायाः । तव गाढविरहदुःखितमेकं मुक्त्वा महीनाथम् ॥ ३३ ॥ यद्दिवसात्त्वं निर्गतोऽसि ततोऽपि प्रेषिताः पुरुषाः । सर्वदिशासु राज्ञा तव प्रवृत्त्या लभनार्थम् ॥ ३४ ॥ तस्माद् रत्नपुरागमनं जातं मे बहुफलं महाभाग ? । यल्लब्धस्त्वमिदानीं पुण्येनातर्किंतागमनः ॥ ३५ ॥ इतश्च ताराचन्द्रं शयने प्रतिबुद्धा झटिति मदनमंजूषा । अपश्यन्ती हा प्रियतम ? कुत्रासीति जल्पिनी यावत् ॥ ३६ ॥ रुदितुमारब्धा तावत् तया श्वश्वा रत्नालंकारम् । अवहृत्य भणिताच्छिन्नं रुदिपि किं वत्से ॥ ३७ ॥ तया कथितं पश्याम्यत्र नो हृदयवल्लभमम्ब ? । ततः कपटेन प्रलोक्य सबाह्याभ्यंतरं गेहम् ॥ ३८ ॥ श्वश्र्वाऽऽकुलयोक्तं सोऽपि हि न रत्नालंकारः । दृश्यते मन्ये तं गृहीत्वा सोऽद्य नष्ट इति ॥ ३९ ॥

आ पाविट्ठि सुमुद्दा सि तेण जोग्गा सि पहियस्स तुमं । जा वारिया वि बहुसो अणुरत्ता निद्धणे पहिए ॥ ४० ॥ एमाइ पवंचपहाणवयणनिवहेण तज्जिया तीए । तह सा जह जायभया सहसा मोणं समल्लीणा ॥४१॥ एत्तो य जलहिपारे पत्ता नावा समुज्झिउं तं च । कुरुचंदेण समेयो ताराचन्दो रहारूढो ॥४२॥ वच्चंतो कालेणं पत्तो सावत्थीनयरीए बाहिंमि । जाणियतदागमेण पिउणा य पवेसिओ गेहे ॥ ४३ ॥ पुट्ठो नियवुत्तंतो कहिओ सयलो वि से कुमारेण । तुट्ठेण तत्तो रन्ना कओ अमच्चो उ कुरुचन्दो ॥ ४४ ॥ सुपसत्थवासरम्मि ताराचन्दो निवेसिओ रज्जे । सयमवि कयपवज्जो मरिऊण सुरालयं पत्तो ॥ ४५ ॥ पउररहजोहवारणतुरंगवट्टंतकोसकोट्ठारो । राया ताराचन्दो निरवज्जं रज्जमणुहवति ॥ ४६ ॥

---

आ पापिष्ठे ? सुमुग्धासि तेन योग्यासि पथिकस्य त्वम् । या वारितापि बहुशोऽनुरक्ता निर्धने पथिके ॥ ४० ॥ इत्यादि प्रपञ्चप्रधानवचननिवहेन तर्जिता तया । तथा सा यथा जातभया सहसा मौनं समालीना ॥ ४१ ॥ इतश्च जलधिपारे प्राप्ता नौका समुज्झ्य तां च । कुरुचन्द्रेण समेतस्ताराचन्द्रो रथारूढः ॥ ४२ ॥ गच्छन् कालेन प्राप्तः सावस्थिनगर्या बहिः । ज्ञाततदागमनेन पित्रा च प्रवेशितो गेहे ॥ ४३ ॥ पृष्टो निजवृत्तान्तः कथितः सकलोऽपि तस्य कुमारेण । तुष्टेन ततो राज्ञा कृतोऽमात्यस्तु कुरुचन्द्रः ॥ ४४ ॥ सुप्रशस्तवासरे ताराचन्द्रोऽपि निवेशितो राज्ये । स्वयमपि कृतप्रव्रज्यो मृत्वा सुरालयं प्राप्तः ॥ ४५ ॥ प्रचुररथयोधवारणतुरंगवर्त्तमानकोशकोष्टागारः । राजा ताराचन्द्रो निरवद्यं राज्यमनुभवति ॥ ४६ ॥

चारणमुणिपुंगवकहियधम्ममेगग्गमाणसो कुणति । अच्चन्तभावसारं पूयइ य जिणिंदबिंबाइं ॥ ४७ ॥ अह एगम्मि अवसरे वहुस्सुया सूरिणो विजयसेणा । अणिययविहारवित्तीए आगया तत्थ विहरंता ॥४८॥ महईए विभूईए ताराचन्देण वंदिया ते य । दिन्ना वसही सगिहे सविसेसधम्मसवणट्ठा ॥ ४९ ॥ तो अणवरयं नयभंगसंगयं वहुवियारभारसहं । जुत्तीहिं अविरुद्धं सिद्धंतमविस्समं सुणति ॥ ५० ॥ इय अणवरयं समयं सुणमाणेण सया वि नरवइणा । संलेहणावसाणो मुणिओ गिहिधम्मपरमत्थो ॥ ५१ ॥ पडिवुद्धा अन्ने वि य तन्नयरिनिवासिणो वहुलोगा । सद्धम्मविमुहचित्तं एक्कं मोत्तूण कुरुचन्दं ॥ ५२ ॥ तं च तहाविहं अवलोइऊण रन्ना विचिन्तियमिमस्स । नोवयारो जातो मए समं धम्मसवणे वि ॥ ५३ ॥

---

चारणमुनिपुंगवकथितधर्म्ममेकाग्रमानसः करोति । अत्यन्तभावसारं पूजति च जिनेन्द्रविम्वानि ॥ ४७ ॥ अथैकस्मिन्नवसरे वहुश्रुताः सूरयो विजयसेनाः । अनियतविहारवृत्त्यागतास्तत्र विहरन्तः ॥ ४८ ॥ महत्या विभूत्या ताराचन्द्रेण वंदितास्ते च । दत्ता वसतिः स्वगृहे सविशेषं धर्म्मश्रवणार्थम् ॥ ४९ ॥ ततोऽनवरतं नयभङ्गसंगतं वहुविचारभारसहम् । युक्तिभिरविरुद्धं सिद्धान्तमविश्रामं शृणोति ॥ ५० ॥ इत्यनवरतं समयं श्रूयमाणेन सदापि नरपतिना । संलेखनावसानो ज्ञातो गृहिधर्म्मपरमार्थः ॥ ५१ ॥ प्रतिवुद्धा अन्येऽपि च तन्नगरीनिवासिनो वहुलोकाः । सद्धर्म्मविमुखचित्तमेकं मुक्त्वा कुरुचन्द्रम् ॥ ५२ ॥ तं च तथाविधमवलोक्य राज्ञा विचिन्तितमस्य । नोपकारो जातो मया समं धर्म्मश्रयणेऽपि ॥ ५३ ॥

जइ पुण गेहसमीवे ठिएहिं सूरीहिं होज्ज धम्ममई । एयस्स पइखणं चिय मुणिकिरियालोयणवसेण ॥ ५४ ॥
ताहे वाहरिऊण कुरुचन्दो भासिओ नरिंदेण । हं हो देवाणुपिय जंगमतित्थं इमे गुरुणो ॥ ५५ ॥ ता एयाणं
नियमन्दिरम्मि थीपसुविवज्जिए देहि । वसहिं तयणु निस्सामेहि धम्ममरिहंतपन्नत्तं ॥ ५६ ॥ धम्मो च्चिय
दोग्गइमज्जमाणमाणवसमुद्धरणधीरो । सग्गापवग्गसुहफलसंपाडणकप्पविडवी य ॥ ५७ ॥ सेसं पुण खणभं-
गुरमसारमचन्तमाहिजणगं च । पियपुत्तमित्तधणदेहपमुहमेगंतसो मुणसु ॥ ५८ ॥ इय भणिए नरवइणा कुरु-
चन्दो धम्मकम्मविमुहो वि । उवरोहेणं सगिहे उवस्सयं देइ सूरीण ॥ ५९ ॥ गुरुणो धम्मुवदेसे सुणेति
पेच्छइ य विविहतवनिरयं । ईसिपडिबन्धबंधुरहियओ निच्चं तवस्सिजणं ॥ ६० ॥

---

यदि पुनर्गेहसमीपे स्थितैः सूरिभिर्भवेद् धर्म्ममतिः । एतस्य प्रतिक्षणमेव मुनिक्रियालोकनवशेण ॥ ५४ ॥ तदा व्याहृत्य कुरुचन्द्रो
भाषितो नरेन्द्रेण । अहो देवानुप्रिय ? जंगमतीर्थममी गुरवः ॥ ५५ ॥ तस्मादेतेषां निजमन्दिरे स्त्रीपशुविवर्जिते देहि । वसतिं तदनु
निशामय धर्म्ममर्हत्प्रज्ञप्तम् ॥ ५६ ॥ धर्म्म एव दुर्गतिमज्जन्मानवसमुद्धरणधीरः । स्वर्गापवर्गसुखफलसंपादनकल्पविटपिश्च ॥ ५७ ॥
शेषं पुनः क्षणभङ्गुरमसारमत्यन्तमाधिजनकं च । प्रियपुत्रमित्रधनदेहप्रमुखमेकान्ततो जानीहि ॥ ५८ ॥ इति भणिते नरपतिना कुरु-
चन्द्रो धर्म्मकर्म्मविमुखोऽपि । उपरोधेन स्वगृह उपाश्रयं ददाति सूरिभ्यः ॥ ५९ ॥ गुरोर्धर्मोपदेशान् शृणोति पश्यति च विविधतपो-
निरतम् । ईषत्प्रतिबन्धबन्धुरहृदयो नित्यं तपस्विजनम् ॥ ६० ॥

तह वि हु न भावसारं पडिवज्जति वीयरायसद्धम्मं । कम्मगरुयाण किं वा करेज्ज सुगुरूण संजोगो ॥ ६१ ॥ अह कप्पसमत्तीए ठाणतरमुवगएसु सूरिसु । ताराचन्दो राया अहिगयजिणसमयसब्भावो ॥ ६२ ॥ कारियजिणिन्दभवणो जत्तापुयाइकरणनिरयमणो । अणुकंपादाणाइसु जहाविहाणेण वट्टंतो ॥ ६३ ॥ गेहसमीवनिवेसियपोसहसालाए पोसहुज्जुत्तो । अट्ठम्मिचउद्दसीसुं अन्नेसु य धम्मदियहेसु ॥ ६४ ॥ पासं पिव गिहवासं कप्पिंतो पावलोयपरिहारी । पवरुत्तरोत्तरगुणेसु चित्तवित्तिं ठवितो य ॥ ६५ ॥ वाहिरवित्तीए चिय चिन्तंतो रज्जरट्ठवावारं । सच्चरिएसु पयट्टंतो अणुमोयंतो य धम्मिजणं ॥ ६६ ॥ आराहणाभिलासी निम्मलपरिणामसंगओ सो य । मरिऊण अच्चुए दिव्वदेवरिद्धिं समणुपत्तो ॥ ६७ ॥

---

तथापि हि न भावसारं प्रतिपद्यते वीतरागसद्धर्म्मम् । कर्म्मगुरूणां किं वा करोति सुगुरूणां संयोगः ॥ ६१ ॥ अथ कल्पसमाप्त्यां स्थानान्तरमुपगतेषु सूरिषु । ताराचन्द्रो राजाधिगतजिनसमयसद्भावः ॥ ६२ ॥ कारितजिनेन्द्रभवनो यात्रापूजादिकरणनिरतमनाः । अनुकम्पादानादिषु यथाविधानेन वर्त्तमानः ॥ ६३ ॥ गेहसमीपनिवेशितपोषधशालायां पोषधोद्युक्तः । अष्टमीचतुर्दशीष्वन्येषु च धर्मदिवसेषु ॥ ६४ ॥ पाशमिव गृहवासं कल्पमानः पापलोकपरिहारी । प्रवरोत्तरोत्तरगुणेषु चित्तवृत्तिं स्थापयंश्च ॥ ६५ ॥ वाह्यवृत्त्या एव चिन्तन् राज्यराष्ट्रव्यापारम् । सच्चरितेषु प्रवर्त्तमानोऽनुमोदयंश्च धर्म्मिजनम् ॥ ६६ ॥ आराधनाभिलाषी निर्म्मलपरिणामसंगतः स च । मृत्वाच्युते दिव्यदेवर्द्धिं समनुप्राप्तः ॥ ६७ ॥

कुरुचन्दो वि तहाविहधम्मविहीवज्जिओ पमाई य। अट्टज्झाणोवगओ मरिउं तिरिएसु उववन्नो ॥ ६८ ॥ तत्तो उवट्टित्ता महाडवीए पुलिंदगो जातो। सत्थेण समं समणे वच्चंते पेच्छिउं तत्थ ॥ ६९ ॥ एगंतनिलुक्केणं तेणेरिसगा पुरा मया के वि। आसी दिट्ठत्ति विचिन्तिरेण सरिओ सपुव्वभवो ॥ ७० ॥ संभरिया य महा-गुणमणिनिहिणो सगिहे धारिया मुणिणो। तेहिं पुणरुत्तदिन्ना सरिया धम्मोवएसा वि ॥७१॥ तो चिन्तिउं पवट्टो महाणुभावेहिं तेहिं तइया हं। सासिज्जन्तो वि तहा धम्मुज्जोगं न पडिवन्नो ॥ ७२ ॥ जइ वि हु महाणुभावेण राइणा ठाविया मह गिहम्मि। गुरुणो उवयारट्ठा उवयारो तहवि नो जातो ॥ ७३ ॥ गुरुकम्मणो कहं मह एत्तो होही सुधम्मसामग्गी। अहवा किमणेण विचिन्तिएण एवं ठितो वि लहुं ॥ ७४ ॥

---

कुरुचन्द्रोऽपि तथाविधधर्म्मविधिवर्ज्जितः प्रमादी च । आर्त्तध्यानोपगतो मृत्वा तिर्यक्षूत्पन्नः ॥ ६८ ॥ तत उद्वृत्य महाटव्यां पुलिन्दको जातः। सार्थेन समं श्रमणान् व्रजतः प्रेक्ष्य तत्र ॥ ६९ ॥ एकान्तनिलीनेन तेनेदृशा पुरा मया केऽपि। आसन् दृष्टा इति विचिन्तिना स्मृतः स्वपूर्वभवः ॥ ७० ॥ संस्मृताश्च महागुणमणिनिधयः स्वगृहे धारिता मुनयः। तैः पुनरुक्तदत्ताः स्मृता धर्म्मोपदेशा अपि ॥ ७१ ॥ ततश्चिन्तितुं प्रवृत्तो महानुभावैस्तैस्तदानीमहम्। शिष्यमानोऽपि तथा धर्म्मोद्योगं न प्रतिपन्नः ॥ ७२ ॥ यद्यपि हि महानुभावेन राज्ञा स्थापिता मम गृहे। गुरव उपकारार्थमुपकारस्तथापि नो जातः ॥ ७३ ॥ गुरुकर्म्मणः कथं ममेतो भविष्यति सुधर्म्मसामग्री । अथवा किमनेन विचिन्तितेनैवं स्थितोऽपि लघु ॥ ७४ ॥

काऊणं अणसणं सासणं च धरिउं मणम्मि जयगुरुणो । झायंतो ते च्चिय सूरिणो वि साहेमि नियकज्जं ॥ ॥ ७५ ॥ इय निक्कलंकसम्मत्तसंगतो उज्झिऊण आहारं । कुरुचन्दो सोहम्मे मरिउं देवत्तमणुपत्तो ॥ ७६ ॥ एवं वसहिपयाणं उवरोहकयं पि जणइ कल्लाणं । पाएण परभवम्मि वि दंसियकुरुचन्दनाएणं ॥७७॥ ता सव्व-संगरहियाण तिदसमहियाण जयजियहियाणं । साहूण वसहिवियरणपरंमुहो कह वुहो होज्ज ॥ ७८ ॥ किंच । सोहूण वसहिदाणे तव्वहुमाणा विसुद्धिभावेणं । अकलंकचरणसेवा कम्मखओ निव्वुई य भवे ॥ ७९ ॥ तहा । सोम्ममुणिदंसणेणं केई तद्धम्मदेसणाए परे । तक्कयदुक्करकिरियं दट्ठूणन्ने पवुज्झंति ॥ ८० ॥ वुद्धा अन्ने पडिबो-हयंति कारिन्ति चेइयघराणि । साहम्मियवच्छलं करेन्ति साहूण वसहिदाणं ॥ ८१ ॥

---

कृत्वानशनं शासनं च धृत्वा मनसि जगद्गुरोः । ध्यायन् तानेव सूरीनपि साधयामि निजकार्यम् ॥ ७५ ॥ इति निष्कलंकसम्यक्त्वसंगत उज्झित्वाहारम् । कुरुचन्द्रः सौधर्म्मे मृत्वा देवत्वमनुप्राप्तः ॥ ७६ ॥ एवं वसतिप्रदानमुपरोधकमपि जनयति कल्याणम् । प्रायेण परभवेऽपि दर्शितकुरुचन्द्रन्यायेन ॥ ७७ ॥ तस्मात् सर्वसङ्गरहितानां त्रिदशमहितानां जगज्जीवहितानाम् । साधूनां वसतिवितरणपराङ्मुखः कथं बुधो भवेत् ॥ ७८ ॥ किंच, साधूनां वसतिदाने तद्बहुमानाद् विशुद्धिभावेन । अकलंकचरणसेवात् कर्म्मक्षयो निर्वृतिश्च भवेत् ॥ ७९ ॥ तथा—सौम्यमुनिदर्शनेन केचित् तद्धर्म्मदेशनया परे । तत्कृतदुष्करक्रियां दृष्ट्वान्ये प्रबुध्यन्ति ॥ ८० ॥ बुध्वान्यान् परियोधयन्ति कारयन्ति चैत्यगृहाणि । साधर्म्मिकवात्सल्यं कुर्वन्ति साधूनां वसतिदानम् ॥ ८१ ॥

एवं तित्थविवुड्ढी थिरया सेहाण तित्थवन्नो य । जीवाणमभयदाणं तम्हा एयम्मि जइयव्वं ॥ ८२ ॥ एवं सुगुरुसमीवादायन्निय भूवई विसिट्ठेसु । वट्टेज्जा किच्चेसुं निच्चंपि कयं पसंगेण ॥ ८३ ॥ इय करणसउणिपंजरतुलाए संवेगरंगसालाए । परिकम्मविहीपामोक्खचउमहामूलदाराए ॥ ८४ ॥ आराहणाए पनरसपडिदारमयस्स पढमदारस्स रायाभिहाणमग्गं पडियारं अट्ठमं भणियं ॥ ८५ ॥ पुव्वुत्तगुणगणालंकिओ वि न विणा विसेसपरिणामं । आराहेउं पारइ पत्थुयमाराहणं जीवो ॥ ८६ ॥ ता परिणामदारं एत्तो भन्नइ दुहा य तं होति । गिहिसाहुगोयरत्तेण तत्थ गिहिवग्गविसयस्स ॥ ८७ ॥ इह परभवगुणचिन्ता ।१। सुयसिक्खा ।२। कालविगमणं चेव ।३। सुयबोहणं च ।४। सुट्ठियघडणा ।५। आलोयणा दाणं य ।६। ॥ ८८ ॥

---

एवं तीर्थविवृद्धिः स्थिरता शिष्याणां तीर्थवर्णश्च । जीवानामभयदानं तस्मादेतस्मिन् यतितव्यम् ॥ ८२ ॥ एवं सुगुरुसमीपादाकर्ण्य भूपतिर्विशिष्टेषु । वर्तेत कृत्येषु नित्यमपि कृतं प्रसङ्गेन ॥ ८३ ॥ इति करणशकुनिपञ्जरतुल्यायां संवेगरङ्गशालायाम् । परिकर्मविधिप्रमुखचतुर्महामूलद्वारायाम् ॥ ८४ ॥ आराधनायाः पञ्चदशप्रतिद्वारमयस्य प्रथमद्वारस्य । राजाभिधानमार्गं प्रतिद्वारमष्टमं भणितम् ॥ ८५ ॥ पूर्वोक्तगुणगणालंकृतोऽपि न विना विशेषपरिणामम् । आराधयितुं शक्नोति प्रस्तुतामाराधनां जीवः ॥ ८६ ॥ तस्मात् परिणामद्वारमितो भण्यते द्विधा च तद् भवति । गृहिसाधुगोचरत्वेन तत्र गृहिवर्गविषयस्य ॥ ८७ ॥ इहपरभवगुणचिन्ता ।१। श्रुतशिक्षा ।२। कालविगमनं चैव ।३। । श्रुतबोधनं ।४। च सुस्थितघटना ।५। आलोचनादानं च ।६। ॥ ८८ ॥

आउपरिन्नाणं पि य । ७ । अणसणसंथारादिक्खापडिवत्ती । ८ । अट्टप्पडिदाराइं इमाइं परिणामदारस्स ॥ ८९ ॥ तत्थ य इहभवपरभवगुणचिन्तादारमेवमवसेयं । किर पुव्वदंसियगुणो राया सामन्नमणुओ वा ॥ ९० ॥ कारियजिणिंदभवणो पयट्टियाणेगधम्मठाणो य । लोगदुगसलहणिज्जट्ठिइए किच्चेसु वट्टंतो ॥ ९१ ॥ मंदीकयविसयरई धम्मे चिय निच्चबद्धपडिबन्धो । अत्थोवज्जणगिहविविहकज्जवासंगविरयमणो ॥९२॥ सो अन्नया कयाइ पुव्वावररत्तकालसमयम्मि । जागरमाणो सम्मं सुपसन्नो धम्मजागरियं ॥ ९३ ॥ गुरुसंवेगपरिगतो भववासुव्विग्गमाणसो धणियं । आसन्नभाविभद्दो निउणं एवं विचिन्तेति ॥ ९४ ॥ अणुकूलकम्मपरिणतिवसेण केणावि अह ताव मए । अइदुल्लहो वि लद्धो जम्मो विउलुज्जलकुलम्मि ॥ ९५ ॥

---

आयुःपरिज्ञानमपि च । ७ । अनशनसंस्थारदीक्षाप्रतिपत्तिः । ८ । अष्टप्रतिद्वाराणीमूनि परिणामद्वारस्य ॥ ८९ ॥ तत्र चेहभवपरभवगुणचिन्ताद्वारमेवमवसेयम् । किल पूर्वदर्शितगुणो राजा सामान्यमनुजो वा ॥ ९० ॥ कारितजिनेन्द्रभवनः प्रवर्त्तितानेकधर्म्मस्थानश्च । लोकद्वयश्लाघनीयस्थित्या कृत्येषु वर्त्तमानः ॥ ९१ ॥ मन्दीकृतविषयरतिर्धर्म्म एव नित्यबद्धप्रतिबन्धः । अर्थोपार्जनगृहविविधकार्यव्यासङ्गविरतमनाः ॥ ९२ ॥ सोऽन्यदा कदाचित् पूर्वापररात्रकालसमये । जागरन् सम्यक् सुप्रसन्नो धर्म्मजागरिकम् ॥ ९३ ॥ गुरुसंवेगपरिगतो भववासोद्विग्नमानसो बाढम् । आसन्नभाविभद्रो निपुणमेवं विचिन्तति ॥ ९४ ॥ अनुकूलकर्म्मपरिणतिवशेन केनाप्यथ तावन्मया । अतिदुर्लभोऽपि लब्धो जन्म विपुलोज्ज्वलकुले ॥ ९५ ॥

अन्नन्नगुणगणारोवणेक्करसियंतकरणवित्तीण । जीयाण पुणोवि दुल्लहा मायाविताणसंपत्ती ॥ ९६ ॥ दिट्ठसुयसत्थपरमत्थगहणनिउणा य तप्पभावेणं । बुद्धीविज्जाविन्नाणपयरिसो वि य महं जातो ॥ ९७ ॥ निजभुयजुयलवलज्जियमणवज्जमवज्जवज्जियविहीए । विनिओइयं जहिच्छं दविणं वि हु उचियठाणेसु ॥ ९८ ॥ भुत्ता य कामभोगा अभग्गपसरं मणुस्सपाउग्गा । निप्फाइया य पुत्ता तदुचियकायव्वमवि विहियं ॥९९॥ एवं सम्माणियसयल इहभवविक्खणिज्जभावस्स । इह भवियभूरिसद्दाइविसयसम्माणणाविसयं ॥ २५०० ॥ आलम्बणभरियस्स वि इमस्स दुल्ललियमामगजियस्स । अहुणावि किर किमण्णं विज्जइ आलंबणट्ठाणं ॥ १ ॥ जं नेगंतेणं चिय चिन्तामणिकप्पपायवब्भहिए । विसयासत्तिं मोत्तुं धम्मे चिय निच्चलो होमि ॥ २ ॥

---

अन्यान्यगुणगणारोपणैकरसिकान्तःकरणवृत्तीनाम् । जीवानां पुनरपि दुर्लभा मायावृत्तानां संपत्तिः ॥ ९६ ॥ दृष्टश्रुतशास्त्रपरमार्थग्रहणनिपुणा च तत्प्रभावेन । बुद्धिर्विद्याविज्ञानप्रकर्षोऽपि च मम जातः ॥९७॥ निजभुजयुगलबलार्जितमनवद्यमवद्यवर्जितविधिना । विनियोजितं यथेच्छं द्रविणमपि ह्युचितस्थानेषु ॥ ९८ ॥ भुक्ताश्च कामभोगा अभग्नप्रसरं मनुष्यप्रायोग्याः । निष्पादिताश्च पुत्रास्तदुचितकर्त्तव्यमपि विहितम् ॥ ९९ ॥ एवं संमानितसकलेहभवापेक्षणीयभावस्य । इह भविकभूरिशब्दादिविषयसंमाननाविषयम् ॥ २५०० ॥ आलम्बनभृतस्याप्यस्य दुर्ललितमामकजीवस्य । अधुनापि किल किमन्यदू विद्यत आलम्बनस्थानम् ॥ १ ॥ यन्नैकान्तेनैव चिन्तामणिकल्पपादपाभ्यधिके । विषयासक्तिं मुक्त्वा धर्म्म एव निश्चलो भवामि ॥ २ ॥

अहह कुसलस्स कस्स वि विवेगसारस्स भविउकामस्स । पयइगरुयस्स वाढं भववासुव्विग्गचित्तस्स ॥ ३ ॥ संते वि हु भोगाणं समसामग्गिसमुदए सवसे । तद्वत्थुचिंतणाओ तद्प्पवित्तिप्पहाणस्स ॥ ४ ॥ जम्माउ च्चिय निच्चं धम्मेच्चिय किच्चवुद्धिणो धणियं । परलोयविसयकिच्चेसु चेव संजायति पवित्ती ॥ ५ ॥ आसापिसाइयाविणडियस्स अम्हारिसस्स तुच्छस्स । तव्विवरीयस्स भवाभिनंदिणो पुण इमा कुमई ॥ ६ ॥ एवं न सुयं दिट्ठं पि नेव मेयं तु नेव अणुभूयं । कत्थवि कयावि सुविणे वि अहह विहलो गओ जम्मो ॥ ७ ॥ ता ताव इम मिमसहं इहं तेहिं तं च तं च माणेमि । तद्संमाणण जणियं जेण ण दुक्खं खु दुक्खइ मे ॥ ८ ॥ अहवा इमं तयं पि च अणुभूयं किं तु परिमितं कालं । ता ताव किं पि कालं करेमि वंछाणुरूवमहं ॥ ९ ॥

---

अहह कुशलस्य कस्यापि विवेकसारस्य भवितुकामस्य । प्रकृतिगुरुकस्य वाढं भववासोद्विग्नचित्तस्य ॥ ३ ॥ सत्यपि हि भोगानां समसामग्रीसमुदये स्ववशे । तद्वस्तुचिन्तनात् तद्प्रवृत्तिप्रधानस्य ॥ ४ ॥ जन्मन एव नित्यं धर्म्म एव कृत्यबुद्धेरत्यन्तम् । परलोकविषयकृत्येषु चैव संजायते प्रवृत्तिः ॥ ५ ॥ आशापिशाचिकाविनर्त्तितस्यास्मादृशस्य तुच्छस्य । तद्विपरीतस्य भवाभिनन्दिनः पुनरियं कुमति ॥६॥ एवं न श्रुतं दृष्टमपि नैव मेयं तु नैवानुभूतम् । कुत्रापि कदापि स्वप्नेऽप्यहह विफलो गतो जन्म ॥ ७ ॥ तत् तावदिदममूमहमिदं तत्र-तत्र तां च मानयामि । तत्संमाननजनित येन न दुःखं खलु दुःखयति माम् ॥ ८ ॥ अथवेदं तामपि चानुभूतं किन्तु परिमितं कालम् । तस्मात्तावत् किमपि कालं करोमि वाञ्छानुरूपमहम् ॥ ९ ॥

कालाइक्कमणेण य पच्छावोच्छिन्नवंछरिछोली । सीईभूओ जं जं कारं तं तं सुहं होही ॥ १० ॥ को नाम किर सकन्नो करेज्ज एयं वियप्पणमजुत्तं । पयईए च्चिय करिकलहकन्नपालीचले जीए ॥११॥ तहा । एयं करेमि इण्हिं एयं काऊण पुण इमं कल्ले । काहामि को विचिंतइ सुमिणयतुल्लम्मि जियलोए ॥ १२ ॥ अन्नं च । जइ ता तत्तगवेसी ता अणणुभवे वि माणियं सव्वं । अह न तहा ता तम्माणणे वि सव्वं अणणुभूयं ॥१३॥ जओ ॥ हियइच्छियाणिं जह जह संपज्जंतीह कहं वि जीवाण । तह तह विसेसतिसियं चित्तं दुहियं च्चिय वरायं ॥ ॥ १४ ॥ किं च । उवभोगोवायपरो पसमेउं मणइ विसयतण्हं जो । नियच्छायाक्कमणकए पुरो वरण्हे पहावइ सो ॥ १५ ॥

---

कालातिक्रमणेन च प्रस्तावच्छिन्नवांछारिक्षपंक्तिः । शीतीभूतो यद्यत् करोमि तत्तत् सुखं भविष्यति ॥ १० ॥ को नाम किल सकर्ण्णः करोति एतत् विकल्पनमयुक्तम् । प्रकृत्या एव करिकलभकर्णपालीचले जीवे ॥ ११ ॥ तथा एतत् करोमीदानीमेतत् कृत्वा पुनरिदं कल्ये । करिष्यामि को विचिन्तति स्वप्नतुल्ये जीवलोके ॥ १२ ॥ अन्यच्च । यदि तावत् तत्त्वगवेषी तदाननुभवेऽपि मानितं सर्वम् । अथ न तथा तदा तन्माननेऽपि सर्वमननुभूतम् ॥ १३ ॥ यतः । हितेच्छानि यथा यथा संपद्यन्त इह कथमपि जीवानाम् । तथा तथा विशेषतृपितं चित्तं दुःखितमेव वराकः ॥ १४ ॥ किंच । उपभोगोपायपरः प्रशमितुं मन्यते विषयतृष्णां यः । निजच्छायाक्रमणकृते पुरोऽपराह्ने प्रधावति सः ॥ १५ ॥

तहा ॥ सुट्ठु वि भुत्ता भोगा सुट्ठु वि रमियं पिएहिं दारेहिं । सुट्ठु वि पियं सरीरं हा जिय कइया वि मोत्तव्वं ॥ १६ ॥ सुचिरं वसिउं सह बंधवेहिं रमिऊण इट्ठमित्तेहिं । सुचिरं पि सरीरं लालिऊण छड्डेवि गंतव्वं ॥ १७ ॥ इट्ठजणो धणधन्नं भवणं विसया य मणहरणचोरा । एगपए मोत्तव्वा तहा वि किं गयनिमीला मे ॥ १८ ॥ अरिहं देवो गुरुणो य साहुणो जिणमतम्मि पडिवत्ती । धम्मियसंसग्गी निम्मलो य बोहो भवविरागो ॥ १९ ॥ एमाइ मए सम्मं पत्तो परलोयसाहगो वि विही । भवसयपरंपरासु वि दुल्लभो मंदपुन्नाणं ॥२०॥ अह पत्ते तम्मि महं महंतपुन्नेहिं संपयं धम्मो । आराहेउं जुत्तो विसेसओ आत्तहियं नेउं ॥ २१ ॥ तं च न तह काउमणो वि विविहगिहकिच्चनिच्चपडिबंद्धो । पुत्तकलत्तासत्तो तरामि काउं सुनिव्विग्घं ॥ २२ ॥

---

तथा । सुष्ठु अपि भुक्ता भोगाः सुष्ठु अपि रमितं प्रियैर्दारैः । सुष्ठु अपि प्रियं शरीरं हा जीव ? कदापि मोक्तव्यम् ॥१६॥ सुचिरमुषित्वा सह बान्धवै रमयित्वेष्टमित्रैः । सुचिरमपि शरीरं लालित्वा छडित्वापि गन्तव्यम् ॥१७॥ इष्टजनो धनधान्यं भवनं विषयाश्च मनोहरणचौराः । एकपदे मोक्तव्यास्तथापि किं गजनिमितिका मम ॥१८॥ अर्हन् देवो गुरवश्च साधवो जिनमते प्रतिपत्तिः । धार्मिकसंसर्गी निर्मलश्च बोधो भवविरागः ॥ १९ ॥ एवमादिर्मया सम्यक् प्राप्तः परलोकसाधकोऽपि विधिः । भवशतपरम्परास्वपि दुर्लभो मन्दपुण्यनाम् ॥ २० ॥ अथ प्राप्ते तस्मिन् मम महत्पुण्यैः सांप्रतं धर्म्मः । आराधयितुं युक्तो विशेषत आत्महितं ज्ञातुम् ॥ २१ ॥ तं च न तथा कर्त्तुमना अपि विविधगृहकृत्यनित्यप्रतिबद्धः । पुत्रकलत्रासक्तः शक्नोमि कर्त्तुं सुनिर्विघ्नम् ॥ २२ ॥

ता जाव अज्जवि जरा दूरे वाहीउ नेव वाहिंति । जाव पबलं बलं पि हु इंदियवग्गो समग्गो य ॥ २३ ॥ जावणुरागी लोगो जाव न चवलत्तणं भयइ लच्छी । जाव न इट्ठविओगो जाव वियंभेइ न कयंतो ॥ २४ ॥ ताव परिवारदुत्थत्तभाविजिणधम्मखिंसरक्खट्ठा । निप्पच्चवायनिरवज्जकज्जसंसाहणट्ठा य ॥ २५ ॥ नियगं कुडुंबभारं पुत्ते संकमिऊण विहीपुव्वं । सिढिलियतप्पडिबंधो तप्परिणतिदंसणकएण ॥ २६ ॥ परमगुरुपरमपूयासंपादणलक्खणं जहावसरं । नियभत्तिसत्तिसरिसं मोत्तुं दव्वत्थयं सेसे ॥ २७ ॥ सावज्जारंभपए परिच्चइत्ताण तयणुमोयणत्तं वि । कारावणकरणेहिं मणेण वायाए काएणं ॥ २८ ॥ पोसहसालमहिगत्तो आगमविहिसुद्धधम्मकिच्चेहिं । सम्मं भावियचित्तो किं पि हु कालं किल गमेमि ॥ २९ ॥

---

तस्माद्यावदद्यापि जरा दूरे व्याधयो नैव बाधन्ते । यावत् प्रबलं बलमपि हीन्द्रियवर्गः समग्रश्च ॥ २३ ॥ यावदनुरागी लोको यावन्न चपलत्वं भजति लक्ष्मीः । यावन्नेष्टवियोगो यावद् विजृम्भति न कृतान्तः ॥ २४ ॥ तावत् परिवारदुःस्थत्वभाविजिनधर्मखिंसरक्षार्थम् । निष्प्रत्यवायनिरवद्यकार्यसंसाधनार्थं च ॥ २५ ॥ निजं कुटुम्बभारं पुत्रे संक्रम्य विधिपूर्वकम् । शिथिलिततत्प्रतिबन्धस्तत्परिणतिदर्शनकृतेन ॥ २६ ॥ परमगुरुपरमपूजासंपादनलक्षणं यथावसरम् । निजभक्तिशक्तिसदृशं मुक्त्वा द्रव्यार्थकं शेषे ॥ २७ ॥ सावद्यारम्भपदान् परित्यज्य तदनुमोदनमपि । कारणकरणाभ्यां मनसा वाचा कायेन ॥ २८ ॥ पोषधशालाधिगत आगमविधिशुद्धधर्मकृत्यैः । सम्यग् भावितचित्तः किमपि हि कालं किल गमयामि ॥ २९ ॥

पच्छा पुत्ताणुमओ संलेहणपुव्वयं जहावसरं । आराहणविहिमणहं सव्वपयत्तेण काहामि ॥ ३० ॥ इय उभयलोगगोयरगुणचिंतणदारमाहियं पढमं । एत्तो य पुत्तसिक्खादारं लेसेण कित्तेमि ॥ ३१ ॥ अह पुव्वपवंचियउभयलोगहियधम्मपरणइपहाणो । सो गिहवई निवो वा उज्झिउकामो घरनिवासं ॥ ३२ ॥ रयणिविरामविउद्धं सव्वायरकयपयप्पणामं च । पुत्तं नियगाभिप्पायसंसणट्ठा इय वएज्ज ॥ ३३ ॥ पयईए च्चिय पुत्तय जइ वि विणीयस्स गुणगवेसिस्स । सुविसिट्ठचेट्ठियस्स य सिक्खवियव्वं न तुह अत्थि ॥ ३४ ॥ अम्मापिऊण तह वि हु हिओवएसप्पयाणमुववण्णं । ता तं पइ संपइ सप्पओयणं किं पि जंपेमि ॥ ३५ ॥ वच्छ सुगुणा वि मइसालिणो वि सुकुलुग्गया वि नरवसभा । उव्वणजोव्वणगहनिहयबुद्धिणो लहु विसीयंति ॥ ३६ ॥

---

पश्चात् पुत्रानुमतः संलेखनपूर्वकं यथावसरम् । आराधनाविधिमनघां सर्वप्रयत्नेन करिष्यामि ॥ ३० ॥ इत्युभयलोकगोचरगुणचिन्तनद्वारमाहितं प्रथमम् । इतश्च पुत्रशिक्षाद्वारं लेशेन कीर्त्तयामि ॥ ३१ ॥ अथ पूर्वप्रपञ्चितोभयलोकहितधर्म्मपरिणतिप्रधानः । स गृहपतिर्नृपो वोज्झितुकामो गृहनिवासम् ॥ ३२ ॥ रजनिविरामविबुद्धं सर्वादरकृतपदप्रणामं च । पुत्रं निजकाभिप्रायशासनार्थमिति वदेत् ॥ ३३ ॥ प्रकृत्यैव पुत्र ? यद्यपि विनीतस्य गुणगवेषिणः । सुविशिष्टचेष्टितस्य च शिक्षयितव्यं न तवास्ति ॥ ३४ ॥ मातापित्रोस्तथापि हि हितोपदेशप्रदानमुपपन्नम् । तस्मात् त्वां प्रति संप्रति सप्रयोजनं किमपि जल्पामि ॥ ३५ ॥ वत्स ? सुगुणा अपि मतिशालिनोऽपि सुकुलोद्गता अपि नरवृषभा. । उद्धनयौवनग्रहनिहतबुद्धयो लघु विषीदन्ति ॥ ३६ ॥

ससिरविरयणहुयासणपहापवाहाहयं पि । अणवरयं विरमति न मणागं पि हु जम्हा ॥ ३७ ॥ तारुण्णतिमिरमिमं एयम्मि य पसरंते फुरई कुवियप्पतारयाचक्कं । पसरति विचित्तविसयाभिलासकडपूयणानिवहो ॥ ३८ ॥ उम्मायघूयसंघा समुच्छलंती य पावियाऽवसरा । पवियंभइ सव्वत्तो कलुसमई वग्गुली वग्गो ॥ ३९ ॥ सज्जो पमायखज्जोययावि विलसंति पत्तपहपसरा । वग्गइ कुवासणापंसुलीण सत्थो अणुप्पित्थो ॥ ४० ॥ तह वच्छ ? दप्पदाह–ज्जरो वि सिसिरोवयारनिरुवसमो । जलण्हाणाणुत्तारो दढुरागमलावलेवो वि ॥४१॥ तह विसयविसवियारो अनिवारो मंततंतजंताणं । लच्छिमयं धत्तं पि हु असज्झमंजणपओगाणं ॥४२॥ विसयसुहसन्निवाओ–ज्झवायनिद्दानिसावसाणे वि । अप्पडिबोहा इह वच्छ–निच्छियं जायइ जाणाणं ॥ ४३ ॥

---

शशिरविरत्नहुताशनप्रभाप्रवाहाहतमपि । अनवरतं विरमति न मनागपि हि यस्मात् ॥ ३७ ॥ तारुण्यतिमिरमिदमेतस्मिंश्च प्रसरति स्फुरति कुविकल्पतारकाचक्रम् । प्रसरति विचित्रविषयाभिलाषकटपूतनानिवहः ॥ ३८ ॥ उन्मादघूकसंघाः समुच्छलन्ति च प्राप्तावसराः । प्रविजृम्भति सर्वतः कलुषमतिर्वल्गुवर्गः ॥ ३९ ॥ सद्यः प्रमादखद्योतिका अपि विलसन्ति प्राप्तपथप्रसराः । वल्गति कुवासनापांशुलीनां सार्थोऽनुप्रस्तः ॥ ४० ॥ तथा वत्स ? दर्पदाहज्वरोऽपि शिशिरोपचारनिरुपशमः । जलस्नानानुत्तारो दृढरागमलापलेपोऽपि ॥ ४१ ॥ तथा विषयविषविकारोऽनिवारो मन्त्रतन्त्रयन्त्राणाम् । लक्ष्मीमदं ध्वान्तमपि ह्यसाध्यमंजनप्रयोगानाम् ॥ ४२ ॥ विषयसुखसन्निपात ऊर्ध्ववातनिद्रानिशावसानेऽपि । अप्रतिबोधादिह वत्स ? निश्चितं जायते जनानाम् ॥ ४३ ॥

पुत्तय ! तुमंपि तरुणो उदग्गसोहग्गसंगयसरीरो । पवरिस्सरियसणाहो य नूणमावालकालातो ॥ ४४ ॥ अप्पडिमरूवभुयबल–साली विन्नाणनाणसंपन्नो । एवं गुणो य एएहिं चेव हीरिज्जसि गुणेहिं न जहा ॥ ४५ ॥ तह वट्टजसु एक्केक्को वि हु गुणो जओ एसिं । दुविणयकारणं किं पुणेसि सव्वेसि समवाओ ॥ ४६ ॥ ता पुत्त परित्थीपेच्छणंमि आजम्मचक्खुवियलेण । परमम्मजंपणंमी सयावि अच्चंतमूएण ॥ ४७ ॥ अस्सच्चवयणसवणे बहिरेणं पंगुणा कुसंचरणे । आलस्ससंगएणं सव्वासु असिट्ठचेट्ठासु ॥ ४८ ॥ पुव्वाभिभासिणा पाणिलोयपीडाविवज्जिणा णिच्चं । वितहाभिणिवेसपरंमुहेण गंभीरभावेण ॥ ४९ ॥ उचियमुदारत्तं पि य समुव्वहंतेण परियणपिएण । लोगाणुवित्तिजुत्तेण उज्जमंतेण धम्मंमि ॥ ५० ॥

---

पुत्र ? त्वमपि तरुण उदग्रसौभाग्यसंगतशरीरः । प्रवरैश्वर्यसनाथश्च नूनमावालकालात् ॥ ४४ ॥ अप्रतिमरूपभुजबलशाली विज्ञानज्ञानसंपन्नः । एवं गुणश्चैतैश्चैव ह्रियसे गुणैर्न यथा ॥ ४५ ॥ तथा वर्त्तयस्वैकैकोऽपि हि गुणो यत एतेषाम् । दुर्विनयकारणं किं पुनरेषां सर्वेषां समवायः ॥ ४६ ॥ ततः पुत्र ? परस्त्रीप्रेक्षणे आजन्म चक्षुर्विकलेन । परमर्मजल्पने सदापि अत्यन्तमूकेन ॥ ४७ ॥ असत्यवचनश्रवणे बधिरेण पंगुना कुसंचरणे । आलस्यसंगतेन सर्वास्वश्रेष्टचेष्टासु ॥ ४८ ॥ पूर्वाभिभाषिणा प्राणिलोकपीडाविवर्जिना नित्यम् । वितथाभिनिवेशपरांमुखेन गम्भीरभावेन ॥ ४९ ॥ उचितमुदारत्वमपि च समुद्वहता परिजनप्रियेण । लोकानुवृत्तियुक्तेनोद्यमवता धर्मे ॥ ५० ॥

सुमरंतेणं चिरपवरपुरिसचरियानि तदणुसारेण। संचरमाणेण सया वट्टिंतेणं च कुलकित्तिं ॥ ५१ ॥ गुण कित्तणं कुणंतेण गुणिजणाण पमोयमणुसमयं! धारेंतेणं धम्मियजणंमि परिहारिणाणत्थे ॥ ५२ ॥ कल्लाण-मित्तासंसग्गिकारिणा कुसलसयलचेट्ठेण। सव्वत्थ लद्धलक्खेण पुत्त! होयव्वमणवरयं ॥ ५३ ॥ इय वट्टंतो-पुत्तय पियामहप्पमुहपुरिसक्कमपत्तं। माणेसु विभूइमिमं चिरभवसुकयाणुसारेण ॥ ५४ ॥ अंगीकरेसु सयलं कुडुंबभारं विहेहि तच्चित्तं। अब्भुद्धरेसु बंधव-जणंपि पीणेसु पणइगणं ॥ ५५ ॥ अप्पोवरिसंकामिय-समग्गकायव्वभारमहुणा मं। पकरेसु वच्छ! संपइ तुह जुत्तं वट्टिउं एवं ॥ ५६ ॥ उक्खित्तसव्वभारस्स तुज्झ अहयं तु संनिहिंमि ठिओ। कल्लाणवल्लिजलकुल्ल-तुल्लसद्धम्मगुणनिरओ ॥ ५७ ॥

---

स्मरयता चिरप्रवरपुरुषचरितानि तदनुसारेण। संचरमानेन सदा वर्त्तमानेन कुलकीर्त्तिम् ॥ ५१ ॥ गुणकीर्त्तनं क्रियमाणेन गुणि-जनानां प्रमोदमनुसमयम्। धारयता धार्मिकजनान् परिहारिणानर्थान् ॥ ५२ ॥ कल्याणमित्रसंसर्गकारिणा कुशलसकलचेष्टेन। सर्वत्र लब्धलक्षेण पुत्र? भवितव्यमनवरतम् ॥ ५३ ॥ इति वर्त्तमानः पुत्र? पितामहप्रमुखपुरुषक्रमप्राप्ताम्। मानयस्व विभूतिमिमां चिर-भवसुकृतानुसारेण ॥ ५४ ॥ अङ्गीकुरु सकलं कुटुम्बभारं विधेहि तच्चिन्ताम्। अभ्युद्धर बान्धवजनमपि प्रीयतां प्रणयिगणम् ॥ ५५ ॥ आत्मोपरिसंक्रम्य समस्तकर्त्तव्यभारमधुना माम्। प्रकुरु वत्स? संप्रति तव युक्तं वर्त्तयितुमेवम् ॥ ५६ ॥ उत्क्षिप्तसर्वभारस्य तवाहं तु सन्निधौ स्थितः। कल्याणवल्लिजलकुल्यातुल्यसद्धर्मगुणनिरतः ॥ ५७ ॥

तुह सच्चरियकलावावलोयणत्थं कियंतमवि कालं। चिट्ठामि तयणु तुह अणुमईए संलेहणं काहं ॥ ५८ ॥ इच्चेवमाइयाहिं गिराहिं कंताहिं तह मणुन्नाहिं सुयमपडिवज्जमाणं दढपिइपडिबंधभावेण ॥ ५९ ॥ पडिवज्जाविय सम्मं दंसियभूमीगयंपि निहिनिवहं। जाणाविऊण लेक्खग-मह्व हिगासंपुडाइगयं ॥ ६० ॥ दावाविऊण दायव्व-मत्थमुग्गाहिऊण लब्भं च। घरभारनायगत्ते ठवेज्ज सयणाइपच्चक्खं ॥ ६१ ॥ नवरं किं पि हु वित्तं जिणभवणमहूसवाइकरणत्थं। साहारणजोग्गं किंचि किंचि सयणाण पउग्गं ॥६२॥ किंचि सविसेससीयंतसंत साहम्मि उवट्ठंभत्थं। किंचि वि अहिणवपडिवन्नधम्मसम्माणणानिमित्तं ॥ ६३ ॥ भइणीधूयाजोगं च किंचि दीणाणुकंपगं किंचि। उवयारिमित्तबंधव उद्धरणणिबंधणं किंचि ॥ ६४ ॥

---

तव सच्चरितकलापावलोकनार्थं कियन्तमपि कालम्। तिष्ठामि तदनु तवानुमत्या संलेखनं करिष्यामि ॥ ५८ ॥ इत्येवमादिकाभिर्गिराभिः कान्ताभिस्तथा मनोज्ञाभिः। सुतमप्रतिपद्यमानं दृढप्रीतिप्रतिबन्धभावेन ॥ ५९ ॥ प्रतिपाद्य सम्यग् दर्शतयित्वा भूमिगतमपि निधिनिवहम्। ज्ञापयित्वा लेखकमथ पुस्तकमयसंपुटादिगतम् ॥ ६० ॥ दापयित्वा दातव्यमर्थमुद्ग्राह्य लभ्यमपि। गृहभारनायकत्वे स्थापयति स्वजनादिप्रत्यक्षम् ॥ ६१ ॥ नवरं, किमपि हि वित्तं जिनभवनमहोत्सवादिकरणार्थम्। साधारणयोग्यं किञ्चित् किंचित् स्वजनानां प्रायोग्यम् ॥ ६२ ॥ किंचित् सविशेपसीदत्सत्साधर्म्मिकोपष्टम्भार्थम्। किंचिदपि अभिनवप्रतिपन्नधर्म्मसमाननिमित्तम्॥ ६३ ॥ भगिनीदुहितृयोग्यं च किंचिद् दीनानुकम्पकं किंचित्। उपकारिमित्रबान्धवोद्धरणनिबन्धनं किंचित् ॥ ६४ ॥

धारेज्ज सहत्थे चिय सुसावगो संकिलेसचागट्ठा । इहरा जिणभवणाइसु निओजिउं नेव पभवेज्जा ॥ ६५ ॥ इय सामन्नगिहीविही राया पुण सोहणे तिहिमुहुत्ते । रज्जाभिसेयपुव्वं पुव्वं पुत्तं सपए निवेसित्ता ॥ ६६ ॥ कुज्जा सव्वसमप्पण–मुवदंसेज्जा नयक्कमं णिउणं । सामी मंती रट्ठं एमाई पुव्वविहिणाउ ॥ ६७ ॥ सामंतमंतिसेणा– हिवाण पयईण सेवगाणंपि । नरवइणो वि य साहारणं च सिक्खं पयच्छेज्जा ॥ ६८ ॥ एवं कयकायव्वो पुत्ता-रोवियसमत्थकज्जभरो । पवरुत्तरोत्तरगुणे आराहेज्जा जहाभिमए ॥ ६९ ॥ जो पुण धम्मपवत्तो वि निम्मला-राहणाभिलासी वि । पुव्वुत्तविहाणेणं न करेज्ज सुयस्स सिक्खवणं ॥ ७० ॥ नेव य मुच्छाइवसा उवदंसेज्जा सविहववित्थारं । सो तस्स कम्मबंधाय होज्ज वइरोव्व केसरिणो ॥ ७१ ॥

---

धारयेत स्वहस्त एव सुश्रावकः संक्लेशत्यागार्थाय । इतरथा जिनभवनादिषु नियोजितुं न च प्रभवति ॥६५॥ इति सामान्यगृहिविधी राजा पुनः शोभने तिथिमुहूर्त्ते । राज्याभिषेकपूर्वं पूर्वं पुत्रं स्वपदे निवेश्य ॥ ६६ ॥ कुर्यात् सर्वसमर्प्पणमुपदर्शयति नयक्रमनिपुणम् । स्वामिमन्त्रिराष्ट्रेत्यादिकं पूर्वविधिना तु ॥ ६७ ॥ सामन्तमन्त्रिसेनाधिपानां प्रकृतीनां सेवकानामपि । नरपतेरपि च साधारणं च शिक्षां प्रयच्छति ॥ ६८ ॥ एवं कृतकर्त्तव्यः पुत्रारोपितसमस्तकार्यभारः । प्रवरोत्तरोत्तरगुणानाराधयेद् यथाभिमतान् ॥ ६९ ॥ यः पुन-र्धर्मप्रवृत्तोऽपि निर्म्मलाराधनाभिलाष्यपि । पूर्वोक्तविधानेन न करोति सुतस्य शिक्षापणम् ॥ ७० ॥ नैव च मूर्च्छादिवशादुपदर्शयति स्वविभवविस्तारम् । स तस्य कर्म्मबन्धाय भवति वैर इव केसरिणः ॥ ७१ ॥

तहाहि–कुसुमत्थलंमि नयरे धणसारो नाम आसि वरसेट्ठी। नियसमुद्धररिद्धीए दूरमुवहासियवेसमणो ॥७२॥ उवजावयसयतोसियदेवयदिन्नो अणामयसरीरो। वइरो नामेण सुओ अहेसि एक्को परं तस्स ॥ ७३ ॥ सो पुण समहिगयकलो पिउणा तरुणत्तणं समणुपत्तो। परिणाविओ महेसरसेट्ठि–सुयं विणयवइ कन्नं ॥ ७४ ॥ अह विज्जुलया सरयब्भ–चंचलत्तेण सव्वभावाणं। हरिचक्किसक्कविक्कम–अगोयरत्तेण मच्चुस्स ॥ ७५ ॥ पइखण–विणाससील–त्तणेण अच्चंतमाउकम्मस्स। धणसारो नियपए तं ठविउं मरणमणुपत्तो ॥ ७६ ॥ हा ताय परमवच्छल ? गुणणिवहनिवास पणतिकयतोस। पुरलोयभायणोवम कत्थगतो देहि पडिवयणं ॥ ७७ ॥ हा ! ताय तायसु ममं विओगवज्जासणीए भिज्जंतं। हिययं हिययसुहावह नियपुत्तमुवेहसे कीस ॥ ७८ ॥

---

तथाहि। कुसुमस्थले नगरे धनसारो नाम। सीद् वरश्रेष्ठी। निजसमुद्धरर्द्ध्या दूरमुपहासितवैश्रमणः ॥ ७२ ॥ उपजापकशततोषितदेवतादत्तोऽनामयशरीरः। वैरो नाम्ना सुत आसीदेकः परं तस्य ॥ ७३ ॥ स पुनः समधिगतकलः पित्रा तरुणत्वं समनुप्राप्तः। परिणायितो महेश्वरश्रेष्ठिसुतां विनयवतीकन्याम् ॥ ७४ ॥ अथ विद्युल्लताशरदभ्रचञ्चलत्वेन सर्वभावानाम्। हरिचक्रिशक्रविक्रमागोचरत्वेन मृत्योः ॥ ७५ ॥ प्रतिक्षणविनाशशीलत्वेनात्यन्तमायुष्ककर्म्मणः। धनसारो निजपदे तं स्थापयित्वा मरणमनुप्राप्तः ॥ ७६ ॥ हा तात ? परमवत्छल ? गुणनिवहनिवास प्रणतिकृततोष ?। पुरलोक भाजनोपम ? कुत्र गतो देहि प्रतिवचनम् ॥ ७७ ॥ हा तात ? त्रायस्व मम वियोगवज्राशन्या भिद्यमानम्। हृदयं हृदयसुखावह ? निजपुत्रमुपेक्षसे कस्मात् ॥ ७८ ॥

ताय तए सग्गए गयाइं पंच वि इमाइं सग्गंमि। गंभीरत्तं खंती सच्चं विणओ नओ य धुवं ॥ ७९ ॥ ताय ?तुह विप्पयोगे न दुक्खमेक्को अहंचिय पवन्नो। विफलियमणोरहो पइ–दिणंपि नणु मग्गणगणो वि ॥८०॥ इय जंपिरेण पम्मुक–दीहपोक्केण सोगविहुरेण। वइरेण पारलोइयकिच्चमसेसं कयं तस्स ॥ ८१ ॥ पइदिण-दंसणसार–त्तणेण पेम्माणुबंधबुद्धीणं। कालक्कमेण ववगय–सोगावेगो य सो जातो ॥ ८२ ॥ पुव्वपवाहेणं चिय कुडुंबचित्ताए लोयववहारे। दाणाईसु य वट्टइ नो खंडइ पुव्वपुरिसकमं ॥ ८३ ॥ नवरं लच्छी तुच्छत्त–मुवगया नागया वणियपुत्ता। देसंतरेसु चिरकाल–पेसिया लाभकज्जेण ॥ ८४ ॥ निहिणो सुन्नीहूया–चट्टिपउत्तो खयंगतो अत्थो। धन्नाइसंचया वि हु निद्दड्ढा तिव्वजलणेण ॥ ८५ ॥

---

तात ? त्वयि स्वर्गगते गतानि पञ्चापीमानि स्वर्गे। गाम्भीर्यं क्षान्तिः सत्यं विनयो नयश्च ध्रुवम् ॥ ७९ ॥ तात ? तव विप्रयोगे न दुःखमेकोऽहमेव प्रपन्नः। विफलितमनोरथः प्रतिदिनमपि ननु याचकगणोऽपि ॥ ८० ॥ इति जल्पिना प्रमुक्तदीर्घपूत्कारेण शोकविधुरेण। वैरेण पारलौकिककृत्यमशेषं कृतं तस्य ॥ ८१ ॥ प्रतिदिनदर्शनसारत्वेन प्रेमानुबन्धबुद्धीनाम्। कालक्रमेण व्यपगत-शोकावेगश्च स जातः ॥ ८२ ॥ पूर्वप्रवाहेणैव कुटुम्बचिन्तायां लोकव्यवहारे। दानादिषु च वर्त्तते न खण्डते पूर्वपुरुषक्रमम् ॥ ८३ ॥ नवरं लक्ष्मीस्तुच्छत्वमुपगता नागता वणिक्पुत्राः। देशान्तरेषु चिरकालप्रेषिता लाभकार्येण ॥ ८४ ॥ निधयः शून्नीभूताश्चद्विप्रयुक्तः क्षयं गतोऽर्थः। धान्यादिसंचया अपि निर्दग्धा तीव्रज्वलनेन ॥ ८५ ॥

जं जत्तो तं तत्तो पुन्नविवज्जय वसेण से नट्ठं । सयणो वि परजणो इव सव्वो वि वरंमुहीहूओ ॥ ८६ ॥ इय छायाखेड्डुं पि व सुमिणुवलद्धं व सो पलोइत्ता । दव्वाइसरूवं जाय पउरसोगो विचिंतेइ ॥ ८७ ॥ परिचत्तकुसंसग्गस्स वि तथी जूयविवज्जिणो वि ही मज्झ । नायट्ठियस्स वि कहं सव्वमवक्कंतमत्थाई ॥ ८८ ॥ अहवा वच्चउ अत्थो विज्जुज्जोउ व चंचलसहावो । अनिमित्तमेव सयणा वि कीस वि परंमुहीहूया ॥ ८९ ॥ हुं नायं सयणा वि हु धणभंगे कज्जसिद्धिविरहेण । दंसिंति कह वरागा पणय मवि रोर तुल्लंमि ॥ ९० ॥ तावच्चिय सयणा बंधवाय मित्ता य होंति मणुयस्स । जाव न मुचइ कुवलयदलदीहच्छीए लच्छीए ॥ ९१ ॥ धणवज्जियस्स य ममं एत्तो वत्थाण मेव नो जुत्तं । परमा विडंवणा कावि पुव्वकमखंडणा जेण ॥ ९२ ॥

---

यो यत्र स तत्र पुण्यविवर्जनवशेन तस्य नष्टम् । स्वजनोऽपि परजन इव सर्वोऽपि पराङ्मुखीभूतः ॥ ८६ ॥ इति छायाक्रीडामिव स्वप्नोपलब्धमिव स प्रलोक्य । द्रव्यादिस्वरूपं जातप्रचुरशोको विचिन्तति ॥ ८७ ॥ परित्यक्तकुसंसर्गस्यापि स्त्रीद्यूतविवर्जिनो पि हि मम । न्यायस्थितस्यापि कथं सर्वमपक्रान्तमर्थादि ॥ ८८ ॥ अथवा व्रजत्वर्थो विद्युद्द्योत इव चञ्चलस्वभावः । अनिमित्तमेव स्वजना अपि कस्मादपि पराङ्मुखीभूताः ॥ ८९ ॥ हि ज्ञातं स्वजना अपि हि धनभंगे कार्यसिद्धिविरहेण । पश्यन्ति कथं वराकाः प्रणय मपि रोरतुल्ये ॥ ९० ॥ तावदेव स्वजनाः वान्धवाश्च मित्राणि च भवन्ति मनुजस्य । यावन्न मुञ्चति कुवलयदलदीर्घाक्ष्या लक्ष्म्या ॥९१॥ धनवर्जितस्य च ममेतोऽवस्थानमेव नो युक्तम् । परमा विडम्बना कापि पूर्वक्रमखण्डना येन ॥ ९२ ॥

इइ चिंतिऊण तेणं कहिओ खेमिलगनामधेयस्स । मित्तस्सनत्थगमाभिलासरूवो सवुत्तंतो ॥ ९३ ॥ मित्तेण जंपियं जुत्त मेव देसंतरंमि तुह गमणं । नवरं अहं पि तुमए समगं चिय आगमिस्सामि ॥ ९४ ॥ तो दोवि नियपुराओ विणिक्खमित्ता सुवन्नभूमीए । ते सिग्घगईए गया पारद्धा तत्थ य उवाया ॥ ९५ ॥ अत्थो वज्जणकज्जेण णेगसो अह कहं पि विहिवसओ । खेत्ताणुभावओ चिय उवज्जियं केत्तियं पि धणं ॥९६॥ तेण य धणेण रयणाइं अट्ठगहियाइं पवरमुल्लारं । सुमरिय गिहाय तत्तो विणियत्ता नियपुराभिमुहं ॥ ९७ ॥ इंताण य अद्धपहे अइपवलत्तेण लोहपसरस्स । खेमिलगस्स पयट्टा समत्थरयणग्गहणवंछा ॥ ९८ ॥ कहं वंचिस्सामि इमं कहं व गहिस्सामि सव्वरयणाइं । अणवरयमेगचित्तो चिंतिउमेवं समाढत्तो ॥ ९९ ॥

---

इति चिन्तयित्वा तेन कथितः खेमिलकनामधेयस्य । मित्रस्यान्यत्र गमाभिलाषस्वरूपः स्ववृत्तान्तः ॥ ९३ ॥ मित्रेण जल्पितं युक्तमेव देशान्तरे तव गमनम् । नवरमहमपि त्वया सममेवागमिष्यामि ॥ ९४ ॥ ततो द्वावपि निजपुराद् विनिष्क्रम्य सुवर्णभूम्याम् । तौ शीघ्रगत्या गतौ प्रारब्धास्तत्र चोपायाः ॥ ९५ ॥ अर्थोपार्जनकार्येणानेकशोऽथ कथमपि विधिवशात् । क्षेत्राणुभावत एवोपार्जितं कियदपि धनम् ॥ ९६ ॥ तेन च धनेन रत्नान्यष्ट गृहीतानि प्रवरमूल्यानि । स्मृत्वा गृहाय ततो विनिर्वृत्ता निजपुराभिमुखम् ॥ ९७ ॥ आगच्छतां चार्द्धपथेऽतिप्रबलत्वेन लोभप्रसरस्य । खेमिलकस्य प्रवृत्ता समस्तरत्नग्रहणवांछा ॥ ९८ ॥ कथं वंचिष्याम्यमूं कथं वा ग्रहीष्यामि सर्वरत्नानि । अनवरतमेकचित्तश्चिन्तितुमेवं समारब्धः ॥ ९९ ॥

अह एगम्मि दिणम्मि गमिस्संतो गयंमि वइरम्मि । रयणट्ठयगंठिसमा अंतो पक्खित्तलेट्ठुदला ॥ २६०० ॥ रइया अवरा गंठी वइरस्स इमं समपइत्ताणं । रयणीए वच्चिस्सं इति चिन्तेऊण पाविट्ठो ॥ १ ॥ सो जाव गंठिजुयलं संजमइ ससंभमं लहुं ताव । वइरो समागतो भणति मित्त । किं कुणसि तुममेयं ॥ २ ॥ किं दिट्ठो हमणेणं ति संकिएणावि निविडनिउणेण । तेणं पयंपियं मित्त कुडिलरूवा हि कम्मगई ॥ ३ ॥ सच्छंदविलसियाइं विहिस्सचिंतापहे वि न पडंति । जं सुमिणे वि न दीसति तं पि बला कज्जमावडति ॥ ४ ॥ एवं विभाविऊणं कयं मए रयणगंठिजुयलमिमं । मा एगट्ठाणठियं पणस्सिही कहवि हत्थाओ ॥ ५ ॥ ता नियरयणचउक्कस्स गंठिमेगं तुमं धरसु हत्थे । अयरं च अहं धारेमि होउ दढरक्खणा एवं ॥ ६ ॥

---

अथैकस्मिन् दिवसे गमिष्यन् गते वज्रे । रत्नाष्टकग्रन्थिसमा अन्तः प्रक्षिप्त लोष्टदला ॥२६००॥ रचितापरा ग्रन्थिर्वैरस्येमां समर्पयित्वा । रजन्यां व्रजिष्यामीति चिन्तयित्वा पापिष्ठः ॥ १ ॥ स यावद् ग्रन्थियुगलं संयम्यते ससंभ्रमं लघु तावत् । वज्र समागतो भणति मित्र ? किं करोषि त्वमिदम् ॥ २ ॥ किं दृष्टोऽहमनेनेति शंकितेनापि निविडनिपुणेन । तेन प्रजल्पितं मित्र कुटिलरूपा हि कर्मगतिः ॥३॥ स्वच्छन्दविलपितानि विधेश्चिन्तापथेऽपि न पतन्ति । यत् स्वप्नेऽपि न दृश्यते तदपि बलात्कार्यमापतति ॥ ४ ॥ एवं विभाव्य कृतं मया रत्नग्रन्थियुगलमिदम् । मा एक स्थानस्थितं प्रणंक्षति कथमपि हस्तात् ॥ ५ ॥ तस्मान्निजरत्नचतुष्टयस्य ग्रन्थिमेकां त्वं धर हस्ते । अपरा चाहं धारयामि भवतु दृढरक्षणैवम् ॥ ६ ॥

इति संसिऊण सम्मोहमूढहियएण वइरहत्थम्मि । साररयणाण गंठी वद्धाइयरा य नियगकरे ॥ ७ ॥ तो तत्थेव पसुत्ता संपत्ते कहवि मज्झरत्तम्मि । तं लेट्ठुगंठिमादाय खेमिलो निग्गओ तुरियं ॥ ८ ॥ गंतुं जोयणसत्तमुच्छोडति जाव तं रयणगंठिं । तो पेच्छति पुव्वनिहित लेट्ठुसयलाइं से अंतो ॥ ९ ॥ हा असिवत्तुकन्तिय सच्छंदुद्दामविलसियसहाव । पावविहि किमिव तुमए मम चिंतियमन्नहा विहियं ॥ १० ॥ हंदी पुव्वभवुब्भूय भूरिपावस्स दुक्खदाइत्तं । मित्तावियोगत्थकयफलजणगत्तेण निव्वडियं ॥ ११ ॥ मन्ने सुद्धसहावस्स तस्स मित्तस्स वंचणा जणियं । पावं इह जम्मे चिय उवट्ठियं पत्तपागं व ॥ १२ ॥ एवं समुल्लवंतो सोगमहाभरसमोच्छयसरीरो । संजमिओ इव वज्जाहउ व ठाऊण खणमेक्कं ॥ १३ ॥

---

इति शंसित्वा संमोहमूढहृदयेन वज्रहस्तके । साररत्नानां ग्रन्थिर्बद्धेतरा च निजककरे ॥ ७ ॥ ततस्तत्रैव प्रसुप्तौ संप्राप्ते कथमपि मध्यरात्रौ । तां लोष्टग्रन्थिमादाय खेमिलो निर्गतस्त्वरितम् ॥ ८ ॥ गत्वा योजनसप्तकमुच्छोटयति यावत्तां रत्नग्रंथिम् । तावत् प्रेक्षते पूर्वनिहितलोष्टशकलानि तस्या अन्ते ॥ ९ ॥ हा असिपत्रोत्कान्तिक ? स्वच्छन्दोद्दामविलसितस्वभाव ? । पावविधे किमिवत्वया मम चिन्तितमन्यथा विहितम् ॥ १० ॥ अहो पूर्वभवोद्भूतभूरिपापस्य दुःखदायित्वम् । मित्रवियोगार्थकृतफलजनकत्वेन निपतितम् ॥ ११ ॥ मन्ये शुद्धस्वभावस्य तस्य 'मित्रस्य वञ्चनाजनितम् । पापमिह जन्मन्येवोपस्थितं प्राप्तपाकमिव ॥ १२ ॥ एवं समुल्लपन् शोकमहाभरसमोपक्षयशरीरः । संयमित इव वज्राहत इव स्थित्वा क्षणमेकम् ॥ १३ ॥

अच्चंत छुहाभिहओ मग्गपरिस्समकिलामिओ बाढं । भिक्खं भमिउमसत्तो गिहम्मि एगंमि य पविट्ठो ॥१४॥ भणिया तग्गिहविलया अम्मो मे देहि भोयणं किंपि । आसग्गलाए खलियं जावज्जवि जाइ नो जीयं ॥ १५ ॥ तद्दीण वयणसवणु–ब्भवंतकरुणाए तीए सपणयं । आरद्धं दाउं नवरमागओ झत्ति गिहनाहो ॥ १६ ॥ सो तं च पजेमंतं पेक्खिय रोसारुणच्छिविच्छोहो । आपावे मइ गेहाउ निग्गए पोससि विडे तं ॥ १७ ॥ इय निब्भच्छिय गिहिणिं खेमिलमुवणेइ रायपुरिसाण । एसो अकज्जकारित्ति तेसिं पुरतो निवेइत्ता ॥ १८ ॥ भय-कंपंतसरीरो विच्छायमुहो य सो तओ तेहिं । कहिओ जारोत्ति निवस्स तेण वज्झो य आणत्तो ॥ १९ ॥ तो विरसमारसंतो सो नीओ तेहिं वज्झठाणम्मि । भणितो य इट्ठदेवय–मणुसमरसु रे तुममियाणिं ॥ २० ॥

---

अत्यन्तक्षुधाभिहतो मार्ग्गपरिश्रमक्लान्तो बाढम् । भिक्षां भ्रमितुमशक्तो गृह एकस्मिंश्च प्रविष्टः ॥ १४ ॥ भणिता तद्गृहवनिता अम्ब ? मह्यं देहि भोजनं किमपि । आशार्गलयास्खलितं यावदद्यापि याति नो जीवम् ॥ १५ ॥ तद्दीनवचनश्रवणोद्भवत्करुणया तया सप्रणयम् । आरब्धं दातुं नवरमागतो झटिति गृहनाथः ॥ १६ ॥ स तं च प्रभुञ्जन्तं दृष्ट्वा रोषारुणाक्षिविक्षोभः । आपापे मयि गृहान्निर्गते पुष्यसि विटान् त्वम् ॥ १७ ॥ इति निर्भर्त्स्य गृहिणीं खेमिलमुपनयति राजपुरुषाणाम् । एषोऽकार्यकारीति तेषां पुरस्तात् निवेद्य ॥ १८ ॥ भयकम्पमानशरीरो विच्छायमुखश्च स ततस्तैः । कथितो जार इति नृपस्य तेन वध्यश्चाज्ञप्तः ॥ १९ ॥ ततो विरसमारस्यमानः स नीतस्तैर्वध्यस्थाने । भणितश्चेष्टदेवतामनुसर रे त्वमिदानीम् ॥ २० ॥

भयवसविसंठुल अक्खराए वाणीए किं पि जंपंतो । उल्लंबिउं विमुक्को दीहररज्जूए रुक्खम्मि ॥ २१ ॥ अह जावज्जवि नीहरइ नेव जीयं कहंपि तुडिजोगा । ता उल्लंवणरज्जू-तुट्टा पडिओ य सोज्झत्ति ॥ २२ ॥ सिसिर-वणमारुएणं मणागमासासिओ खणद्धेण । मरणमहाभयविहुरो ठाणाओ तओ लहुं चलिओ ॥ २३ ॥ जाव य केत्तियमेत्तं पि भूमिभागं स जाइ वेगेण । ताव तमालमहातरु-तलम्मि पेच्छति मुणिं एगं ॥ २४ ॥ सज्झायं कुणमाणं वरवीणावेणुविजइवाणीए । तस्सवणक्खित्तकुरंग-वगासेविज्जमाणपयं ॥ २५ ॥ तो अच्छरिय-ब्भूयं तं वंदित्ता महीए उवविट्ठो । जोगोत्ति लक्खिऊणं मुणिणा वि पयंपिओ एवं ॥ २६ ॥ हं भो देवाणु-प्पिय अणाइसंसारमणुसरंताण । जीवाण ण वंछियत्था के वि य सिज्झंति कह वि परं ॥ २७ ॥

---

भयवशविस्थूलाक्षरया वाण्या किमपि जल्पन् । उल्लम्ब्य विमुक्तो दीर्घरज्ज्वा विटपे ॥ २१ ॥ अथ यावदद्यापि निःसरति नैव जीवितं कथमपि त्रुटियोगात् । तावदुल्लम्बनरज्जूत्रुटिता पतितश्च स झटिति ॥ २२ ॥ शिशिरवनमारुतेन मनागाश्वासितः क्षणार्द्धेन । मरणमहा-भयविधुरः स्थानात् ततो लघु चलितः ॥ २३ ॥ यावच्च कियन्मात्रमपि भूमिभागं स याति वेगेन । तावत् तमालमहातरुतले पश्यति मुनिमेकम् ॥ २४ ॥ स्वाध्यायं कुर्वाणं वरवीणावेणुविजयिवाण्या । तच्छ्रवणाक्षिप्तकुरङ्गवर्गसेव्यमानपदम् ॥ २५ ॥ तत आश्चर्यभूतं तं वन्दित्वा मह्यामुपविष्टः । योग्य इति लक्षित्वा मुनिनापि प्रजल्पित एवम् ॥ २६ ॥ भो भो देवाणुप्रिय ? अनादिसंसारमनुसरताम् । जीवानां वांच्छितार्थाः केऽपि च सिध्यन्ति कथमपि परम् ॥ २७ ॥

भत्ती जिणेसु मेत्ती जिएसु तत्ती गुरुवएसेसु । पीइसीलगुणड्ढेसु तह मई धम्मसवणम्मि ॥ २८ ॥ परउवयारे वित्तं चित्तं परलोयकज्जचिंताए । धम्मपहाणो जम्मो निरुवमपुन्नाण जइ होइ ॥ २९ ॥ लद्धे वि दुल्लहे माणुसत्तणे धम्मगुणविहूणाण । वोलंति जाण दियहा विहलच्चिय ताण ते नेया ॥ ३० ॥ ताण वरमजणणं चिय जणणे वि हु वरमरन्नपसुभावो । धम्मगुणविरहिएहिं जेहिं जम्मो कओ विहलो ॥ ३१ ॥ आसन्नं चिय जेसिं महाणुभावाण भाविभद्दत्तं । धम्मपवित्तिपहाणाइं जंति तेसिं चिय दिणाति ॥ ३२ ॥ तेच्चिय धन्ना ते पुन्न-भाइणो ताण जीवियं सहलं । धम्मुज्जयाण जेसिं रमइ मई नैव पावेसु ॥ ३३ ॥ एवं मुणिणा कहिए नियदुच्चरिएण जायवेरग्गो । पव्वज्जं पडिवज्जति खेमिलगो सुद्धभावेण ॥ ३४ ॥

---

भक्तिर्जिनेषु मैत्री जीवेषु तृप्तिर्गुरूपदेशेषु । प्रीतिः शीलगुणाढ्येषु तथा मतिर्धर्म्मश्रवणे ॥ २८ ॥ परोपकारे वित्तं चित्तं परलोककार्य्यचिन्तायाम् । धर्म्मप्रधानो जन्म निरुपमपुण्यानां यदि भवति ॥ २९ ॥ लब्धेऽपि दुर्लभे मानुष्यत्वे धर्म्मगुणविहीनानाम् । गच्छन्ति येषां दिवसा विफलमेवतेषां ते ज्ञेयाः ॥ ३० ॥ तेषां वरमजननमेव जननेऽपि हि वरमरण्यपशुभावः । धर्म्मगुणविरहितैर्यैर्जन्म कृतो विफलम् ॥ ३१ ॥ आसन्नमेव येषां महानुभावानां भावि भद्रत्वम् । धर्म्मप्रवृत्तिप्रधानानि यान्ति तेषामेव दिनानि ॥ ३२ ॥ त एव धन्या ते पुण्यभागिनस्तेषां जीवितं सफलम् । धर्म्मोद्यतानां येषां रमते मतिर्नैव पापेषु ॥ ३३ ॥ एवं मुनिना कथिते निजदुश्चरितेन जातवैराग्यः । प्रव्रज्यां प्रतिपद्यते खेमिलकः शुद्धभावेन ॥ ३४ ॥

एतो य सो महप्पो वइरो मित्तावलोयणं काउं । तव्विरहहुयवहाउलदेहो कहकहवि दीणमणो ॥ ३५ ॥ कुसुमत्थलंमि पत्तो कयं च से पारलोइयविहाणं । रयणविणिवहणेण य जाया पउरा समिद्धीय ॥ ३६ ॥ भोगे भुंजंतस्स य जातो कालक्कमेण से पुत्तो । सुपसत्थवासरम्मि अभिहाणं केसरित्ति कयं ॥ ३७ ॥ अणुकूलयाए कम्मोदयस्स थेवुज्जमे वि निरवज्जा । धणसंपत्ती जाया सयणावि हु सम्मुहीहूया ॥ ३८ ॥ तो तेण चिंतियं लच्छि-वज्जिओ सव्वहा इहं मणुओ । तूललवकासकुसुमं व नूणं लहुयत्तणमुवेइ ॥ ३९ ॥ ता एत्तो उवरि मए रक्खेयव्वं धणं सजीवियं व । एएण विणानूणं पुत्तो वि हु परिभवं कुणति ॥ ४० ॥ इति चिंतिऊण सव्वो अत्थ-चओ सायरं सहत्थेण । निक्खित्तो धरणियले सुयंपि दूरे ठविंतेण ॥ ४१ ॥

---

इतश्च स महात्मा वज्रो मित्रावलोकनं कृत्वा । तद्विरहहुतवहाकुलदेहः कथं कथमपि दीनमनाः ॥ ३५ ॥ कुसुमस्थले प्राप्तः कृतं च तस्य पारलौकिकविधानम् । रत्नविनिर्वर्त्तनेन च जाता प्रचुरा समृद्धिश्च ॥ ३६ ॥ भोगान् भुञ्जमानस्य च जातः कालक्रमेण तस्य पुत्रः । सुप्रशस्तवासरेऽभिधानं केशरिरिति कृतम् ॥ ३७ ॥ अनुकूलतया कर्म्मोदयस्य स्तोकोद्यमेऽपि निरवद्या । धनसंपत्तिर्जाता स्वजना अपि हि संमुखीभूताः ॥ ३८ ॥ ततस्तेन चिन्तितं लक्ष्मीवर्जितः सर्वथेह मनुजः । तूललवकाशकुसुममिव नूनं लघुतामुपैति ॥ ३९ ॥ तस्मा-दित उपरि मया रक्षितव्यं धनं स्वजीवितमिव । एतेन विना नूनं पुत्रोऽपि हि परिभवं करोति ॥ ४० ॥ इति चिन्तयित्वा सर्वोऽर्थचयः सादरं स्वहस्तेन । निक्षिप्तो धरणितले सुतमपि दूरे स्थापयता ॥ ४१ ॥

अह अन्नया कयाई सो खेमिलगाभिहाणसाहुवरो । सुत्तत्थपारगामी विचित्ततवसोसियसरीरो ॥ ४२ ॥ अणिययविहारचरियाए विहरमाणो समागतो तत्थ । वइरेण वंदिओ तह कह कहवि य पच्चभिन्नाओ ॥ ४३ ॥ अवितक्किय तदुवागम–वट्टंताणंद संदिरच्छेण । भणिओ य स बहुमाणं भयवं को एस बुत्तंतो ॥ ४४ ॥ पावेण मए तुज्झं पंचत्तगमो वितक्किओ आसि । तह तेसु तेसु ठाणेसु पेहणेण वि अदिट्ठस्स ॥ ४५ ॥ ताहे मुणिणा निच्छउममेव सव्वा जहट्ठिया वत्ता । नियगा सवित्थरा तस्स संसिया सत्थहियएण ॥ ४६ ॥ आयन्निऊण य इमं परमं विम्हयमुवागओ वइरो । पडिबोहिओ य मुणिणा विचित्तजुत्तीहिं वयणेहिं ॥ ४७ ॥ अब्भुवगओ य तेणं संसारुव्वेयमुव्वहंतेण । सग्गापवग्गहेऊ धम्मो सवन्नुपन्नत्तो ॥ ४८ ॥

---

अथान्यदा कदाचित् स खेमिलकाभिधानसाधुवरः । सूत्रार्थपारगामी विचित्रतपः शोषितशरीरः ॥ ४२ ॥ अनियतविहारचर्यया विहरमाणः समागतस्तत्र । वैरेण वन्दितस्तथा कथं कथमपि य प्रत्यभिज्ञातः ॥४३॥ अवितर्किततदुपागमवर्त्तमानानन्दस्यन्दिनयनेन । भणितश्च स बहुमानं भगवन् ? क एष वृत्तान्तः ॥ ४४ ॥ पापेन मया तव पञ्चत्वगमो वितर्कित आसीत् । तत्र तेषु तेषु स्थानेषु प्रेक्षणेनाप्यदृष्टस्य ॥ ४५ ॥ तदा मुनिना निच्छद्ममेव सर्वा यथास्थितं वार्त्ता । निजका सविस्तरा तस्य शंसिता स्वस्थहृदयेन ॥ ४६ ॥ आकर्ण्य चेमां परमं विस्मयमुपागतो वज्रः । प्रतिबोधितश्च मुनिना विचित्रयुक्तिभिर्वचनैः ॥ ४७ ॥ अभ्युपगतश्च तेन संसारोद्वेगमुद्वहता । स्वर्गापवर्गहेतुर्धर्म्मः सर्वज्ञप्रज्ञप्तः ॥ ४८ ॥

पालेइ निरइयारं तं च पयत्तेण परमसाहुजणं। अच्चंतभत्तिजुत्तो पइदियहं पज्जुवासइ य ॥ ४९ ॥ थेरत्तंमि य पत्तेण सुओ केसरी नियय ठाणे। ठविओ सयं च पवरो पारद्धो धम्मकम्मविही ॥ ५० ॥ नवरं सुचिरायासेणुवज्जियं निहिगणं महिनिहित्तं। मुच्छावसेण साहति पुच्छिज्जंतो वि न सुयस्स ॥ ५१ ॥ अज्जं कहेमि कल्लं कहेमि एवं पयंपइ सया वि। जाणंतो वि हु नियजीवियव्वमइथोयदियहथिरं ॥ ५२ ॥ सत्तोवरोहरहिए गिहेगदेसे य पोसहाईहिं। आराहणाभिलासेण चित्तपरिकम्मणं कुणति ॥५३॥ पुत्तो वि पियरमच्चंत–थेरमुवलक्खिउं पइखणंपि। अत्थं पुच्छइ सो चिय अच्छइ सामाइयंमि ठिओ ॥ ५४ ॥ नो किंपि कहइ अह सो अन्नंमि दिणंमि मरणमणुपत्तो। इयरो य तेण दुक्खेण दुक्खिओ जायवियलमणो ॥ ५५ ॥

---

पालयति निरतिचारं तं च प्रयत्नेन परमसाधुजनम्। अत्यन्तभक्तियुक्तः प्रतिदिवसं पर्य्युपासति च ॥ ४९ ॥ स्थविरत्वे च प्राप्तेन सुतः केशरिर्निजस्थाने। स्थापितः स्वयं च प्रवरः प्रारब्धो धर्म्मकर्मविधिः ॥ ५० ॥ नवरं सुचिरायासेनोपार्जितं निधिगणं महिनिहितम्। मूर्च्छावशेन कथयति पृच्छ्यमानोऽपि न सुतस्य ॥ ५१ ॥ अद्य कथयामि कल्यं कथयाम्येवं प्रजल्पति सदापि। जानन्नपि हि निजजीवितव्यमतिस्तोकदिवसस्थिरम् ॥ ५२ ॥ सत्त्वोपरोधरहिते गृहैकदेशे च पौषधादिभिः। आराधनाभिलाषेण चित्रपरिकर्म करोति ॥५३॥ पुत्रोऽपि पितरमत्यन्तस्थविरमुपलक्ष्य प्रतिदिनमपि। अर्थं पृच्छति सोऽपि च तिष्ठति सामायिके स्थितः ॥ ५४ ॥ न किमपि कथयत्यथ सोऽन्यस्मिन् दिने मरणमनुप्राप्तः। इतरश्च तेन दुःखेन दुःखितो जातविकलमनाः ॥ ५५ ॥

हा ! हा ! निहिणो धरणीए सोत्थया ते कहं सुमुहाविगया। हा ! हा ! अणज्ज हे ताय पुत्तवेरी तुमं परमो ॥ ५६ ॥
धीधी धम्मो वि हु तुज्झ मूढ धी धी विवेयसारो ते। इय विलवंतो संतो मरिउं तिरियत्तणं पत्तो ॥ ५७ ॥
इय सो धम्मत्थी वि हु जातो पुत्तस्स कम्मबंधाय। धम्मत्थीणं पुण कम्म–बंधहेउत्तणमजुत्तं ॥ ५८ ॥
तेणं चिय भुवणगुरू वीरो तह वरिसयालमज्झे वि अन्नत्थ विहरिओ तावसाणमप्पत्तियं नाउं ॥ ५९ ॥
ते धन्ना सप्पुरिसा तेच्चिय सद्धम्मपडिवन्ना। जे नो होंति निमित्तं जीवाणं कम्मबंधस्स ॥ ६० ॥ बहु-
भवपरंपरा वेर–वज्जणट्ठा सुयं ठवेऊण। जत्तेण समाहीए ता धम्मंमि जएज्ज गिही ॥ ६१ ॥ इय
पुत्तसिक्खपडिदार–मेत्थ वीयं इमं समक्खायं। एत्तो य कालविगमण–पडिदारं तइयमक्खामि ॥ ६२ ॥

---

हा हा निधयो धरण्यां स्वस्ततास्ते कथं मुधाविगताः। हा हाऽनार्य्य हे तात पुत्रवैरिस्त्वं परमः ॥ ५६ ॥ धिग् धिग् धर्म्मोऽपि हि तव मूढ ? धिग् धिग् विवेकसारस्ते। इति विलपन् सन् मृत्वा तिर्यक्त्वं प्राप्तः ॥ ५७ ॥ इति स धर्म्मार्थ्यपि हि जातः पुत्रस्य कर्म्मबन्धाय। धर्म्मार्थिनां पुनः कर्म्मबन्धहेतुत्वमयुक्तम् ॥ ५८ ॥ तेनैव भुवनगुरुर्वीरस्तत्र वर्षाकालमध्येऽपि। अन्यत्र विहृतस्तापसानामप्रीतिकं ज्ञात्वा ॥ ५९ ॥ ते धन्याः सत्पुरुषास्त एव सद्धर्म्मप्रतिपन्नाः। ये नो भवन्ति निमित्तं जीवानां कर्म्मबन्धस्य ॥ ६० ॥ बहुभवपरंपरावैरवर्जनार्थं सुतं स्थापयित्वा। यत्नेन समाधौ ततो धर्म्मे यतेत गृही ॥ ६१ ॥ इति पुत्रशिक्षाप्रतिद्वारमत्र द्वितीयमिदं समाख्यातम्। इतश्च कालविगमनप्रतिद्वारं तृतीयमाख्यामि ॥ ६२ ॥

सो पुव्वुत्तो सड्ढो राया वा पुत्तनिहिय नियपओ । तप्परिणइमवलोइउ कामो जा किंपि किर कालं ॥६३॥ अच्छिउमिच्छइ ता सव्वसत्तसंताणवाहरहियम्मि । सच्चरियजणाहिट्ठिए पेरंते पयइं सोमंमि ॥ ६४ ॥ सुविचित्तंमि पएसे परिवाराणुमयसुद्धचित्तेणं । परिसुद्धेण दलेण य विडविलया संगपरिमुक्कं ॥ ६५ ॥ सुविसिट्ठ मट्ठ थिर थोर थंभमइघणकवाडसंपुडयं । मसिणसमभित्तिभागं सुमट्ठमणिभूमिवट्ठं च ॥ ६६ ॥ सुकरपडिलेहपमज्जणं च पविसंतसत्तचित्तकरं। बहु सावगपाउग्गं तिकालसाहारणसरूवं ॥ ६७ ॥ उच्चारभूमिजुत्तं पावमहारोगिलोगपडियारं । सधम्मोसहसालं पोसहसालं करावेज्जा ॥ ६८ ॥ अहवा पारद्धविसुद्ध–धम्मकरणोचियं पुरा सिद्धं । पेहेज्ज किंपि गेहं तं चिय पगुणं करावेज्जा ॥ ६९ ॥

---

स पूर्वोक्तः श्राद्धो राजा वा पुत्रनिहितनिजकपदः । तत्परिणतिमवलोकितुकामो यावत् किमपि किल कालम् ॥ ६३ ॥ स्थातुमिच्छति तावत् सर्वसत्त्वसन्तानबाधरहिते । सच्चरितजनाधिष्ठिते पर्य्यन्तपरिणति सौम्ये ॥६४॥ सुविचित्रे प्रदेशे परिवारानुमतशुद्धचित्तेन । परिशुद्धेन दलेन च विटवनितासङ्गपरिमुक्तम् ॥ ६५ ॥ सुविशिष्टमृष्टस्थिरस्थूलस्तम्भमतिघनकपाटसंपुटकम् । मसृणसमभित्तिभागं सुमृष्टमणि भूमिपृष्टं च ॥ ६६ ॥ सुकरप्रतिलेखप्रमार्ज्जनां च प्रविशत्सत्त्वचित्तकराम् । बहुश्रावकप्रायोग्यं त्रिकालसाधारणस्वरूपाम् ॥ ६७ ॥ उच्चारा भूमियुक्तां पापमहारोगिलोकप्रतिकाराम् । सद्धर्म्मौषधशालां पौषधशालां कारयति ॥ ६८ ॥ अथवा प्रारब्धविशुद्धधर्म्मकरणोचितं पुरसिद्धम् । प्रेक्षेत किमपि गेहं तमेव प्रगुणं कारयेत् ॥ ६९ ॥

तत्थ य पसत्थधम्म-त्थचिंतणक्खित्तचित्तवावारो। सावज्जकज्जपरिवज्जणुज्जुओपायमासज्ज ॥७०॥ कइयावि वायणाए कयियावि य पुच्छणाए कइयावि । परियट्टणाए कइयावि सत्थपरमत्थचिंताए ॥७१॥ कइयावि य ज्झाणेणं-मोणेणं कयाइ संकुचियगत्तो । वीरासणाइणा तह आसणवंधेण कइयावि ॥७२॥ कइयावि डुवालस भावणाण परिभावणेण कइयावि । सद्धम्मकहासवणेण नेज्ज कालं समाहीए ॥७३॥ उचियसमए य मुणिणो सिद्धंतमहारहस्स मणिनिहिणो । वहुमाणभत्तिमंतो गंतूणं पज्जुवासेज्ज ॥ ७४ ॥ भोयणकाले य तहा ताय पसीअह अणुग्गहं कुणह । एह मह मंदिरंमी संपइ आहारगहणत्थं ॥ ७५ ॥ इय पुत्तेण सविणयं आहूओ थिमियमाणसो मणियं । गंतूण घरे विहिणा रहिओ मुच्छाए भुंजेज्जा ॥ ७६ ॥

---

तत्र च प्रशस्तधर्म्मार्थचिन्तनाक्षिप्तचित्तव्यापारः । सावद्यकार्यपरिवर्ज्जनोद्यत उपायमासाद्य ॥ ७० ॥ कदापि वाचनया कदापि च पृच्छनया कदाचिदपि । परिवर्त्तनया कदापि शास्त्रपरमार्थचिन्तनया ॥ ७१ ॥ कदापि च ध्यानेन मौनेन कदापि संकुचितगात्रः । वीरासनादिना तथाऽऽसनवन्धनेन कदाचिदपि ॥ ७२ ॥ कदापि द्वादशभावनानां परिभावनेन कदाचिदपि । सद्धर्म्मकथाश्रवणेन नयेत कालं ममाध्या ॥ ७३ ॥ उचितसमये च मुनीन् सिद्धान्तमहारहस्यमणिनिधीन् । वहुमानभक्तिमान् गत्वा पर्य्युपासयेत ॥ ७४ ॥ भोजनकाले च तथा तात ? प्रसीदतानुग्रहं कुरुत । आगच्छत मे मन्दिरे सम्प्रति आहारग्रहणार्थम् ॥७५॥ इति पुत्रेण सविनयमाहूतः स्तिमितमानसः शनैः । गत्वा गृहे विधिना मूर्च्छया रहितो भुंजेत ॥ ७६ ॥

तह पवरवीरियवसा सइ सामत्थंमि अत्तहियकंखी । सविसेसुज्जमजुत्तो मइमं पडिमाउ पडिवज्जे ॥ ७७ ॥ ताउ पुण एक्कारस संखाए सावगाण भणियाओ । दंसणपडिमाईया जिणेहिं इय महियमोहेहिं ॥ ७८ ॥ दंसण १ वय २ सामाइय ३ पोसह ४ पडिमा ५ अबंभ ६ सचित्ते ७ । आरंभ ८ पेस ९ उद्दिट्ठवज्जए १० समणभूए य ११ ॥ ७९ ॥ दारगाहा । पुव्वपवंचिय गुणमणिपसाहिओ सावगो महप्पा सो । पढमं दंसणपडिमं पडिवज्जइ तीए पुण सम्मं ॥ ८० ॥ मिच्छत्तपंकवियलत्तणेण थेवंपि कुग्गहकलंकं । नो यरइ जेण मिच्छत्तमेव तस्साहणायालं ॥ ८१ ॥ होज्ज णणाभोगजुओ न विवज्जयवंतहे सधम्मंमि । अत्थिक्काइगुणजुओ सुहाणुबंधा निरइयारो ॥ ८२ ॥ नणु पुव्वपरूवियगुणगणस्स सुस्सावयस्स सम्मत्ते । विज्जंते वि किमेवं दंसणपडिमा पुणो भणिया ॥ ८३ ॥

---

तथा प्रवरवीर्यवशात् सति सामर्थ्ये आत्महितकांक्षी । सविशेषोद्यमयुक्तो मतिमान् प्रतिमाः प्रतिपद्येत् ॥ ७७ ॥ ताः पुनरेकादशसंख्याकाः श्रावकाणां भणिताः । दर्शनप्रतिमादिका जिनैरिति मथितमोहैः ॥ ७८ ॥ दर्शन ।१। व्रत ।२। सामायिक ।३। पोषध ।४। प्रतिमा ।५। अब्रह्म ।६। सचित्त ।७। आरम्भ ।८। प्रैष्य ।९। उद्दिष्टवर्जिक ।१०। श्रमणभूत च ।११। द्वारगाथा ॥ ७९ ॥ पूर्वप्रपञ्चितगुणमणिप्रसाधितः श्रावको महात्मा सः । प्रथमं दर्शनप्रतिमां प्रतिपद्यते तया पुनः सम्यक् ॥ ८० ॥ मिथ्यात्वपंकविकलत्वेन स्तोकमपि कुग्रहकलंकम् । नो चरति येन मिथ्यात्वमेव तत्साधनायालम् ॥ ८१ ॥ भवेद्न अनाभोगयुतोन विपर्ययवान् स्वधर्मे । आस्तिक्यादिगुणयुतः शुभानुबन्धात् निरतिचारः ॥८२॥ ननु पूर्वप्ररूपितगुणगणस्य सुश्रावकस्य सम्यक्त्वे । विद्यमानेऽपि किमेवं दर्शनप्रतिमा पुनर्भणिता? ॥८३॥

भन्नइ इह आगारे रायभिओगाइणो विवज्जेति । परिपालेइ य सम्मं अट्ठविहं दंसणायारं ॥ ८४ ॥ इय सविसेसदंसण–पडिवत्तिपहाणभावमासज्ज । दंसणपडिमा पढमा नायव्वा सावयस्स भवे ॥ ८५ ॥ नणु जो निसग्गओ वा अहिगमओ वा वि जायसुहबोहो । देवगुरुतत्तगोयर-गरुयविवज्जासजणगंति ॥ ८६ ॥ नाऊणं मिच्छत्तं पच्चक्खइ दंसणं पवज्जइ य । तं पइपडिवत्तिकमो को णु भवे भणणए एसो ॥ ८७ ॥ स महप्पा दंसण–नाणपमुहगुणरयणरोहणगिरींण । सुगुरूण भत्तिसारं कयप्पणामो पयंपेइ ॥ ८८ ॥ तुम्ह समीवे भंते ! करणेणं कारणेणणुमईए । मणवायाकाएहिं जावज्जीवंपि मिच्छंतं ॥ ८९ ॥ पच्चक्खिऊण नीसेस–मोक्खसंपडणेक्ककप्पतरुं । जावज्जीवं सम्मं सम्मत्तं संपवज्जामि ॥ ९० ॥

---

भण्यत इहागारान् राजाभियोगादीन् विवर्जयति । परिपालति च सम्यगष्टविधं दर्शनाचारम् ॥ ८४ ॥ इति सविशेपदर्शनप्रतिपत्तिप्रधानभावमासाद्य । दर्शनप्रतिमा प्रथमा ज्ञातव्या श्रावकस्य भवेत् ॥ ८५ ॥ ननु यो निस्सर्गतो वाऽधिगमतो वापि जातशुभबोधः । देवगुरुतत्त्वगोचरगुरुविपर्य्यासजनकमिति ॥ ८६ ॥ ज्ञात्वा मिथ्यात्वं प्रत्याख्याति दर्शनं प्रपद्यते च । तत्प्रति प्रतिपत्ति क्रमः को नु भवेत् भण्यत एषः ॥ ८७ ॥ स महात्मा दर्शनज्ञानप्रमुखगुणरत्नरोहणगिरीणां । सुगुरूणां भक्तिसारं कृतप्रणामः प्रजल्पति ॥ ८८ ॥ युष्मत्समीपे भदन्त ! करणेन कारणेनानुमत्या । मनोवचनकायैर्यावज्जीवमपि मिथ्यात्वम् ॥ ८९ ॥ प्रत्याख्याय निःशेपमोक्षसंपादनैककल्पतरुम् । यावज्जीवं सम्यक् सम्यक्त्वं संप्रपद्यामि ॥ ९० ॥

अज्जप्पभिइं मज्झं जावज्जीवंपि परमभत्तीए। सम्मत्तसंठियस्स होउ इमा सा च पडिवत्ती ॥ ९१ ॥ अंतर अरिहणणाओ देवो अरिहं खु देवबुद्धीए। निव्वाणसाहगगुणाण साहणा साहुणो गुरुणो ॥९२॥ जिणपहुपणीयजीवाइतत्तमयसमयसत्थसद्दहणं। निव्वुइपुरप्पयाणे पउणप्पयवीपडिसमाणं ॥९३॥ होउ य मे पइदिण–मुचियपूयपुव्वं जिणिंदवंदणयं। सुसमाहियमणवइ–कायवित्तिणो तिसंझासु ॥ ९४ ॥ धम्माभिप्पाएण य न कप्पए किं पि महसमायरिउं। लोइयतित्थेसु ण्हाण-दाणपिंडप्पयाणाई ॥ ९५ ॥ तह अग्गिहुणणकिरिया पडिवाहडिगाइजुत्तहलदाणं। संकंतिगहणदाणं कन्नाहलविसयदाणं च ॥ ९६ ॥ संडपरिणयणकरणं तिलगुलकणगधेणुदाणं च। कप्पासपवागो लोह–पमुहदाणं तहन्नंपि ॥ ९७ ॥

---

अद्यप्रभृतिं मम यावज्जीवमपि परमभक्त्या। सम्यक्त्वसंस्थितस्य भवत्वियं सा च प्रतिप्रत्तिः ॥९१॥ अन्तरारिहननाद् देवोऽर्हन् खलुदेवबुद्ध्या। निर्वाणसाधकगुणानां साधनात् साधवो गुरवः ॥ ९२ ॥ जिनप्रभुप्रणीतजीवादितत्त्वमय समयशास्त्रश्रद्दहनम्। निर्वृतिपुरप्रयाणे प्रगुणपदवीप्रतिसमानम् ॥ ९३ ॥ भवतु च मम प्रतिदिनमुचितपूजापूर्वं जिनेन्द्रवन्दनकम्। सुसमाहितमनोवाक् कायवृत्तयस्तिसृष्वपि सन्ध्यासु ॥ ९४ ॥ धर्म्माभिप्रायेण च न कल्पते किमपि मम समाचरितुम्। लौकिकतीर्थेषु स्नानदानपिण्डप्रदानादि ॥ ९५ ॥ तथाऽग्निहवनक्रिया प्रतिपद् घटिकादियुक्तफलदानम्। संक्रांतिग्रहणदानं कन्याफलविषयदानं च ॥ ९६ ॥ षण्डपरिणयनकरणं तिलगुडकनकधेनु दानं च। कर्पासप्रपाको लोहप्रमुखदानं तथाऽन्यदपि ॥ ९७ ॥

धम्ममईए नाहं दाहं जम्हा अधम्मविसए वि । धम्ममईए निवेसो नासति पत्तंपि सम्मत्तं ॥ ९८ ॥ जं सम्मत्तं सुत्ते अविवज्जासो मईए निद्दिट्ठो । सो पुण पुव्वत्तेसुं पवत्तमाणस्स कह होति ॥ ९९ ॥ नो मे संपइ कप्पइ कुतित्थपडिवद्धदेवलिंगीसु । देवगुरुणोत्ति काउं पडिवत्ती धम्मवुद्धीए ॥ २७०० ॥ नो मह तेसु पओसो मणयंपि न भत्तिमत्तमवि किंतु । देवगुरुगुणविओगा तेसु उदासत्तणं चेव ॥ १ ॥ को नाम किर सकन्नो कणगगुणविवज्जिए वि वत्थुम्मि । कणगंति मइं कुज्जा कणगत्थी जइवि सो गाढं ॥ २ ॥ नहि अकणगंपि संतं जणेणगहियंपि कणगवुद्धीए । कणगप्पओयणाइं साहेउमलं परं वत्थुं ॥ ३ ॥ गयरागदोसमोहत्तणेण देवस्स होति देवत्तं । तच्चरियागमपडिमाण दंसणा तं च विन्नेयं ॥ ४ ॥

---

धर्म्ममत्या नाहं दास्यामि यस्मादधर्म्मविषयेऽपि । धर्म्ममत्या निवेशो नाशयति प्राप्तमपि सम्यक्त्वम् ॥ ९८ ॥ यत् सम्यक्त्व सूत्रेऽविपर्य्यासो मतेर्निर्दिष्टः । स पुनः पूर्वोक्तेषु प्रवर्त्तमानस्य कथं भवति ॥ ९९ ॥ नो मम संप्रति कल्पते कुतीर्थप्रतिबद्धदेवलिङ्गिषु । देवगुरव इति कृत्वा प्रतिपत्तिर्धर्म्मबुद्ध्या ॥ २७०० ॥ नो मम तेषु प्रद्वेषो मनागपि न भक्तिमत्त्वमपि किन्तु । देवगुरुगुणवियोगात् तेषूदासत्वं चेव ॥ १ ॥ को नाम किल सकर्ण्णः कनकगुणविवर्जितेऽपि वस्तुनि । कनकमिति मतिं कुर्य्यात् कनकार्थी यद्यपि स गाढम् ॥ २ ॥ नह्यकनकमपि सज्जनेन गृहीतमपि कनकबुद्ध्या । कनकप्रयोजनानि साधयितुमलं परं वस्तु ॥ ३ ॥ गतरागद्वेषमोहत्वेन देवस्य भवति देवत्वम् । तच्चरितागमपरिमाण दर्शनात् तच्च विज्ञेयम् ॥ ४ ॥

सिवसाहगगुणगउरवेण सत्थत्थसम्मनिगरणेण । इह गुरुणो वि गुरुत्तं होति जहत्थं पसत्थं च ॥ ५ ॥ एवं नियनियलक्खण-लक्खियफुडदेवगुरुसरूवस्स । तत्थुत्ततत्तपडिवत्तिरूव-सम्मत्तपडिमा मे ॥ ६ ॥ भवउ दव्वविसुद्धा दुल्लंभगुणप्पहाणदव्वेहिं । सत्तीए दंसणंगाणां गउरवेणं पगिट्ठेणं ॥ ७ ॥ खेत्तविसुद्धा सव्वत्थ देवगुरुगोयरा हु पडिवत्ती । तुल्लचिय मज्झ परं सीयंतेयरविभासाओ ॥ ८ ॥ कालविसुद्धा सा निरइयारपरिपालणेण जाजीवं । भावविसुद्धा वि दढं हट्ठप्पहट्ठत्तणं जाव ॥ ९ ॥ अहवा भावेणेवं साइणिगहपमुहदोसगयसन्नो । उम्मत्तुक्खयचित्तो य जाव न भवामि किं बहुणा ॥ १० ॥ जाव य दंसणपडिमा परिणामो कह वि नोवग्घायवसा । परिवडति ताव मज्झं दंसणपडिमा इमा होउ ॥ ११ ॥

---

शिवसाधकगुणगौरवेण शास्त्रार्थसम्यग्निगरणेन । इह गुरोरपि गुरुत्वं भवति यथार्थं प्रशस्तं च ॥ ५ ॥ एवं निजनिजलक्षणलक्षित स्फुटदेवगुरुस्वरूपस्य । तत्रोक्ततत्त्वप्रतिपत्तिरूपसम्यक्त्वप्रतिमा मे ॥ ६ ॥ भवतु द्रव्यविशुद्धा दुर्लभगुणप्रधानद्रव्यैः । शक्त्या दर्शनाङ्गानां गौरवेण प्रकृष्टेन ॥ ७ ॥ क्षेत्रविशुद्धा सर्वत्र देवगुरुगोचरा हि प्रतिपत्तिः । तुल्यैव मम परं सीदंतेतरविभासातः ॥ ८ ॥ कालविशुद्धा सा निरतिचारपरिपालनेन यावज्जीवम् । भावविशुद्धापि दृढं हृष्टप्रहृष्टत्वं यावत् ॥ ९ ॥ अथवा भावेनैवं शाकिनिग्रहप्रमुखदोषगतसंज्ञः । उन्मत्तोत्क्षिप्तचित्तश्च यावन्न भवामि किं बहुना ॥ १० ॥ यावच्च दर्शनप्रतिमापरिणाम कथमपि नोपघातवशात् । परिपतति तावन्मम दर्शनप्रतिमेय भवतु ॥ ११ ॥

एत्तो संककंखं वितिगिच्छं तह कुतित्थिसत्थस्स। संथवपसंणाइव वज्जइस्सामि जाजीवं ॥१२॥ नरवइगण-वला देवयअभियोगा एत्थ मोक्कला मज्झ। वित्तिअभावो पिइमाइपमुहगुरुनिग्गहो य तहा ॥ १३ ॥ इय कयपडिमापडिवत्ति-सुंदरं सावगं गुरुजणो वि। उववूहइ कयपुन्नो धन्नो य तुमंति जेण इहं ॥ १४ ॥ ते धन्ना ताण नमो तेच्चिय चिरजीविणो वुहा ते य। जे निरइयारमेयं धरंति सम्मत्तवररयणं ॥ १५ ॥ एयं हि परं मूलं कल्लाणाणं तहा गुणगणस्स। एएण विणाणुट्ठाण मफलमुच्छूण पुप्फं व ॥ १६ ॥ अविय कुणमाणो वि हु किरियं परिचयंतो वि सयणधणभोए। दिंतो वि दुहस्सउरं जिणइ न अंधो जह विपक्खं ॥ १७ ॥ तह लिंतोवि निवत्तिं परिचयंतो वि सयणधणभोए। देंतो वि दुहस्सउरं मिच्छदिट्ठी लहति न सिवं ॥ १८ ॥

---

इतः शंकां कांक्षामपि जुगुप्सां तथा कुतीर्थिसार्थस्य। संस्तवप्रशंसनादि च वर्जयिष्यामि यावज्जीवम् ॥ १२ ॥ नरपतिगणवल दैवताभियोग अत्र मुत्कला मम। वृत्त्यभावः पितृमातृप्रमुखगुरुनिग्रहश्च तथा ॥ १३ ॥ इति कृतप्रतिमाप्रतिपत्तिसुन्दरं श्रावकं गुरुजनोऽपि। उपबृंहति कृतपुण्यो धन्यश्च त्वमिति येनेह ॥ १४ ॥ ते धन्यास्तेभ्यो नमस्त एव चिरजीविनो बुधास्ते च। ये निरतिचारमेतद् धरन्ति सम्यक्त्ववररत्नम् ॥ १५ ॥ एतद्धि परममूलं कल्याणानां तथा गुणगणस्य। एतेन विनानुष्ठानमफलमिक्षूणां पुष्पमिव ॥ १६ ॥ अपि च कुर्वाणोऽपि हि क्रियां परित्यजन्नपि स्वजनधनभोगान्। ददद्पि दुःखस्योरो जयति नान्धो यथा विपक्षम् ॥ १७ ॥ तथा लानपि निवृत्तिं परित्यजन्नपि स्वजनधनभोगान्। ददद्पि दुःखस्योरो मिथ्यादृष्टिर्लभते न शिवम् ॥ १८ ॥

एत्थ य अंधक्खाणयमेवं अक्खंति किर वसंतपुरे। नयरे राया नामेण आसि रिउमद्दणो तस्स ॥१९॥ अंधो अहेसि पुत्तो पढमो वीओ य दिव्वचक्खुत्ति। अज्झावगस्स पढणत्थमप्पिया य नरवइणा॥ २०॥ गंधव्वप्पमुहाओ कलाओ अंधो तिच्छेण जेट्ठसुयो। जाणाविओ तदियरो धणुवयाईउ सव्वाओ॥ २१॥ अह परिभूयं मुणिऊण अप्पयं विगयचक्खुणा वुत्तो। उज्झाओ कीस न मई सत्थं सिक्खवेसेत्ति॥ २२॥ उज्झाएणं जंपिय-महो महाभाग! चक्खुरहियस्स। कह तुज्झ तमहमुज्जोगिणोवि पारेमि परिकहिउं॥ २३॥ अंधेणं पडिभणियं जइ-वि हु एवं तहावि मं अहुणा। सिक्खवसु धणुव्वेयं अह तग्गाढोवरोहेण॥२४॥ उवइट्ठो गुरुणा से तेण वि नाओ-सुबुद्धिविभवेण। जाओय सद्दवेही चुक्कति न कहंपि लक्खस्स॥ २५॥

---

अत्रचांऽन्धाख्यानकमेवमाख्यान्ति किल वसन्तपुरे। नगरे राजा नाम्नासीत् रिपुमर्दनस्तस्य ॥१९॥ अन्ध आसीत् पुत्रः प्रथमो द्विती-यश्च दिव्यचक्षुरिति। अध्यापकस्य पठनार्थमर्पितौ च नरपतिना॥ २०॥ गान्धर्वप्रमुखाः कला अन्ध स्तीक्ष्णबुद्ध्या ज्येष्ठसुतः। ज्ञापित स्तदितरो धनुर्वेदादयः सर्वाः॥ २१॥ अथ परिभूतं ज्ञात्वात्मानं विगतचक्षुषोक्तः। उपाध्यायः कस्मान्न मां शस्त्रं शिक्षयसीति॥ २२॥ उपाध्यायेनजल्पितमहो महाभाग! चक्षूरहितस्य। कथं तव तमहमुद्योगिनोऽपि शक्नोमि परिकथितुम्॥ २३॥ अन्धेन प्रतिभणितं यद्यपि ह्येवं तथापि मामधुना। शिक्षय धनुर्वेदमथ तदूगाढोपरोधेन॥ २४॥ उपदिष्टो गुरुणा तस्मै तेनापि ज्ञात सुबुद्धिविभवेन। जातश्च शब्दवेधी भ्रंशति न कथमपि लक्षात्॥ २५॥

एवं ते दोवि सुया कलासु कुसलत्तणं परं पत्ता । अन्नंमि य पत्थावे समागयं तत्थ परचक्कं ॥ २६ ॥ अह सो कणिट्ठपुत्तो पिउणो आणाए पवरवलकलितो । आहवविहिपरिहत्थो चलिओ अरिचक्कमक्कमिउं ॥ २७ ॥ कह जेट्ठे विज्जंते काउमिमं जुज्जए कणिट्ठस्स । इति जंपिऊण सामरिसमसमकोवं परिवहंतो ॥ २८ ॥ रिउसेन्नं पइअंधो वचंतो सासिओ इमं पिउणा । वच्छ नियभूमिगाए उचियं चिय जुज्जए काउं ॥ २९ ॥ न य सुट्ठुकला-कुसलो वि पवलभुयजुयलवलसणाहो वि । दिट्ठिविरहेण काउं तुममरिहसि समरवावारं ॥ ३० ॥ इच्चाइभूरि-वयणेहिं णेगवाराउ वारिओ वि वहुं । अवगन्निऊण अंधो दढकंकडवूमियसरीरो ॥ ३१ ॥ करडितडपगलियमयं निविडगुडाडोयकप्पणाभीमं । आरुहिऊण गयवरं नीहरिउज्झत्ति नयराओ ॥ ३२ ॥

---

एवं तौ द्वावपि सुतौ कलासुकुशलत्वं परं प्राप्तौ । अन्यस्मिंश्च प्रस्तावे समागतं तत्र परचक्रम् ॥ २६ ॥ अथ स कनिष्ठपुत्रः पितुराज्ञया प्रवरबलकलितः । आहवविधिपरिहस्तश्चलितो रिपुचक्रमाक्रमितुम् ॥ २७ ॥ कथं ज्येष्ठे विद्यमाने कर्त्तुमिदं युज्यते कनिष्ठस्य । इति जल्पित्वा सामर्षमसमकोपं परिवहन् ॥ २८ ॥ रिपुसैन्यं प्रत्यन्धो व्रजन् शासितोऽयं पित्रा । वत्स ! निजभूमिकायाउचितमेव युज्यते कर्त्तुम् ॥ २९ ॥ न च सुष्ठुकलाकुशलोऽपि प्रबलभुजयुगलबलसनाथोऽपि । दृष्टिविरहेण कर्त्तुं त्वमर्हसि समरव्यापारम् ॥ ३० ॥ इत्यादि भूरिवचनैरनेकवारं वारितोऽपि बहु । अवगणय्यान्धो दृढकंकटच्छादितशरीरः ॥ ३१ ॥ करटितटप्रगलितमदं निविडगुडाटोपकल्पनाभीमम् । आरुह्य गजवरं निःसृतो झटिति नगरात् ॥ ३२ ॥

सद्दाणुसारयम्मुक्क-मग्गणुप्पीलच्छाइयदियंतो । परचक्केणं सद्धिं जुज्झेणं संपलग्गो य ॥ ३३ ॥ अह सव्वत्तो सद्दाणु-सारनिवडंतघायसंघायं । दट्ठूण मुणियतत्ता रिउणो मोणं समल्लीणा ॥ ३४ ॥ रिउसद्दं असुणंतो तत्तो अंधो पहारमकुणंतो । पारद्धो हणिउमरीहिं सव्वउ विहियमोणेहिं ॥ ३५ ॥ मोयाविओ य कह कहवि भाउणा सो सचक्खुणा झत्ति ॥ दिट्ठंतोवणओ इह पढमं चिय दंसिओ चेव ॥ ३६ ॥ पत्थुयमेत्तो भन्नइ जाजीवं दंसणं गिही घेत्तुं । पच्छाय निरइयारं दंसणपडिमं पवज्जेइ ॥ ३७ ॥ अह तं सम्मं परिपालिऊण तग्गुणजुओ पुणो बीयं । वयपडिमं पडिवज्जति तीए पुण गिण्हइ वयाइं ॥ ३८ ॥ पाणिवहालिय अदत्ताबंभपरिग्गहनिव्वित्ति-रूवाइं । बंधाई अइयारे वज्जइ य इमे सुजत्तेण ॥ ३९ ॥

---

शब्दानुसारप्रमुक्तमार्गणोत्पीडच्छादितदिगन्तः । परचक्रेण सार्द्धं युधेन संप्रलग्नश्च ॥ ३३ ॥ अथ सर्वतः शब्दानुसारनिपतद्घात संघातम् । दृष्ट्वा ज्ञाततत्त्वा रिपवो मौनं समालीनाः ॥ ३४ ॥ रिपुशब्दमशृण्वन् ततोऽन्धः प्रहारमकुर्वन् । प्रारब्धो हन्तुमरिभिः सर्वतो विहितमौनैः ॥ ३५ ॥ मोचितश्च कथं कथमपि भ्रात्रा स सचक्षुषा झटिति । दृष्टान्तोपनय इह प्रथममेव दर्शितश्चैव ॥ ३६ ॥ प्रस्तुतमितो भण्यते यावज्जीवं दर्शनं गृही गृहीत्वा । पश्चान्निरतिचारं दर्शनप्रतिमां प्रपद्यते ॥ ३७ ॥ अथ तां सम्यक् प्रतिपाल्य तद्गुणयुतः पुनर्द्विती-याम् । व्रतप्रतिमां प्रतिपद्यते तस्याः पुनर्गृह्णाति व्रतानि ॥ ३८ ॥ प्राणिबधालीकादत्ताब्रह्मपरिग्रहनिवृत्तिरूपाणि । बन्धाद्यतिचारान् वर्जयति चेमान् सुयत्नेन ॥ ३९ ॥

सविसेसधम्मसवणाइएसु किच्चेसु वट्टई सम्मं । अणुकंपारससरसियंतकरणवित्ती य हवति सया ॥ ४० ॥ अह तइयं सामाइय-पडिमं पुव्वोवइट्ठगुणकलिओ । पडिवज्जइ महप्पा सम्ममुदासीणयाइजुओ ॥ ४१ ॥ उदासीणया १ मज्झत्थ २ संकिलेसविसुद्धिओ ३ । अणाउलत्त ४ असंगत्तं एए पंच गुणा इहं ॥ ४२ ॥ जेहिं तेहिं जह तह भोयणसयणाइएहिं चित्तस्स । जो संतोसो जायति सा हु उदासीणया वुत्ता ॥ ४३ ॥ सामाइयपढमंगं एसा य विसुद्धिकारणत्तेण । भणिया जिणेहिं संपइ भन्नइ मज्झत्थवित्ती उ ॥ ४४ ॥ एस सयणो परो वा इय वुद्धी पयइतुच्छचित्ताण । पयईए विउलचित्ताण पुण इमं जयमवि कुडुंबं ॥ ४५ ॥ जम्हा अणाइनिहणे संसारमहासरे सरंताणं । वहुभवसयअज्जिय कम्मरासिवसगाण सत्ताणं ॥ ४६ ॥

---

सविशेषधर्म्मश्रवणादिकेषु कृत्येषु वर्त्तते सम्यक् । अनुकम्पारससरसितान्तःकरणवृत्तिश्च भवति सदा ॥ ४० ॥ अथ तृतीयां सामायिकप्रतिमां पूर्वोपदिष्टगुणकलितः । प्रतिपद्यते महात्मा सम्यगुदासीनतादियुतः ॥ ४१ ॥ उदासीनता ।१। मध्यस्थ ।२। संक्लेशविशुद्धयः ।३। अनाकुलत्वमसंगत्वम् ।४।५। एते पञ्च गुणा इह ॥ ४२ ॥ यैस्तैर्यथा तथा भोजनशयनादिकैश्चित्तस्य । यः संतोषो जायते सा ह्युदासीनता उक्ता ॥ ४३ ॥ सामायिकप्रथमाङ्गमेषा च विशुद्धिकारणत्वेन । भणिता जिनैः संप्रति भण्यते मध्यस्थवृत्तिस्तु ॥ ४४ ॥ एष स्वजनः परो वेति बुद्धिः प्रकृतितुच्छचित्तानाम् । प्रकृत्या विपुलचित्तानां पुनरिदं जगदपि कुटुंवम् ॥ ४५ ॥ यस्मादनादिनिधने संसारमहासरसि सरताम् । वहुभवशतार्जितकर्म्मराशिवशगानां सत्त्वानाम् ॥ ४६ ॥

अन्नोन्नमणेगविहो कस्सेह न केण को व संबंधो। संजाओ इय चिंता जा सा मज्झत्थवित्ती उ ॥ ४७ ॥ अह संकिलेसविसुद्धी भन्नइ संवसइ जेहिं सह ताणं। अन्नाण च दुन्नयदंसणे वि जमणक्खपरिहरणं ॥ ४८ ॥ ठाणगमसुयणजागर लाभालाभाइएसु सवत्थ। जो हरिसवेमणस्साभावो सो पुण अणाउलया ॥ ४९ ॥ अह कणयकयवरेसुं मित्तामित्तेसु सोक्खदुक्खेसु। बीभच्छपेच्छणिज्जेसु तह य थुइवायनिंदासु ॥ ५० ॥ अन्नत्थ य विविहमणोवियारकारणसमागमे वि सया। समचित्तत्तं जं तं असंगयं बिंति जयपहुणो ॥ ५१ ॥ एयाणं समुदाओ पंचन्ह गुणाण परमसामइयं। अह य उदासत्तं चिय एक्कं तक्कारणं परमं ॥ ५२ ॥ किं बहुणा ! सावज्ज-जोगवज्जणनिरवज्जजोगसेवणारूवं। सामाइयमित्तरियं गिहिणो परमगुणट्ठाणं ॥ ५३ ॥

---

अन्योन्यमनेकविधः कस्येह न केन को वा सम्बन्धः। संजात इति चिन्ता या सा मध्यस्थवृत्तिस्तु ॥ ४७ ॥ अथ संक्लेशविशुद्धिर्भण्यते सवसति यैः सह तेषाम्। अज्ञानां च दुर्नयदर्शनेऽपि यज्जुगुप्सापरिहरणम् ॥ ४८ ॥ स्थानगमनशयनजागरणलाभालाभादिकेषु सर्वत्र। यो हर्षवैमनस्याभावः स पुनरनाकुलता ॥ ४९ ॥ अथ कनककचवरयोर्मित्रामित्रयोः सुखदुःखयोः। बीभत्सप्रेक्षणीययोस्तथा च स्तुतिवादनिन्दयोः ॥ ५० ॥ अन्यत्र च विविधमनोविकारकारणसमागमेऽपि सदा। समचित्तत्वं यत्तदसंगतं वदन्ति जगत्प्रभवः ॥ ५१ ॥ एतेषां समुदायः पञ्चानां गुणानां परमसामायिकम्। अथचोदासत्वमेवैकं तत्कारणं परमम् ॥ ५२ ॥ किं बहुना सावद्ययोगवर्ज्जननिरवद्ययोगसेवनारूपम्। सामायिकमित्वरिकं गृहिणः परमगुणस्थानम् ॥ ५३ ॥

इय तइयाए सम्मं करेति सामाइयं स पडिमाए। मणदुप्पणिहाणाई तहईयारे य परिहरति ॥ ५४ ॥ अप्पडि-पुव्वप्पडिमाजुत्तो अट्ठमिमाईसु पव्वदियहेसु। पडिवज्जई चउत्थीए पोसहं चउविहंपि गिहि ॥ ५५ ॥ अप्पडि-दुप्पडिलेहियसेज्जासंथारगाइ वज्जेइ। सम्मं च अणणुपालण-माहाराईसु एयाए ॥ ५६ ॥ अह पंचमपडिमाए पोसहदिवसेसु एगराईयं। सो पडिमं पडिवज्जइ पुव्वोइयसव्वगुणजुत्तो ॥ ५७ ॥ असिणाणो दिणभोई अबद्ध-कच्छो दिणंमि कयबंभो। रत्तिं परिमाणकडो पडिमावज्जेसु दियहेसु ॥ ५८ ॥ झायइ पडिमाए ठिओ तिलोय-पुज्जे जिणे जियकसाए। नियदोसपच्चणीयं अन्नं वा पंच जा मासा ॥ ५९ ॥ छट्ठीए बंभयारी रत्तिंपि स होइ नवरि सविसेसं। जियमोहो अविभूसो ठाइ रहे सह न इत्थीहिं ॥ ६० ॥

---

इति तृतीयया सम्यक् करोति सामायिकं स प्रतिमया। मनोदुष्प्रतिधानानि तथातिचारांश्च परिहरति ॥ ५४ ॥ पूर्वप्रतिमायुक्तोऽष्ट-म्यादिषु पर्वदिवसेषु। प्रतिपद्यते चतुर्थ्यां पोषधं चतुर्विधमपि गृही ॥ ५५ ॥ अप्रतिदुष्प्रतिलेखितशय्यासंस्तारकादि वर्जेति। सम्यक् चाननुपालनमाहारादिषु एतया ॥ ५६ ॥ अथ पञ्चमप्रतिमायां पौषधदिवसेष्वेकरात्रिकाम्। स प्रतिमां प्रतिपद्यते पूर्वोदितसर्वगुणयुक्तः ॥ ५७ ॥ अस्नानो दिनभोजी अबद्धकक्षो दिने कृतब्रह्मचर्यः। रात्रौ परिमाणकृतः प्रतिमावर्जेषु दिवसेषु ॥ ५८ ॥ ध्यायति प्रतिमायां स्थितस्त्रिलोकपूज्यान् जिनान् जितकषायान्। निजदोषप्रत्यनीकमन्यं वा पंच यावन्मासाः ॥ ५९ ॥ षष्ठ्यां ब्रह्मचारी रात्रावपि स भवति केवलं सविशेषम्। जितमोहोऽविभूषस्तिष्ठति रहसि सह न स्त्रीभिः ॥ ६० ॥

चयइ य अइप्पसंगं सिंगारकहं च जाव छम्मासा। पुव्वोइयपडिमासु पडिबद्धमणो य अपमाई ॥ ६१ ॥ सत्तमपडिमाए पुणो सच्चित्तमाहारमेस परिहरेति। पुव्वोइयगुणजुत्तो अपमत्तो सत्त जा मासा ॥ ६२ ॥ आरंभमट्ठमीए सावज्जं कारवेइ पेसेहिं। पुव्वपवत्तं न सयं वित्तिकए अट्ठजामासा ॥ ६३ ॥ नवमीए पेसेहिं वि सावज्जं कारवेइ नारंभं। धणवं संतुट्ठो पुत्तभिच्चनिक्खित्तभारोत्ति ॥ ६४ ॥ लोगववहारविरओ थेवममत्तो य परमसंविग्गो। एसो पुव्वपवंचियगुणजुत्तो जाव नवमासा ॥ ६५ ॥ दसमीए तदुद्देसेण जं कडं तंपि भुंजइ न भत्तं। छुरकयमुंडो कोई सिहाधरो वा हवेज्ज गिही ॥ ६६ ॥ पुट्ठो य निहाणाई सयणेहिं कहेज्ज जइ स जाणेज्जा। पुव्वपडिमासमग्गो दसमासा जाव विहरेज्जा ॥ ६७ ॥

---

त्यजति चातिप्रसङ्गं शृंगारकथां च यावत् षण्मासान्। पूर्वोदितप्रतिमासु प्रतिबद्धमनाश्चाप्रमादी ॥ ६१ ॥ सप्तम्यां प्रतिमायां पुनः सचित्ताहारमेष परिहरति। पूर्वोदितगुणयुक्तोऽप्रमत्तो यावत् सप्तमासान् ॥ ६२ ॥ आरम्भमष्टम्यां सावद्यं कारयति प्रैष्यैः। पूर्वप्रवृत्तं न स्वयं वृत्तिकृते यावदष्टमासान् ॥ ६३ ॥ नवम्यां प्रैष्यैरपि सावद्यं कारयति नारम्भम्। धनवान् संतुष्टः पुत्रभृत्यनिक्षिप्तभार इति ॥ ६४ ॥ लोकव्यवहारविरतः स्तोकममत्वश्च परमसंविग्नः। एष पूर्वप्रपञ्चितगुणयुक्तो यावन्नवमासान् ॥ ६५ ॥ दशम्यां तदुद्देशेन यत्कृतं तदपि भुञ्जते न भक्तम्। क्षुरकृतमुण्डः कोऽपि शिखाधरो वा भवति गृही ॥ ६६ ॥ पृष्टश्च निधानादिं स्वजनैः कथयेत् यदि स जानाति। पूर्वप्रतिमासमग्रो दशमासान् यावद् विहरति ॥ ६७ ॥

एगारसीए एसो खुरेण लोएण वावि मुंडसिरो। रयहरणोवगहधारी समणब्भूओ दढं विहरे ॥ ६८ ॥ नवरं सयणसिणहे अवुच्छिन्ने तहाविहे कहवि। सन्नायसन्निवेसं दट्ठुं वचेज्ज नियसयणे ॥ ६९ ॥ तत्थवि सो आहारं साहू विव एसणाए उवउत्तो। कयकारियाणुमोयण–विवज्जियं चेव गिन्हेज्जा ॥ ७० ॥ अह तस्सा भिगमणाउ पुव्वाउत्तं तु भत्तसूयाई। कप्पइ आहारगयं पच्छाउत्तं तु नो कप्पे ॥ ७१ ॥ तस्स च भिक्खट्ठाए घरप्पविट्ठस्स जुज्जए वोत्तुं। पडिमोवगयस्स मह–भिक्खमहो देह गिहिणोत्ति ॥ ७२ ॥ एवं च विहरमाणो को सि तुमं इय परेण सो पुट्ठो। सड्ढो सावगपडिमापडिवन्नो हंति पडिभणति ॥ ७३ ॥ एवं उक्कोसेणं एक्कारस मास जाव विहरेति। एगाहादियरेणं सेसासु वि इय जहन्नेणं ॥ ७४ ॥

---

एकादश्यामेष क्षुरेण लोचेन वा ऽपि मुण्डशिराः। रजोहरणोपग्रहधारी श्रमणभूतो दृढं विहरेत् ॥ ६८ ॥ नवरं स्वजनस्नेहेऽव्युच्छिन्ने तथाविधे कथमपि। संज्ञातसन्निवेशं द्रष्टुं व्रजति निजस्वजनान् ॥ ६९ ॥ तत्रापि स आहारं साधुरिवैषणयोपयुक्तः। कृतकारितानुमोदनविवर्जितं चैव गृह्णीयात् ॥ ७० ॥ अथ तस्याभिगमनात् पूर्वपक्वं तु भक्तसूपादि। कल्पत आहारगतं पश्चात् पक्वं तु नो कल्पते ॥ ७१ ॥ तस्य च भिक्षार्थाय गृहप्रविष्टस्य युज्यते वक्तुम्। प्रतिमोपगताय मह्यं भिक्षामहो ददत गृहिण इति ॥ ७२ ॥ एवं च विहरमाणः कोऽसि त्वमिति परेण स पृष्टः। श्राद्धः श्रावकप्रतिमाप्रतिपन्नोऽहमिति प्रतिभणति ॥ ७३ ॥ एवमुत्कृष्टेनैकादश मासान् यावद् विहरति। एकाहोरात्रमितरेण शेषासु अपि च जघन्येन ॥ ७४ ॥

सम्मत्तासु य एयासु कोवि धीरो गहेज्ज पवज्जं । अन्नो गिहत्थभावं वएज्ज पुत्ताइपडिबंधा ॥ ७५ ॥ गेह-
ट्ठिओ य संतो पायं पम्मुक्कपाववावारो । सइ सामत्थे सीयंत जिणगिहाई पडियरेज्जा ॥ ७६ ॥ तदभावे
साहारण-दव्ववएण वि करेज्ज तच्चिंतं । साहारणत्थविणिओग-विसयमिय नवरि जाणेज्जा ॥ ७७ ॥ जिण-
भवणं १ जिणबिंबं २ तह जिणबिंबाण पूयणं तइयं ३ । जिणपवयणपडिबद्धाइं पोत्थयाणि य पसत्थाइं
४ ॥ ७८ ॥ निव्वाणसाहगगुणाण साहगा साहुणो य ५ समणीओ ६ । सद्धम्मगुणाणुगया सुसावगा ७
साविगाओ तह ॥ ७९ ॥ तह ८ पोसहसाला ९ दंसणकज्जंपि तहाविहं भवे किंपि १० । एवं दसट्ठाणाइं साहा-
रणदव्वविसओत्ति ॥ ८० ॥

---

समस्तासु चैतासु कोपि धीरो गृह्णीयात्प्रव्रज्याम् । अन्यो गृहस्थभावं व्रजति पुत्रादिप्रतिबन्धात् ॥ ७५ ॥ गेहस्थितश्च सन् प्रायः प्रमु-
क्तपापव्यापारः । सति सामर्थ्ये सीदज्जिनगृहादिः प्रतिचरेत् ॥७६॥ तदभावे साधारण द्रव्यव्ययेनापि कुर्यात् तच्चिन्ताम् । साधारणार्थ-
विनियोगविषयमिति नवरि जानीयात् ॥ ७७ ॥ जिनभवनं १ जिनबिम्बं २ तथा जिनबिम्बानां पूजनं ३ तृतीयम् । जिनप्रवचनप्रति-
बद्धानि पुस्तकानि च प्रशस्तानि ४ ॥ ७८ ॥ निर्वाणसाधकगुणानां साधकाः साधवश्च ५ श्रमण्यः ६ सद्धर्मे गुणानुगताः सुश्रावकाः
७ श्राविकास्तथा ८ ॥ ७९ ॥ पौषधशाला ९ दर्शनकार्यमपि तथाविधं भवेत् किमपि १० । एवं दशस्थानानि साधारण-
द्रव्यविषय इति ॥ ८० ॥

तत्थ य समणा अणियय-विहारचरियाकमेण जह सुत्तं । अणुपुव्वेण पुराइसु मासचउमासकप्पेण ॥ ८१ ॥ पडिबंधपरिचाएण दव्वखेत्ताइएसु विहरंता । तह सावगावि वाणिज्जतित्थजत्ताइकज्जेण ॥ ८२ ॥ मुणियागमपरमत्था जिणसासणपरमभत्तिसंजुत्ता । गामागरनगराइसु किर विहरमाणा य यत्तेण ॥८३॥ मग्गाणुलग्गगामाइएसु जिणभवणपमुहनियपक्खं । गामदुवारब्भासाइं संठियं पसिणयंति जणं ॥ ८४ ॥ तव्वयणाउ अत्थित्ति सम्ममवगम्म जिणगिहाईयं । गच्छंति तत्थ विहिणा पमोयभरपुलइयसरीरा ॥ ८५ ॥ जइ ताव थिरा ता पढमामेवच्चियवंदणं जहुत्तविहिं । काऊणं जिणगेहंमि भग्गलुग्गाइ पेहंति ॥ ८६ ॥ अह ऊसुगत्तणं ता संखित्तयरं पि पणमिउं पच्छा । तस्सडिय पडियमंगं पेहंती होज्ज तं कहत्ति ॥ ८७ ॥

---

तत्र च श्रमणा अनियतविहारचर्याक्रमेण यथासूत्रम् । अनुपूर्वेण पुरादिषु मासचतुर्मासकल्पेन ॥ ८१ ॥ प्रतिबन्धपरित्यागेन द्रव्यक्षेत्रादिकेषु विहरन्तः । तथा श्रावका अपि वाणिज्यतीर्थयात्रादिकार्येण ॥ ८२ ॥ ज्ञातागमपरमार्था जिनशासनपरमभक्तिसंयुक्ताः । ग्रामाकरनगरादिषु किल विहरमानाश्च यत्नेन ॥ ८३ ॥ मार्गानुलग्नग्रामादिकेषु जिनभवणप्रमुखनिजपक्षम् । ग्रामद्वारभासादिसंस्थितं प्रश्नयंति जनम् ॥ ८४ ॥ तद्वचनादस्तीति सम्यगवगम्य जिनगृहादिकम् । गच्छन्ति तत्र विधिना प्रमोदभरपुलकितशरीराः ॥ ८५ ॥ यदि तावत् । स्थिरस्तदा प्रथममेव चैत्यवन्दनं यथोक्तविधिम् । कृत्वा जिनगृहे भग्नलुग्नादिकं च पश्यन्ति ॥ ८६ ॥ अथोत्सुकत्वं तदा सक्षिप्ततरमपि प्रणम्य पश्चाद् । तच्छटितपतितमङ्गं पश्यन्ति भवेत् तत्कथमपि ॥ ८७ ॥

तत्तो कुणंति सामत्थसंभवे सावगाउ तच्चिंतं। तद्देसणादुवारेण चेव मुणिणो वि जह जोग्गं ॥ ८८ ॥ अहवा सदेसपरदेसगामनगरागराइट्ठाणेसु। सच्चरियजणाइन्नेसु सावगेहिं विरहिएसु ॥ ८९ ॥ परिदुब्बलसावगसंगएसु वा उदयिवत्थुपुरिसेसु। जं होज्ज जिणघरं जिण्णसिण्णपरिसडियापडियाइ ॥ ९० ॥ विहडियसंधिचयं वा परिखीणदुवारदेसपिहणं वा। देसणवट्टमुणिजणमुहाउ तं अहव लोगातो ॥ ९१ ॥ सोच्चा किंपि कहिं पिव दट्ठुं सयं सावगो विचिंतेज्जा। अणुरत्तअट्ठिमिंजो जिणसासणभत्तिरागेण ॥ ९२ ॥ केणावि पुन्ननिहिणा इय रूवजिणालयं कुणंतेण। परिपुंजिऊण धरिओ नियजसपसरो अहं मन्ने ॥ ९३ ॥ किंतु इयानिविडघडणे वि अहह कालेण विहियमिह खूणं। अहवा विणस्सराच्चिय सव्वपयत्था भवसमुत्था ॥ ९४ ॥

---

ततः कुर्वन्ति सामर्थ्यसंभवे श्रावकास्तु तच्चिन्ताम्। तद्देशनाद्वारेण चैव मुनयोऽपि यथा योग्यम् ॥ ८८ ॥ अथवा स्वदेशपरदेशग्रामनगराकरादिस्थानेषु। सच्चरितजनकीर्णेषु श्रावकैर्विरहितेषु ॥ ८९ ॥ अतिदुर्बल श्रावक संगतेषु वा उदयि वास्तुपुरुषेषु। यद् भवेज्जिनगृहं जीर्णशीर्णपरिशटितपतितादि ॥ ९० ॥ विघटितसन्धिचयं वा परिक्षीणद्वारदेशपिधानं वा। देशनाप्रवृत्तमुनिजनमुखात् तमथवा लोकात् ॥ ९१ ॥ श्रुत्वा किमपि कुत्रापि वा दृष्ट्वा स्वयं श्रावको विचिन्तेत्। अनुरक्तास्थिमज्जो जिनशासनभक्तिरागेण ॥ ९२ ॥ केनापि पुण्यनिधिनेतिरूपजिनालयं कुर्वाणेन परिपुंज्य धारितो निजयशःप्रसरोऽहं मन्ये ॥९३॥ किन्तु इति निविडघटनेऽपि अहह कालेन विहितमिह क्षूणम्। अथवा विनश्वरा एव सर्वे पदार्थां भवसमुत्थाः ॥ ९४ ॥

ता अहमहुणा भंजेमि एयक्खणं तहा कए य इमं । भवगत्तंतो णिवडियजणहत्थालंबणं होही ॥९५॥ इति चिंतिऊण जइ तं सत्तो सयमेव सुंदरं काउं । ता एक्कोचिय कुणई सक्को काउं अह न एको ता ॥ ९६ ॥ अन्नेसिं पि हु सावगाणा जाणाविउं तमत्थंतो । तव्विसयमब्भुवगमं–कारावेज्जा भणिइकुसलो ॥ ९७ ॥ अह जह सो तह ते वि हु असमत्था तत्थ पत्थुए अत्थे । अन्नो वि नत्थि तक्कज्जकारओ को वि जइ ताहे ॥ ९८ ॥ इह अंतरम्मि साहारणस्स दव्वस्स होति तं विसओ । नहु साहारणदव्वं वएज्ज धीमं जह कहंपि ॥ ९९ ॥ सीयंतजिणगिहाइवि नो वहेज्जा अओ उ अन्नत्तो । दव्वाभावे साहारणंपि विव्वेज्जसु तहाहि ॥२८००॥ जिन्नं नवी करेज्जा सिन्नं पुण संठवेज्ज ल्हसियं च । पुणरवि च पधरेज्जा सडियं च पुणो वि संधेज्जा ॥ १ ॥

---

तदहमधुना भञ्जयाम्येतत्क्षणं तथा कृते चेदम् । भवगर्त्तान्तर्निपतितजनहस्तावलम्बनं भविष्यामि ॥ ९५ ॥ इति चिन्तायित्वा यदि तं शक्तः स्वयमेव सुन्दरं कर्त्तुम् । तदा एक एव करोति शक्तः कर्त्तुमथ नैकस्तदा ॥ ९६ ॥ अन्येषामपि हि श्रावकाणां ज्ञापयित्वा तमर्थं ततः । तद्विषयाभ्युपगमं कारयति भणितिकुशलः ॥ ९७ ॥ अथ यथा स तथा तेऽपि ह्यसमर्थास्तत्र प्रस्तुतेऽर्थे । अन्योऽपि नास्ति तत्कार्यकारको यदि कोऽपि तदानीम् ॥ ९८ ॥ अस्मिन्नन्तरे साधारणस्य द्रव्यस्य भवति तद्विषयः । नहि साधारणद्रव्यं व्ययेत धीमान् यथा कथमपि ॥ ९९ ॥ सीदज्जिनगृहाण्यपि नोपहेयादस्तु अन्यतः । द्रव्याभावे साधारणमपि विव्ययेस्तथाहि ॥ २८०० ॥ जीर्णं नवीकुर्यात् शीर्णं पुनः संस्थापयेत् स्रस्तं च । पुनरपि च प्रधारयेत् शटितं च पुनरपि सन्धयति ॥ १ ॥

पडियं समुद्धरेज्जा लिंपावेज्जा य विगयलेवं च। विगयत्थुहं च त्थुहावेज्ज देज्ज पिहणं च अपिहाणे ॥ २ ॥ तह कलसामलसारगपट्टत्थंभाईयं तदंगं च। सडियपडियं तहा पडियखंडिच्छिदं च पायारं ॥ ३ ॥ एमाईयं अन्नंपि तग्गयं परिविसंठुलं दट्ठुं। सम्मं समारएज्जा सव्वं सव्वप्पयत्तेण ॥ ४ ॥ साहारणदव्वेण वि तं जिणगिहमुद्धरावियं संतं। गुणरागिपेच्छगाणं होति धुवं बोहिलाभकए ॥ ५ ॥ पुढवाइयाण जइ वि हु होति विणासो जिणिंदगिहकरणे। तव्विसया तह वि सुदिट्ठिणोत्थि नियमेण अणुकंपा ॥ ६ ॥ एयहिंतो वुद्धा विरया रक्खंति जेण पुढवाई। तत्तो निव्वाणगया अबाहगा आभवमिमाणं ॥ ७ ॥ रोगिसिराविहाईसु वेज्जकिरिया व सुप्पउत्ताओ। परिणामसुंदरच्चिय चेट्ठा संवाहजोगे वि ॥ ८ ॥

---

पतितं समुद्धरेल्लिम्पयेच्च विगतलेपं वा। विगतस्थूपं च स्थूपयेद् दद्यात् पिधानं चापिधाने ॥ २ ॥ तथा कलशामलसारकपट्टस्तम्भादिकं तदङ्गं च। शटितपतितं तथा पतितखण्डितछिद्रं च प्राकारम् ॥ ३ ॥ एवमादिकमन्यदपि तद्गतं परिविसंस्थूलं दृष्ट्वा। सम्यक् समारचेत् सर्वं सर्वप्रयत्नेन ॥ ४ ॥ साधारणद्रव्येणापि तज्जिनगृहमुद्धारितं सत्। गुणरागिप्रेक्षकाणां भवति ध्रुवं बोधिलाभाय ॥ ५ ॥ पृथ्व्यादिकानां यद्यपि हि भवति विनाशो जिनेन्द्रगृहकरणे। तद्विषया तथापि सुदृष्टेरस्ति नियमेनानुकंपा ॥ ६ ॥ एतेभ्यो बुद्धा विरता रक्षन्ति येन पृथिव्यादीन्। ततो निर्वाणगता अबाधका आभवममीषाम् ॥ ७ ॥ रोगिशिरआवेधादिषु वैद्यक्रियाश्चसुप्रयुक्ताः। परिणामसुन्दरा एव चेष्टाःसंबाधयोगेऽपि ॥ ८ ॥

इय जिणभवणद्दारं भणियं जिणबिंबदारमह भणिमो । तत्थ पुराइसु सव्वंग-संगयं अत्थि जिणभवणं ॥ ९ ॥ किंतु न तत्थत्थिजिणिंद-बिंबमंतो जओ उ केणावि । तमवहरियं व होज्जा भग्गं व वितुंगियं च तओ ॥ १० ॥ पुव्वुत्तविहाणेणं साहारणदव्वमवि समादाय । नियसामत्थाभावे सम्मं कारेज्ज जिणबिंबं ॥११॥ कारित्ता जिणबिंबं निरुवमरूवं ससिं व सोमं च । पुव्वुत्तजिणगिहे तं उचियविहीए पइट्ठेज्जा ॥ १२ ॥ तं च गुणरागिणो केइ पेच्छिउं उच्छलंतरोमंच । बोहिं लभिज्ज अन्ने जिणदिक्खं तंमि चेव भवे ॥ १३ ॥ जइ पुण-अणज्जजणसंगएसु खिज्जंतवत्थुपुरिसेसु । पचंतदेसवत्तिसु सावगजणवज्जिएसुं च ॥ १४ ॥ गामनगरागराइसु जिणभवणं होज्ज नवरि जज्जरयं । जिणबिंबं पुण सव्वंगसुंदरं दरिसणीयं च ॥ १५ ॥

---

इति जिनभवनद्वार भणितं जिनबिम्बद्वारमथ भणामः । तत्र पुरादिषु सर्वाङ्गसंगतमस्ति जिनभवनम् ॥ ९ ॥ किन्तु न तत्रास्ति जिनेन्द्रबिम्बमन्तर्यतस्तु केनापि । तदवहृतं वा भवेद् भग्नं वा विलुंपितं वा ततः ॥१०॥ पूर्वोक्तविधानेन साधारणद्रव्यमपि समादाय । निजसामर्थ्याभावे सम्यक् कुर्याज्जिनबिम्बम् ॥ ११ ॥ कारयित्वा जिनबिम्बं निरूपमरूपं शशिमिव सौम्यं च । पूर्वोक्तजिनगृहे तमुचित विधिना प्रतिष्ठापयेत् ॥ १२ ॥ तंच गुणरागिणः केऽपि दृष्ट्वोच्छलद्रोमाञ्चाः । बोधिं लभेरन्नन्ये जिनदीक्षां तस्मिंश्चैव भवे ॥ १३ ॥ यदि पुनरनार्यजनसंगतेषु खिद्यद्वास्तुपुरुषेषु । प्रत्यन्तदेशवर्त्तिषु श्रावकजनवर्जितेषु च ॥ १४ ॥ ग्रामनगराकरादिषु जिनभवनं भवेन्नवरं जर्जरकम् । जिनबिम्बं पुनः सर्वाङ्गसुन्दरं दर्शनीयं च ॥ १५ ॥

तत्थ अणारियजणकीर–माणआसायणाइदोसभया। तत्तो जिणालयाओ तहट्ठियओ विकड्ढित्ता ॥ १६ ॥ साहा-जिणबिंबं अन्नंमि वि संचारेज्जा पुराइए उचिए। अन्नत्तो संचारण—सामग्गीए पुण अभावे ॥ १७ ॥ साहारणदव्वाओ तस्सामग्गिं करेज्ज जहजोगं। एवं च कए के के न बोहिबीयाइणो सुगुणा ॥ १८ ॥ इय जिणबिंबदारं भणियं जिणपूयदारमह भणिमो। तत्थ सुचरियजणड्ढत्त–पमुह–गुणजुत्तखेत्तेसु ॥ १९ ॥ अणहं जिणिंदभवणं अणहं जिणबिंबमवि परं किंतु। न कुओवि पत्तियामेत्तमवि तहिं किंपि पूयंगं ॥ २० ॥ होइत्ति सयं दट्ठुं पुव्वुत्तविहीए अहव सोऊणं। तो मेलिय सव्वे वि हु तप्पुरगामाइमयहरगे ॥ २१ ॥ साहू व सावगो वा सुनिउणवयणेहिं पन्नवेज्ज जहा। इह तुम्हे चेव परं एक्के धन्ना न अन्ने उ ॥ २२ ॥

---

तत्रानार्यजनक्रियमाणाशातनादिदोषभयात्। ततो जिनालयतस्तथास्थिततो विकृष्य ॥ १६ ॥ जिनबिम्बमन्यस्मिन्नपि संचारयेत् पुरादिक उचिते। अन्यतः संचारण सामग्र्याः पुनरभावे ॥ १७ ॥ साधारण द्रव्यात् तत्सामग्रीं कुर्याद् यथायोग्याम्। एवं च कृते के के न वोधिवीजादयः सुगुणाः ॥ १८ ॥ इति जिनविम्बद्वारं भणितं जिनपूजाद्वारमथ भणामः। तत्र सुचरित्रजनाढ्यत्वप्रमुखगुणयुक्तक्षेत्रेषु ॥ १९ ॥ अनघं जिनेन्द्रभवनमनघं जिनविम्बमपि परं किन्तु। न कुतोऽपि पात्रिकामात्रमपि तत्र किमपि पूजाङ्गम् ॥ २० ॥ भवतीति स्वयं दृष्ट्वा पूर्वोक्तविधिनाथवा श्रुत्वा। ततो मेलित्वा सर्वानपि हि तत्पुरग्रामादिमदभरकान् ॥ २१ ॥ साधुर्वा श्रावको वा सुनिपुणवचनैः प्रज्ञापयेद्यथा। इह यूयं चैव परमेके धन्या नान्ये तु ॥ २२ ॥

जाण किर सन्निवेसे इय रूवाइं विचित्तभत्तीणि । दीसंति कित्तणाइं मणोहराइं तहन्नं च ॥ २३ ॥ सव्वे वि पूयणिज्जा सम्मं सव्वे वि वंदणिज्जा य । सव्वे वि अच्चणिज्जा तुम्हाणं देवसंघाया ॥ २४ ॥ तह कीस इह न संपइ पूया जुत्तं न चेव तुम्हाणं । पूयंतरालकरणं देवाणेमाइएहिं च ॥ २५ ॥ वयणेहिं ते सम्मं उवरोहेज्जा अणिच्छमाणेसु । अन्नत्तो पूयासंभवे य साहारणंपि धणं ॥ २६ ॥ दाउं तत्थावासिय–मालागाराइलोयहत्थेण । पूयं धूवं दीवं च संखसद्दं च कारेज्जा ॥ २७ ॥ एवं च कए ठाणाणुरागकारीण भवसत्ताण । कप्पदुमोव्व उत्तो नूणं गेहंगणे चेव ॥ २८ ॥ दट्ठुं पूयाइसयं परमगुरूणं जिणाण बिंबेसु । बंधंते बोहिवीयं जीवा संजायबहुमाणा ॥ २९ ॥ एवं पूयादारं सम्मं संखेवओ समक्खायं । वोच्छं गुरूवएसा पोत्थयदारंपि अह तत्थ ॥ ३० ॥

---

येषां किल संनिवेशे इति रूपाणि विचित्रभाञ्जि । दृश्यन्ते केतनानि मनोहराणि तथान्यच्च ॥ २३ ॥ सर्वेऽपि पूजनीयाः सम्यक् सर्वेऽपि वन्दनीयाश्च । सर्वेऽप्यर्चनीया युष्माकं देव संघाताः ॥ २४ ॥ तथा कस्मादिह न संप्रति पूजा युक्तं न चैव युष्माकम् । पूजान्तरायकरणं देवानामेवमादिकैः ॥ २५ ॥ वचनैस्तान् सम्यगुपरोधयेदनिच्छमानेषु । अन्यतः पूजासंभवे च साधारणमपि धनम् ॥२६॥ दत्वा तत्रावासितमालाकारादिलोकहस्तेन । पूजां धूपं दीपं च शंखशब्दं च कारयेत् ॥२७॥ एवं च कृते स्थानानुरागकारिणां भव्यसत्त्वानाम् । कल्पद्रुम इवोप्तो नूनं गृहाङ्गणे चैव ॥ २८ ॥ दृष्ट्वा पूजातिशयं परमगुरूणां जिनानां बिम्बेषु । बध्नन्ति बोधिबीजं जीवाः संजातबहुमानाः ॥ २९ ॥ एवं पूजाद्वारं संक्षेपतः सम्यक् समाख्यातम् ३ । वक्ष्ये गुरूपदेशात् पुस्तकद्वारमप्यथ तत्र ॥ ३० ॥

अंगोवंगनिवद्धं अणुओगचउक्क उवओगिं वा । जोणीपाहुडजोइस–निमित्तगब्भत्थसंवरं वा ॥ ३१ ॥ जं सत्थं जिणपवयण–परमुन्नइकारणं महत्थं च । वोच्छिज्जंतं दिट्ठं सुयं च तं जइ लिहावेउं ॥ ३२ ॥ सयमसमत्थो अन्नो य नत्थि जइ तल्लिहावगो कोइ । ता साहारणदव्वेण तं लिहावेज्जा वुड्ढिकए ॥ ३३ ॥ तिसरं चउस्सरं वहुस्सरं च विहिणा लिहाविऊणं च । तप्पोत्थयाइं सुवियड्ढ–संघट्ठाणेसु ट्ठावेज्जा ॥ ३४ ॥ जे गहणधारणाए पडुया ओयस्सिणो वईकुसला । पइभाइगुणसमेया ताण समप्पेज्ज विहिपुव्वं ॥ ३५ ॥ आहारवसहिवत्थाइएहिं काऊणुवग्गहं ताण । सासणवन्ननिमित्तं कुज्जा तव्वायणाविहिं च ॥ ३६ ॥ अद्धरिसणीयमन्नेसिं सासणं कयमिणं कुणंतेणं । थिरया नवधम्माणं चरणगुणाणं विसुद्धी य ॥ ३७ ॥

---

अङ्गोपाङ्गनिवद्धमनुयोगचतुःकृतोपयोगिर्वा । योनिप्राभृतज्योतिर्निमित्तगर्भार्थसंवरं वा ॥ ३१ ॥ यच्छास्त्रं जिनप्रवचनपरमोन्नतिकारणं महार्थं च । व्युच्छिद्यमानं दृष्टं श्रुतं वा तं यदि लेखयितुम् ॥ ३२ ॥ स्वयमसमर्थोऽन्यश्च नास्ति यदि तल्लेखकः कोऽपि । तदा साधारणद्रव्येण तल्लेखयेद् वृद्धिकृते ॥ ३३ ॥ त्रिवारं वा चतुर्वार वा विधिना लेखयित्वा च । तत्पुस्तकानि सुविदग्धसंघस्थानेषु स्थापयेत् ॥ ३४ ॥ ये ग्रहणधारणायां पटव ओजस्विनो वृत्तिकुशलाः । प्रतिभादिगुणसमेतास्तेषां समर्पयेद् विधिपूर्वम् ॥ ३५ ॥ आहार वस्तिवस्त्रादिकैः कृत्वोपग्रहं तेषाम् । शासनवर्णनिमित्तं कुर्यात् तद्वाचनविधिं च ॥ ३६ ॥ अद्धरसणीयमन्येषां शासनं कृतमिदं कुर्वाणेन । स्थिरता नवधर्म्माणां चरणगुणानां विशुद्धिश्च ॥ ३७ ॥

अव्वोच्छित्ती जिणसासणस्स भव्वाणुकंपणं अभयं । सत्ताण य ता एत्थं पयट्टियव्वं जहा सत्तिं ॥ ३८॥ पोत्थयदारं भणिऊण भन्नई साहुदारमह तत्थ । वत्थासणपत्तोसह–भेसज्जाई समत्थंपि ॥३९॥ फासुयमकयमकारियमणणुमयं कोडिनवगपरिसुद्धं । उस्सग्गेणं मुणिपुंगवाण संजमकए देज्जा ॥ ४० ॥ संजमपोसकए च्चिय जइ जइदाणं कहं तयट्ठाउ । एमेव पुढविकायाइ हिंसणं होति जुत्तंति ॥ ४१ ॥ संथरणंमि असुद्धं दोण्हवि गिण्हंतदिंतयाणहियं । आउर दिट्ठंतेणं तं चेव हियं असंथरणे ॥ ४२ ॥ चोरहरिउवहित्तं गाढगिलाणत्तमोमयत्तित्तं । एमाई अन्नं पि हु अववायपयं पडुच्च पुणो ॥ ४३ ॥ वत्थासणाइयाणं ओसहभेसज्जमाइयाणं च । जइ सव्वोवाएहिं अहागडाणं न संपत्ती ॥ ४४ ॥

---

अव्युच्छित्तिर्जिनशासनस्य भव्यानामनुकम्पनमभयम् । सत्त्वानां च तदत्र प्रवर्त्तितव्यं यथाशक्ति ॥ ३८ ॥ पुस्तकद्वारं भणित्वा भण्यते साधुद्वारमथ तत्र । वस्त्रासनपात्रौपधभैषज्यादिसमस्तमपि ॥ ३९ ॥ प्रासुकमकृतमकारितमननुमतं कोटिनवपरिशुद्धम् । उत्सर्गेण मुनिपुंगवानां संयमकृते दद्यात् ॥ ४० ॥ संयमपोषकृते एव यदि यतिदानं कथं तदर्थं तु । एवमेव पृथिवीकायादि हिंसनं भवति युक्तमिति ॥ ४१ ॥ संस्तरणेऽशुद्धं द्वयोरपि गृण्हद्ददतोरहितम् । आतुरदृष्टान्तेन तच्चैव हितमसंस्तरणे ॥ ४२ ॥ चोरहृतोपधित्वं गाढग्लानत्वमूनवृत्तित्वम् । एवमादि अन्यदपि ह्यपवादपदमाश्रित्य पुनः ॥ ४३ ॥ वस्त्रासनादिकानामोषधभैषज्यादिकानां च । यदि सर्वोपायैर्यथाकृतानां न संप्राप्तिः ॥ ४४ ॥

तो कीयगडाईणि वि संपाडेज्जा हु सपरसामत्था। अह अन्नत्तो तस्सत्ति संभवो नेव से अत्थि ॥ ४५ ॥ संपाडेज्जा इय अंतरम्मि साहारणेण सो सम्मं। साहू वि ताणि गिण्हति छड्डणचित्तो अवन्नाए ॥ ४६ ॥ जं उस्सग्गनिसिद्धाइं जाइं दव्वाणि संथरे मुणिणो। कारणजाए जाए सव्वाणि वि ताणि कप्पंति ॥ ४७ ॥ चोयग आह–जं चिय पए निसिद्धं तं चिय जइ कप्पई पुणो तस्स। एवं होइ अणवत्था नय तित्थं नेय सच्चं य ॥ ४८ ॥ उम्मत्तवायसरिसं खु दंसणं न चिय कप्पकप्पं तु। अह ते एवं सिद्धी न होज्ज सिद्धी उ कस्सेवं ॥ ४९ ॥ आयरिय आह–नवि किंचि अणुन्नायं पडिसिद्धं वावि जिणवरिंदेहिं। एसा हु तेसिमाणा कज्जे सव्वेण होयव्वं ॥ ५० ॥

---

ततः क्रीतकृतादीन्यपि संपादयेद्धि स्वपरसामर्थ्यात्। अथान्यतस्तच्छक्तिसंभवो नैव तस्यास्ति ॥ ४५ ॥ संपादयेदित्यन्तरे साधारणेन स सम्यक्। साधुरपि तानि गृण्हाति छड्डनचित्त अवज्ञया ॥ ४६ ॥ यदुत्सर्गे निषिद्धानि यानि द्रव्याणि संस्तरे मुनीनाम्। कारणजाते जाते सर्वाण्यपि तानि कल्पन्ते ॥ ४७ ॥ चोदक आह ॥ यदेव पदे निषिद्धं तदेव यदि कल्पते पुन स्तस्य। एवं भवत्यनवस्था न च तीर्थं नैव सत्यं च ॥ ४८ ॥ उन्मत्तवादसदृशं खलु दर्शनं नैवाकल्प्यकल्प्यं तु। अथ ते एवं सिद्धिर्न भवेत् सिद्धिस्तु कस्यैवम् ॥ ४९ ॥ आचार्य आह। नापि किंचिदनुज्ञातं प्रतिषिद्धं वापि जिनवरेन्द्रैः। एषा हि तेषामाज्ञा कार्ये सर्वेण भवितव्यम् ॥ ५० ॥

किं च–दोसा जेण निरूभंति जेण खिज्जंति पुव्वकम्माइं । सो सो मोक्खोवाओ रोगावत्थासु समणं व ॥ ५१ ॥ उज्जुयमग्गुस्सग्गो अववाओ तस्स चेव पडिवक्खो । उस्सग्ग विणिवइयं धरेइ सालंवमववाओ ॥ ५२ ॥ धावंतो उच्चाउ मग्गन्नू किं न गच्छति कमेण । किं वा मउई किरिया न कीरई असहओ तिक्खं ॥ ५३ ॥ उन्नयमवेक्खनिन्नस्स पसिद्धी उन्नयस्स निन्नाओ । इय अन्नोन्नपसिद्धा उस्सग्गववाय दो तुल्ला ॥ ५४ ॥ जावईया उस्सग्गा तावइया चेव होंति अववाया । जावईया अववाया उस्सग्गा तत्तिया चेव ॥ ५५ ॥ सट्ठाणे सट्ठाणे सेया वलिणो य होंति खलु । एए सट्ठाणपरट्ठाणा य होंति वत्थू उ निप्फन्ना ॥ ५६ ॥ संथरओ सट्ठाणं उस्सग्गो अ साहुणो परट्ठाणं । इय सट्ठाणपरं वा न होति वत्थूं विणा किंचि ॥ ५७ ॥

---

किञ्च दोषा येन निरुन्धन्ते येन क्षीयन्ते पूर्वकर्माणि । स स मोक्षोपायो रोगावस्थासु शमनमिव ॥ ५१ ॥ ऋजुमार्ग उत्सर्गोऽपवादस्तस्य चैव प्रतिपक्ष[२] । उत्सर्गाद् विनिपतितं धारयति सालंबमपवादः ॥ ५२ ॥ धावन्नुचान्मार्गज्ञः किं न गच्छति क्रमेण । किं वा मृदुकी क्रिया न करोत्यसहितस्तीक्ष्णाम् ॥ ५३ ॥ उन्नतमपेक्ष्य निम्नस्य प्रसिद्धिरुन्नतस्य निम्नात् । इत्यन्योन्यप्रसिद्धौ उत्सर्गापवादौ द्वौ तुल्यौ ॥ ५४ ॥ यावन्त उत्सर्गा स्तावन्तश्चैव भवन्त्यपवादाः । यावन्तोऽपवादा उत्सर्गा स्तावन्तश्चैव ॥ ५५ ॥ स्वस्थाने स्वस्थाने श्रेयांसौ बलिनौ च भवतः खलु । एतौ स्वस्थानपरस्थानाश्च भवन्ति वस्तूनि तु निष्पन्नाः ॥ ५६ ॥ संस्तरकः स्वस्थानमुत्सर्गश्च साधूनां परस्थानम् । इति स्वस्थानपरं वा न भवति वस्तु विना किंचित् ॥ ५७ ॥

अववाओ वि ठियस्स हु गीयस्स य पुट्ठकारणे नेओ । अलमइपसंगभणणेण पत्थुयं चेव अह भणिमो ॥ ५८ ॥ सुद्धवसणाइ लाभे चएज्ज साहू असुद्धए विहिणा । पट्ठुयत्ते आलोयइ असुद्धमन्नाइजं भुत्तं ॥ ५९ ॥ इय जह साहुदारं समणी दारं पि तह वियाणेज्जा । नवरं इत्थित्ता तासिमवायाण बहुलत्तं ॥ ६० ॥ परिपिकसाउफलभरवदरिसमा उ हवंति अज्जाओ । गुत्तिवइ परिगयाओ वि सत्तगम्माउ पयाइए ॥ ६१ ॥ ता ताण परमजत्तेण सव्वओ निच्चरक्खणीयाण । जइ पच्चणीयदुस्सीललोयवसओ भवेणत्थो ॥ ६२ ॥ ता साहारणदव्वप्पयाणविहिणा वि सयमसामत्थे । कुज्जा संजम पच्चूह—कारिविद्धंसणं सम्मं ॥ ६३ ॥ भणियं समणीदारं सावगदारं भणमि तहियं च । धम्माणुरत्तचित्तो धम्माणुट्ठाणनिरओ य ॥ ६४ ॥

---

अपवादोऽपि स्थितस्यहु गीतार्थस्य च पुष्टकारणे ज्ञेयः। अलमतिप्रसङ्गभणनेन प्रस्तुतं चैवाथ भणामः ॥५८॥ शुद्धवसनादि लाभे त्यजेत् साधुरशुद्धकान् विधिना । पटुकत्वे आलोचयत्यशुद्धमन्नादि यद् भुक्तम् ॥ ५९ ॥ इति यथा साधुद्वारं श्रमणी द्वारमपि तथा विजानीयात् । नवरं स्त्रीत्वात्तासामपवादानां बाहुलत्वम् ॥ ६० ॥ परिपकस्वादुफलभारवदरिसमास्तु भवन्त्यार्यिकाः । गुप्तिवृतिपरिगता अपि सत्त्वगमास्तु प्रकृत्या ॥ ६१ ॥ तत्तासां परमयत्नेन सर्वतो नित्यं रक्षणीयानाम् । यदि प्रत्यनीकदुःशीललोकवशतो भवेदनर्थः ॥ ६२ ॥ तदा साधारणद्रव्य प्रदानविधिनापि स्वयमसामर्थ्ये । कुर्यात् संयमप्रत्यूहकारि विध्वंसनं सम्यक् ॥ ६३ ॥ भणितं श्रमणी द्वारं श्रावकद्वारं भणामि तत्रत्य च । धर्मानुरक्तचित्तो धर्मानुष्ठाननिरतश्च ॥ ६४ ॥

जइ कहवि गुणपहाणो सुसावओ वित्तिदुबलो होति। अत्थि य वणिक्कला से दविणविणासी य जइ नो सो ॥ ६५ ॥ ताहे साहारणदव्वओ वि काऊणं कंपिहु ववत्थं। ववहारनिमित्तं तस्स मूलरासिं समप्पेज्जा ॥ ६६ ॥ अह निविन्नाणो तह वि अद्धपायाइ देज्ज से अहवा। जइ नो वसणोवहओ न कलहणो नेय पिसुणो य ॥६७॥ करकच्छाइसु सुद्धो पवन्नदक्खिन्नविणयसारो य। ततो कम्मकरंतर–ठाणे सच्चिय धरेयव्वो ॥ ६८ ॥ समधम्मवत्तिणो विहु तव्विवरीयस्स धारणे नियमा। संभवइ अप्पणो पवयणस्स खिंसापयं लोए ॥ ६९ ॥ एवं सावगदारं व साविगादारमवि वियाणेज्जा। सविसेसमहविहेया तच्चिंता अज्झियाणं व ॥७०॥ एवं च कुणंतेणं तेणं जिणसासणस्स वीरेणं। अव्वोच्छित्तिनिमित्तं परमपयत्तो कओ होति ॥ ७१ ॥

---

यदि कथमपि गुणप्रधानः सुश्रावकः वृत्तिदुर्बलो भवति। अस्ति च वणिक्कला तस्य द्रविणविनाशी च यदि न सः ॥ ६५ ॥ तदा साधारणद्रव्यतोऽपि कृत्वा कामपि हि व्यवस्थाम् । व्यवहारनिमित्तं तस्य मूलराशिं समर्पयेत् ॥ ६६ ॥ अथ निर्विज्ञान स्तथाप्यर्धपादादि देयं तस्याथवा। यदि न व्यसनोपहतो न कलही नैव पिशुनश्च ॥ ६७ ॥ करकक्षादिषु शुद्धः प्रपन्नदाक्षिण्यविनयसारश्च । ततः कर्मकरान्तरस्थाने स एव धर्त्तव्यः ॥ ६८ ॥ समधर्मवर्त्तिनोऽपि हि तद्विपरीतस्य धारणे नियमात् । संभवत्यात्मनः प्रवचनस्य निन्दापदं लोके ॥ ६९ ॥ एवं श्रावकद्वारमिव श्राविकाद्वारमपि जानीयात् । सविशेषमथविधेया तच्चिन्ताऽऽर्य्यकाणामिव ॥ ७० ॥ एवं च कुर्वता तेन जिनशासनस्य वीरेण। अव्युच्छित्तिनिमित्तं परमप्रयत्नः कृतो भवति ॥ ७१ ॥

अहवा, एवं विहिए विहियं सम्मत्ताइगुणपक्खवाइत्तं । सव्वन्नुसासणंपि य पभावियं होति तेणेव ॥ ७२ ॥ अविभाविय सयरजणो अणविक्खियसरिसजाइउवयारो । सहधम्मयरा मह बंधवत्ति निच्चं विचिंतितो ॥ ७३ ॥ साहम्मियाण सड्ढो करेइ संसुमरणं पगरणेसु । संभासणं च दिट्ठाण पूयणं पूगमाईहिं ॥७४॥ पडियरणं रोगाइसु विस्सामणमद्धगमणखिन्नाणं । ताण सुहेण सुहित्तं तग्गुणउब्भावणं चेव ॥ ७५ ॥ अवराहगोवणं जोयणं च बहुगुणअवंसलाभम्मि । ववहारे सीयंताण सारणं धम्मकिच्चेसु ॥ ७६ ॥ दोसाण सेवणे वारणं तहा चोयणं सुमहुरेहिं । वयणेहिं तेहिं परुसेहिं चेव पडिचोयणं बहुसो ॥ ७७ ॥ सइ सामत्थे उवथंभकरणमह वित्तिदुब्बलाणं च । पडियारकरणमच्चंतवसणगत्तानिवडियाणं ॥ ७८ ॥

---

अथवा एवं विधिना विहितं सम्यक्त्वादिगुणपक्षपातित्वम् । सर्वज्ञशासनमपि च प्रभावितं भवति तेनैव ॥ ७२ ॥ अविभावित स्वपरजनोऽनपेक्षित सदृशजात्युपकारः । सहधर्मचरा मम बान्धवा इति नित्यं विचिन्तन् ॥ ७३ ॥ साधर्म्मिकाणां श्राद्धः करोति संस्मरणं प्रकरणेषु । संभाषणं च दृष्टानां पूजनं पुंगी फलादिभिः ॥ ७४ ॥ प्रतिचरणं रोगादिषु विश्रामणमध्वगमनखिन्नानाम् । तेषां सुखेन सुखित्वं तद्गुणोद्भावनं चैव ॥ ७५ ॥ अपराध गोपनं योजनं च बहुगुणावंध्यलाभे । व्यवहारे सीदतां स्मारणं धर्मकृत्येषु ॥ ७६ ॥ दोषाणां सेवने वारणं तथा चोदनं सुमधुरैः । वचनैस्तैश्चैव कठोर वचनैः प्रतिचोदनं बहुशः ॥ ७७ ॥ सतिसामर्थ्ये उपष्टम्भकरणमथ वृत्तिदुर्लभानां च, प्रतिकारकरणमत्यन्त व्यसनगर्त्तनिपतितानाम् ॥ ७८ ॥

नीसेसधम्मकज्जुज्जयाण साहेज्जकरणमणवरयं । दंसणनाणचरित्ते ठियाण सम्मं थिरीकरणं ॥ ७९ ॥ इय बहुविहप्पगारं साहम्मियवच्छलत्तणं नियमा । कुणमाणो सड्ढो तित्थबुड्ढिमणहं जणइ भुवणे ॥ ८० ॥ एवं पसंगपत्तत्थजुत्तमक्खायसाविगादारं । पोसहसालादारं पि संपयं सपवक्खामि ॥ ८१ ॥ सुस्सामिपरिग्गहिएसु तहय सुविसिद्जणसमिद्धेसु । गामनगरागराइसु पोसहसाला सडियपडिया ॥ ८२ ॥ जइ होज्जहोज्ज सड्ढाय तत्थ भवभीरुणो महासत्ता । निच्चंपि छव्विहावस्सयाइसद्धम्मकम्मरया ॥ ८३ ॥ नवरि तहाविहलाभं-तराय-कम्मोदयस्स दोसेण । सव्ववसाया वि हु कट्ठकप्पणा होंति निव्वाहा ॥ ८४ ॥ उद्धरिउमणा वि न चेव सत्तिमं-तातमुद्धरेउं जे । वियलियपक्खा सलहाव अप्पयं दीवए पडियं ॥ ८५ ॥

---

निश्शेषधर्मकार्योद्यतानां साहाय्यकरणमनवरतम् । दर्शनज्ञानचरित्रे स्थितानां सम्यकू स्थिरीकरणम् ॥ ७९ ॥ इति बहुविध प्रकारं साधर्मिकवात्सल्यत्वं नियमात् । कुर्वाणः श्राद्धस्तीर्थे वृद्धिमनघ जनयति भुवने ॥ ८० ॥ एवं प्रसंग प्राप्यार्थ युक्तमाख्याय श्राविका द्वारम् । पौपधशालाद्वारमपि सांप्रतं संप्रवक्ष्ये ॥ ८१ ॥ सुस्वामिपरिगृहीतेषु तथा च सुविशिष्टजनसमृद्धेषु । ग्रामनगराकरादिषु पोपधशालाशटितपतिता ॥ ८२ ॥ यदि भवेद् भवन्ति श्राद्धाश्च तत्र भवभीरवो महासत्त्वाः । नित्यमपि षड्विधावश्यकादि सद्धर्म-कर्मरताः ॥ ८३ ॥ नवरं तथाविधलाभान्तराय कर्मोदयस्य दोपेण । सव्यवसाया अपि हि क्लिष्टकल्पनाद् भवन्ति निर्वाहाः ॥ ८४ ॥ उद्धरितुमनसोऽपि न चैव शक्तिमन्तस्तमुद्धरितुं ये । विगलितपक्षा शलभा इवात्मानं दीपके पतितम् ॥ ८५ ॥

ता सइ सत्तीए सयं अन्नतो देसणं व काऊणं । उभयाभावे साहारणाउ तं उद्धरावेज्जा ॥ ८६ ॥ एवं समुद्धरावियपोसहसालो विहीए सो धन्नो । अन्नेसिं सुपवित्तीनिबंधणं होंति नियमेण ॥ ८७ ॥ दंसाईअगणिंते पोसहसामाइयं पवत्तेउ । संवेगभावियमईकाणज्झयणं करेंते तु ॥ ८८ ॥ दट्ठुण तत्थ सड्ढे केइ निबंधंत्ति बोहिबीयाइं । अन्ने उ लहुयकम्मा एत्तोच्चिय संपवुज्झंति ॥ ८९ ॥ तित्थस्सवन्नवाओ गुणरागीणं तहा पवित्ती य । अव्वोच्छित्ती तित्थे अभयं घोसावियं लोए ॥ ९० ॥ एत्तो जे पडिबुद्धा नियमा निव्वाणभायणं ते उ । ता तक्कयवहणाउ विमोइया होंति जीवा उ ॥ ९१ ॥ जइ वि नियगिहेसु आणंदाईणं पुरिससीहाणं । एक्केक्कगाणुवासगदसापमोक्खेसु सत्थेसु ॥ ९२ ॥

---

तदाऽसत्यां शक्तौ स्वयमन्यतो देशनां वा कृत्वा । उभयाऽभावे साधारणतस्तामुद्धारयेत् ॥ ८६ ॥ एवं समुद्धारितपौषधशालो विधिना-स धन्यः । अन्येषां सुप्रवृत्तिनिबन्धनं भवति नियमेन ॥ ८७ ॥ दंशादीनगणयतः पोषधसामायिके प्रवृत्तान्तु । संवेगभावितमतिकानामध्ययनं कुर्वतस्तु ॥ ८८ ॥ दृष्ट्वा तत्र श्राद्धान् केऽपि निबध्नन्ति बोधिबीजानि । अन्ये तु लघुककर्मणा अत एव संप्रबुध्यन्ते ॥ ८९ ॥ तीर्थस्य वर्णवादो गुणरागिणां तथा प्रवृत्तिश्च । अव्युच्छित्तिस्तीर्थेऽभयं घोषितं लोके ॥ ९० ॥ इतो ये प्रतिबुद्धा नियमान्निर्वाणभाजनं ते तु । तदा तत्कृतवधनाद् विमोचिता भवन्ति जीवास्तु ॥ ९१ ॥ यद्यपि च निजगृहेष्वानन्दादीनां पुरुषसिंहानाम् । एकैककानामुपासकदशाप्रमुखेषु शास्त्रेषु ॥ ९२ ॥

पोसहसालाओ वन्नियाओ न तहावि संभवति दोसो । सुबहूणं साहारणपोसहसालाए भणणे वि ॥ ९३ ॥ जम्हा सुपहूणं मीलगम्मि सविसेसभाविणो सुगुणा । सम्मं अन्नोन्नकया अणुहवसिद्ध चिय तहाहि ॥ ९४ ॥ अन्नोन्नविणयकरणं अन्नोन्नं सारणाइकरणं च । धम्मकहावायण-पुच्छणाइसज्झायकरणं च ॥ ९५ ॥ सज्झायपरिस्संताण तहय विस्सामणाइकरणं च । अन्नोन्नं सुहदुक्खाइ पुच्छणं धम्मबंधूणं ॥ ९६ ॥ सुत्त-त्थतदुभयाणं तुट्टाणं संधणं च अन्नोन्नं । अन्नोन्नं दिट्ठसुयसामायारीए परिकहणं ॥ ९७ ॥ अन्नोन्नसुयत्थाणं विसयविभागम्मि ट्ठावणं सम्मं । कायवं जोगविसए विहिअविहिनिरूवणं च मिहो ॥ ९८ ॥ पुच्छाय एकपो-सह-साला मिलियाणहोंति अन्नोन्नं । सइ निव्वहंतगयर-धम्मक्खणगोयरा तत्तो ॥ ९९ ॥

---

पौपधशाला वर्णिता न तथापि संभवति दोपः । सुबहूनां साधारण पौषधशालाया भणणेऽपि ॥ ९३ ॥ यस्मात् सुबहूनां मेलके सविशेपभाविनो सुगुणाः । सम्यगन्योन्यकृता अनुभवसिद्धा एव तथाहि ॥ ९४ ॥ अन्योन्यविनयकरणमन्योन्यं सारणादिकरणं च । धर्मकथा वाचना पृच्छनादि स्वाध्यायकरणं च ॥ ९५ ॥ स्वाध्यायपरिश्रान्तानां तथा च विश्रामणादि करणं च । अन्योन्यं सुखदुःखादि पृच्छनं धर्मबन्धूनाम् ॥ ९६ ॥ सूत्रार्थ तदुभयानां त्रुटितानां सन्धनं चान्योन्यम् । अन्योन्यं दृष्टश्रुतसमाचार्योः परिकथनम् ॥ ९७ ॥ अन्योन्य श्रुतार्थानां विषयविभागे स्थापनं सम्यक् । कर्त्तव्य योगविषये विधिरविधिर्निरूपणं च मिथः ॥ ९८ ॥ पृच्छा चैकपौपध-शालामिलितानां भवत्यन्योन्यम् । सदानिर्वहन........धर्मख्यानगोचरास्ततः ॥ ९९ ॥

तन्निव्वहणुववूहाइयेरसुच्छाहणं सुयविहीए । इयपेरणीयपेरगभावेण गुणुब्भवो परमो ॥ १०० ॥ एत्तोच्चिय ववहारे वि रायपुत्ताइयाण निद्दिट्ठं । धम्मक्खणस्स करणं पोसहसालाए एक्काए ॥ १ ॥ एवं किर सुबहूण वि सुसावयाणं सुधम्मकरणाय । पोसहसाला एक्का जुत्तत्ति कयं पसंगेण ॥ २ ॥ पोसहसालादारं गुरुवएसेण साहियं एयं । दंसणकज्जदारं दरिसेमी संपयं किंपि ॥ ३ ॥ दंसणकज्जं नेयं संघाइगोयरं जमिह । अवितक्कियं कया वि हु विसेसकिच्चं तहा रूवं ॥ ४ ॥ तं पुण दुविहं इहइं अपसत्थ पसत्थभेयओ जाण । तत्थापसत्थगं तं जं पडणीयाइ दारेण ॥ ५ ॥ तित्थयरभवणपडिमा भवंतभंगाइयाणुवद्दाणं । संघोवद्दवछोभगरूवं पडणीयकयमहवा ॥ ६ ॥

---

तन्निर्वहनमुपबृंहादिकरेषूत्साहनं श्रुतविधौ । इति प्रेरणीयप्रेरक भावेन गुणोद्भवः परमः ॥ १०० ॥ अत एव व्यवहारेऽपि राजपुत्रादिकानां निर्दिष्टम् । धर्माख्यानस्य करणं पौषधशालायामेकस्याम् ॥ १ ॥ एवं किल सुबहूनामपि सुश्रावकाणां सुधर्मकरणाच्च । पौषधशाला एका युक्तेति कृतं प्रसङ्गेन ॥ २ ॥ पोषध शालाद्वारं गुरूपदेशेन कथितमेतत् । दर्शन कार्यद्वारं दर्शयिष्यामि सांप्रतं किंचित् ॥ ३ ॥ दर्शन कार्यं ज्ञेयं चैत्यसंघादिगोचरं यदिह । अवितर्कितं कदापि हि विशेषकृत्यं तथारूपम् ॥ ४ ॥ तत् पुनर्द्विविधमिहाऽप्रशस्तप्रशस्त भेदाज्जानीहि । तत्राप्रशस्तकं तद्यत् प्रत्यनीकादिद्वारेण ॥ ५ ॥ तीर्थंकरभवनप्रतिमा भवान्तभंगादिकानामुपस्थानम् । संघोपद्रवक्षोभकरूपं प्रत्यनीककृतमथवा ॥ ६ ॥

देवा दायाइ करावणाइ विसयं च जं पसत्थं तं । तत्थ दुगे वि हुरायाइदंसणं संभवइ पायं ॥ ७ ॥ तं च न विणोवयारं तदसंपत्ती जयाउ अन्नत्तो। ता साहारणदव्वाओ तं विचिंतेज्ज उचियन्नू ॥ ८ ॥ एवं च कए के के न उभयलोगुब्भवा गुणा तस्स । इह लोयम्मी कित्ती परलोए सुगइगामित्तं ॥ ९ ॥ चेइय कुलगणसंघे आयरियाणं च पवयणसुए । सव्वेसु वि तेण कयं एत्थ जयंतेण जहजोगं ॥ १० ॥ साहारणस्स जम्हा चेइयभवणाइयं चेव । वुत्तं दसगं विसओ ता धन्नाणं खु एत्थ मई ॥ ११ ॥ इह होज्ज कस्स मई ठाणगदसगं इमं नहु कहिंपि । वुत्तं जिणुत्तसुत्ते न परुत्तं पुण पमाणत्ते॥ १२॥ स इमं वत्तव्वो हंत समुद्दियं नो कहिंपि भणियमिणं । भेएणं पुण सुत्ते भणियं । चिय बहुसु ठाणेसु ॥ १३ ॥

---

देवदायादि कारणादि विषयं च यत् प्रशस्तं तत् । तत्र द्वे अपि राजादि दर्शने संभवति प्रायम् ॥ ७ ॥ तच्च न विनोपकारं तद संप्राप्तिर्यदा तु अन्यतः । तदा साधारण द्रव्यात् तं विचिन्ते दुचितज्ञः ॥ ८ ॥ एवं च कृते के के नोभयलोकोद्भवा गुणास्तस्य । इह लोके कीर्त्तिः परलोके सुगतिगामित्वम् ॥ ९ ॥ चैत्यकुलगणसंघे आचार्याणां च प्रवचनश्रुते च । सर्वेषु तेन कृतमत्र यतमानेन यथा योग्यम् ॥ १० ॥ साधारणस्य यस्माचैत्यभवनादिकमिदं चैव । उक्तं दशकं विषयं तद् धन्यानां खलु अत्र मतिः ॥ ११ ॥ अत्र भवेत् कस्यापि मतिः स्थानकदशकमिदं नहि कुत्रापि । उक्त जिनोक्त सूत्रे न परोक्तं पुनः प्रमाणत्वे ॥ १२ ॥ स इदं वक्तव्यो हन्त ? समुद्दितं नो कुत्रापि भणितमिदम् । भेदेन पुनः सूत्रे भणितमेव बहुषु स्थानेषु ॥ १३ ॥

तह साहारणदव्वं पयडं चिय ताय दंसियं सुत्ते । चेइयदव्वं साहारणं च इच्चाइवयणेहिं ॥१४॥ तस्स वि णिओगट्ठाणं पि अत्थओ भणियमेव भवइ धुवं । इह पुणदसहा जिणमंदिराइ रूवेण तं चेव ॥ १५ ॥ विसयविभागेण फुडं निरूवियं भव्वजणहियट्ठाए । आगमविरोहविरहेण कुसलबंधिक्कहेउत्ति ॥१६॥ जिणभवणाइपयाणं एक्केक्कंमि वि कया य पडिवत्ती । पुन्ननिमित्तं जायइ किं पुण ताणं समुदियाणं ॥ १७ ॥ साहारणं च दव्वं आरंभंतस्स तद्दिणाओ वि । जिणभवणप्पमुहेसु जायति सव्वेसु पडिवत्ती ॥ १८ ॥ जं तस्स साणुबंधो पधावई पढममेव समकालं । तव्विसयसव्वदव्वक्खेत्ताइसु चित्तपडिबंधो ॥ १९ ॥ तम्हा नियनियदव्वाओ किंचि विहवाणुसारओ चेव । परिचिन्तिऊण साहारणस्स पारंभगा जे उ ॥ २० ॥

---

तथा साधारणद्रव्यं प्रकटमेव दर्शितं सूत्रे । चैत्यद्रव्यं साधारणं चेत्यादिकवचनैः ॥ १४ ॥ तस्य विनियोगस्थानमपि अर्थतो भणितमेव भवति ध्रुवम् । इह पुनर्दशधा जिनमन्दिरादिरूपेण तच्चैव ॥ १५ ॥ विषय विभागेन स्फुटं निरूपितं भव्यजनहितार्थाय । आगमविरोधविरहेण कुशलबन्धैकहेतुरिति ॥ १६ ॥ जिनभवनादि पदानामेकैकस्मिन्नपि कृता च प्रतिपत्तिः । पुण्यनिमित्तं जायते किं पुन स्तासां समुदितानाम् ॥ १७ ॥ साधारणं च द्रव्यमारम्भमानस्य तद्दिनादपि । जिनभवनप्रमुखेषु जायते सर्वेषु प्रतिपत्तिः ॥ १८ ॥ यत् तस्य सानुबन्धः प्रधावति प्रथममेव समकालम् । तद्विषयसर्वे द्रव्यक्षेत्रादिषु चित्त प्रतिबन्धः ॥ १९ ॥ तस्मान्निजनिज द्रव्यतः किंचिद् विभवानुसाराच्चैव । परिचिंत्य साधारणस्य प्रारम्भका ये तु ॥ २० ॥

जे य अणिंदियविहिणा पइदिणमेयं नयंति परिवुड्ढिं। परिबालयंति जे विय अचलियचित्ता महासत्ता ॥२१॥ जे विय पुव्वुत्तकमेण चेव जुंजंति तं जहा जोगं। तित्थयरनामगोत्तं कम्मं बंधंति ते धीरा ॥ २२ ॥ पइदिण-तव्विसयपवड्ढमाणसविसेसपरिओसा। नारयतिरियगइदुगं ते नूण नरा निरुंभंति ॥ २३ ॥ संपज्जंति कया वि य न बंधगा अयसनीयगोत्ताणं। जायंति य सविसेसं निम्मलसम्मत्तरयणधरा ॥ २४ ॥ थीपुरिसो वा पच्छावि तत्थ रित्थं नियं पयच्छइओ। सो कल्लाण परंपर—मवियप्पं पावए परमं ॥२५॥ इह लोगे चिय जायइ नियजसपब्भार भरियभुवणयलं। पुण्णाणुबंधिसंपयसामी भोइ सुपरिवारो ॥ २६ ॥ जंमंतरम्मि उत्तम देवो तदणंतरं सुकुलउत्तो। तत्तो चरित्तसंपत्ति—भायणं तयणुसिद्धो वि ॥ २७ ॥

---

ये चानिन्दितविधिना प्रतिदिनमिदं नयन्ति परिवृद्धिम्। परिपालयन्ति येऽपिचाचलितचित्ता महासत्त्वाः ॥ २१ ॥ येऽपि च पूर्वोक्त क्रमेण चैव योजयन्ति तद्यथायोग्यम्। तीर्थकरनामगोत्रं कर्मबध्नन्ति ते धीराः ॥ २२ ॥ प्रतिदिनं तद्विषयप्रवर्धमानसविशेषपरितो-पात्। नारकतिर्यग्गतिद्विकं ते नूनं नरा निरुन्धंति ॥२३॥ संपद्यन्ते कदापि च न बन्धका अयशो नीचगोत्राणाम्। जायन्ते च सविशेषं निर्मल सम्यक्त्वरत्नधराः ॥ २४ ॥ स्त्रीपुरुषो वा पश्चादपि तत्र धनं निजं प्रयच्छति यः। सकल्याणपरंपरामविकल्पं प्राप्नोति परमाम् ॥ २५ ॥ इह लोक एव जायते निजयशः प्राग्भारभरितभुवनतलम्। पुण्यानुबन्धि संपत्स्वामी भोगी सुपरिवारः ॥ २६ ॥ जन्मान्तर उत्तमदेवस्तदनन्तरं सुकुलयुक्तः। ततश्चारित्रसंप्राप्तिभाजनं तदनुसिद्धोऽपि ॥ २७ ॥

किंबहुणा भणिएणं जइ ता नहु तब्भवेण से मोक्खो । ता तइयसत्तमेसुं अट्ठमयं पुण न लंघेइ ॥ २८ ॥ जे पुण तम्मूढमणा वामोहेणं कहिंपि केणावि । नियपक्खवायवसगा एक्कंमि चेव जिणभवणे ॥ २९ ॥ जिणबिंबे वा मुणिसाव-गाइए वावि एक्कहिं चेव । न य सव्वजिणगिहाइसु सम्मं पुव्वोदितविहीए ॥ ३० ॥ वच्चंति वंचगा पवयणस्स ते कुगति गामिणो जेण । तारिसपवित्तिओ ते सासणवोच्छेयमिच्छंति ॥ ३१ ॥ भणियमियका-लविगमणपडिदारं सप्पसंगमवि तइयं । वुच्चइ चउत्थमेत्तो पुत्तपडिबोहपडिदारं ॥ ३२ ॥ अह पुव्वपवंचिय-निचकिच्चनिचलनिलीणनियचित्तो । केवइए वि हु काले वोलीणे वाहविरहेण ॥ ३३ ॥ पुत्तपयपरिणइं पेच्छिऊण सविसेसवड्ढि उत्साहो । आराहणाभिलासी सुसावगो जायवेरग्गो ॥ ३४ ॥

---

किं बहुना भणितेन यदि तदा नहि तद्भवेन तस्य मोक्षः । ततस्तृतीयसप्तमयोरष्टमं पुनर्न लंघति ॥ २८ ॥ ये पुनस्तन्मूढमनसो व्यामोहेन कुत्रापि केनापि । निजपक्षपातवशगा एकस्मिंश्चैव जिनभवने ॥ २९ ॥ जिनबिम्बे वा मुनिश्रावकादिके वापि एकस्मिंश्चैव । नच सर्वजिनगृहादिषु सम्यक् पूर्वोदितविधिना ॥ ३० ॥ व्रजन्ति वञ्चकाः प्रवचनस्य ते कुगतिगामिनो येन । तादृश प्रवृत्त्यास्ते शासनव्युच्छेदमिच्छन्ति ॥ ३१ ॥ भणितमिति कालविगमन प्रतिद्वारं स प्रसङ्गमपि तृतीयम् । उच्यते चतुर्थमितः पुत्र प्रतिबोधप्रति द्वारम् ॥ ३२ ॥ अथ पूर्वप्रपञ्जितनित्यकृत्यनिश्चलनिलीननिजचित्तः । कियत्यपि हि काले व्रजति व्याधिविरहेण ॥ ३३ ॥ पुत्रपद परिणतिं प्रेक्ष्य सविशेषवर्धितोत्साहः । आराधनाभिलाषी सुश्रावको जातवैराग्यः ॥ ३४ ॥

निविडपडिबंधबंधुरमणुद्धुरं पुत्तगं समाहूय । भववेरग्गकरीए गिराए एवं पयंपिज्जा ॥ ३५ ॥ वच्छ नियच्छसु पयइए दारुणत्तं भवस्स एयस्स । जम्हा इह दुल्लभं पढमं पि जियाण मणुयत्तं ॥३६॥ मरणस्स संवयारो जम्मो अघंत कट्ठसंट्ठप्पा । संज्झब्भराय व चला य संपया पयइओ चेव ॥ ३७ ॥ भीमा रोग भुयंगा वि चलत्तं नेंति थेवकाले वि । वडविडविवीयतुच्छो सावाओ विय सुहाणुभवो ॥ ३८ ॥ सुरगिरिगरुयाइं आवडंति दुक्खाइं परमतिक्खाइं । अणुपयमणुलग्गाओ वियरंती आवयाओ वि ॥ ३९ ॥ निच्छियभावविओगा सव्वे वि हु लट्ठइट्ठसंजोगा । अप्पज्जंतमणोरह पच्चुही एइ मच्चूवि ॥ ४० ॥ न य लक्खिज्जइ एत्तो मरिऊणं पेच कत्थ गंतव्वं । एवं विहा य दुल्लहा पुणो वि सद्धम्मसामग्गी ॥ ४१ ॥

---

निविडप्रतिबन्धबन्धुरमनुद्धुरं पुत्रं समाहूय । भववैराग्यकरया गिरयैवं प्रजल्पेत ॥ ३५ ॥ वत्स ? पश्य प्रकृत्या दारुणत्वं भवस्यैतस्य । यस्मादिह दुर्लभं प्रथममपि जीवानां मनुजत्वम् ॥ ३६ ॥ मरणस्य संप्रचारो जन्म अत्यन्तकष्ट संस्थाप्यः । सन्ध्याभ्रराग इव चलाश्च संपदः प्रकृत्या चैव ॥ ३७ ॥ भीमा रोग भुंजगा अपि चलत्वं नयन्ति स्तोक कालेऽपि । वटविटपिबीज तुच्छः सापायोऽपि च सुखानुभवः ॥ ३८ ॥ सुरगिरिगुरुकान्यापतन्ति दुःखानि परमतीक्ष्णानि । अनुपदमनुलग्ना अपि चरन्त्यापदोऽपि ॥ ३९ ॥ निश्चितभाविवियोगाः सर्वेऽपि हि लष्टेष्टसयोगाः । अपर्यन्तमनोरथ प्रत्यूह एति मृत्युरपि ॥ ४० ॥ न च लक्ष्यत इतो मृत्वा प्रेत्य कुत्र गन्तव्यम् । एवं विधा च दुर्लभा पुनरपि सद्धर्म सामग्री ॥ ४१ ॥

ता वच्छ न जावज्जवि कवलिज्जइ महजरापिसाईए । तणुपंजरमवलत्तं वचंति न इंदियाइं पि ॥ ४२ ॥ उट्ठाण वलपरक्कम वियलत्तणमवि न जाव आवडति । ताव तुहाणुन्नाए परलोगहियं पवज्जामि ॥ ४३ ॥ अह कन्न-कुहरकडुयं विओगसंसूयगं गिरं सोचा । गिरिगरुयमोग्गरेणाहओ व्व पारुणपडिओ व्व ॥ ४४ ॥ मुच्छा-निमीलियच्छो ताविच्छसरिच्छआणणच्छाओ । उप्पन्नमन्नुखलिरक्खराए वाणीए नियजणागं ॥ ४५ ॥ सोग-विगलंतनेत्तो पुत्तो जंपेज्ज ताय हा कीस । एवमकंडुइमरप्पायं वयणं समुल्लवसि ॥ ४६ ॥ अज्जवि न पत्थुय-त्थस्स कोवि संपज्ज ईह पत्थावो । अज्झवसायाओ इमाओ ताय ता संपयं विरम ॥ ४७ ॥ तो जणगो से जंपेज्ज पुत्त अचंतविणयपडिबंधो । संजायपलियसंगं ममोत्तिमंगं न किं नियसि ॥ ४८ ॥

---

तद् वत्स ? न यावदद्यापि कवल्यते महाजरापिशाच्या । तनुपञ्जरमवलत्वं व्रजतिनेन्द्रियाण्यपि ॥ ४२ ॥ उत्थान बलपराक्रम विकलत्वमपि न यावदापतति । तावत् तवानुज्ञया परलोकहितं प्रपद्ये ॥४३॥ अथ कर्ण कुहरकटुकां वियोगसंसूचिकां गिरां श्रुत्वा । गिरि गुरुमुद्गरेणा हत इव पापाणपतिता इव ॥४४॥ मूर्च्छा निमिलिताक्षस्तापिच्छ सदृक्षाननच्छायः । उत्पन्नमन्युः स्खलिताक्षरया वाण्या निज जनकम् ॥ ४५ ॥ शोक विकलत्वनेत्रः पुत्रो जल्पेत् तात ? हा कस्मात् । एवमकाण्डोद्गुमर प्रायं वचनं समुल्लपसि ॥ ४६ ॥ अद्यापि न प्रस्तुतार्थस्य कोऽपि संपद्यत इह प्रस्तावः । अध्यवसायादस्मात् तात ? तावत् सांप्रतं विरम ॥ ४७ ॥ ततो जनकस्तस्य जल्पेत पुत्र ? अत्यन्त विनय प्रतिवन्धः । संजातपलितसंगं ममोत्तमाङ्गं न किं पश्यसि ॥ ४८ ॥

संचलिय संचयट्ठिं न कायजट्ठिंपि किं पलोएसि । ईसि पयासे वि न किं विचलंतिं दंतपंतिं पि ॥ ४९ ॥ लोयणवलियं नो नयण–जुवलियं किं व पेहसे वच्छ । वलिसंतयं सरीरत्तयंपि निन्नट्ठलावन्नं ॥ ५० ॥ पवरपरक्कमनिव्वत्तणिज्ज कज्जोव जायसंदेहं । देहं बिंबं व रविस्स पच्छिमासाविलंबिस्स ॥ ५१ ॥ पब्भट्ठलट्ठसोहं न वा विभावेसि किं तुमं वच्छ । जेणा कालं जंपसि पत्थावे पत्थुयत्थस्स ॥ ५२ ॥ लद्धूण हि मणुयत्तं जिणधम्मजुयं गिहीणमिणमुचियं । जं अब्भुज्जइ जीविय–मंते अब्भुज्जयं मरणं ॥ ५३ ॥ किञ्च–विहियं निंदियदमणं काऊण मणो निरुंभणं जेण । लद्धंपि माणुसत्तं अहह गयं निप्फलं तस्स ॥ ५४ ॥ ता पुत्त समणुमन्नसु सुपुरिसचारियाणुरूवमहमिन्हिं । मग्गं समणुसरामी अह पुत्तो जंपहे ताय ॥ ५५ ॥

---

संचलित संचयास्थि न काययष्टिमपि किं प्रलोकसि । ईषत् प्रकाशामपि न किं विचलन्तीं दन्तपंक्तिमपि ॥ ४९ ॥ लोकनवलितं न नयनयुगलिकं किं च पश्यसि वत्स ? वलिसंततशरीरत्वमपि निर्नष्टलावण्यम् ॥ ५० ॥ प्रबल पराक्रमनिर्वर्तनीय कार्योपजात संदेहम् । देहं बिम्बमिव रवेः पश्चिमाशावलम्बिनः ॥ ५१ ॥ प्रभ्रष्टलष्टशोभं न वा विभावयसि किं त्वं वत्स ? । येना कालं जल्पसि प्रस्तावे प्रस्तुतार्थस्य ॥ ५२ ॥ लब्ध्वा हि मनुजत्वं जिनधर्मयुतं गृहिणामिद मुचितम् । यदभ्युद्यत जीवितमन्तेऽभ्युद्यतं मरणम् ॥ ५३ ॥ किंच, विहितं नेन्द्रियदमनं कृत्वा मनोनिरोधनं येन । लब्धमपि मानुष्यत्वमहह गतं निष्फलं तस्य ॥ ५४ ॥ तत् पुत्र ? समनुमन्यस्व सुपुरुषचरितानुरूपमहमिदानीम् । मार्गं समनुसरामि अथ पुत्रो जल्पति तात ॥ ५५ ॥

कत्थ इमं तुह तेलोक्क विम्हउप्पायगं तणुसरूवं। कत्थ व तदन्नहाकरण कारणं चिंतियणिणं ते ॥५६॥ तहाहि–कट्ठाणुट्ठाणामिमा सुकोमला तुहतणू कहं सहिही। तिव्वायवं दुमो चिय वि सहइ न उणा कमलमाला ॥ ५७ ॥ जं जत्थ वत्थु जुज्जइ काउं तं तत्थ कुणइ किर विवुहो। किं कुणइ कट्ठकुंडम्मि कोवि बालो वि हव्ववहं ॥५८॥ एवं तुज्झ तणूए मणहर लायन्न कंति कलियाए। होति तवाणुट्ठाणं कीरंतं तणु विणासाय ॥ ५९ ॥ ता ताय निययबलवीरियपुरिसकारपरक्कमे कमसो। सफलत्तं नेऊणं कट्ठाणुट्ठाणमायरसु ॥ ६० ॥ अह ईसिहसणवस-विहट्टमाणलट्ठोट्ठउडदलं किंचि। दीसंतदन्तपंतिं च पुत्तमेवं भणेज्ज पुणो ॥ ६१ ॥ वच्छ ममोवरिगुरुनेह मोहिओ तेणमेवमुल्लवसि। कहमन्नहा विवेए संते एवं हवइ वयणं ॥ ६२ ॥

---

कुत्रेदं तव त्रैलोक्यविस्मयोत्पादकं तनुस्वरूपम्। कुत्र वा तदन्यथा करणकारणं चिन्तनीयमिदं ते ॥ ५६ ॥ तथाहि–कष्टानुष्ठानमियं सुकोमला तवतनुः कथं सहिष्यति। तीव्रातपं द्रुम एवविसहते न पुनः कमलमाला ॥ ५७ ॥ यद्यत्र वस्तु युज्यते कर्तुं त त्तत्र किल करोति विबुधः। किं करोति काष्ठकुण्डे कोऽपि बालोऽपि हव्यवहम् ॥ ५८ ॥ एवं तव तन्वा मनोहर लावण्यकान्ति कलितायाः। भवति तपोनुष्ठानं क्रियमाणं तनु विनाशाय ॥ ५९ ॥ तत् तात ? निजकबलवीर्यपुरुषाकारपराक्रमान् क्रमशः। सफलत्वं नीत्वा कष्टानुष्ठानमाचर ॥ ६० ॥ अथेषद्धसनवशविघट्यमानलष्टोष्ठपुटदलं किंचित्। दृश्यमानदन्तपंक्तिं च पुत्रमेवं भणेत् पुनः ॥ ६१ ॥ वत्स? ममोपरि गुरुस्नेहमोहितस्तेनैवमुल्लपसि। कथमन्यथाविवेके सति एवं भवति वचनम् ॥ ६२ ॥

किं न कयं पुत्त मए मणुस्सजम्मंमि जमुचियं किच्चं। सुविसिट्ठलोयहियस्स तुट्ठियस्स तुट्ठिजणयं सइ ॥६३॥
तहाहि–अणुरूवट्ठाणवयणा नीया लच्छी सलाहणिज्जत्तं । आरोविय भार क्खम–खंधोय सुओ तुमं जणिओ
॥ ६४ ॥ नियवंसपसूयाणं चिरपुरिसाणं कमोय अणुसरिओ । इय कयकिच्चो संपइ परलोयहियं करिस्सामि
॥ ६५ ॥ जं पुण बलविरियपरक्कमाण सहलत्तणाइयं तुमए । पुव्विं ममोवइट्ठं तंपि न जुत्तं जओ वच्छ ॥ ६६ ॥
धम्माणुट्ठाणस्स वि कालो सो चेव होति पुरिसस्स । सामत्थं जत्थ समत्थ–कज्जविसयं परिप्फुरति ॥ ६७ ॥
निरवज्जिंदियसामत्थ–जोगओ सइ परक्कमे चेव । सयलाण वि करणीयाण पच्चलो जायए पुरिसो ॥ ६८ ॥
जइया पुण सयलिंदियवेयल्लवसेण नीसहसरीरो । इह उट्ठिओ पि न तरइ तइया किं कुण उ कायव्वं ॥ ६९ ॥

---

किं न कृतं पुत्र ? मया मनुष्य जन्मनि यदुचितं कृत्यम् । सुविशिष्टलोक हृदयस्य तुष्टितस्य तुष्टिजनकं सदा ॥ ६३ ॥ तथाहि–अनुरू-
पस्थानवदना नीता लक्ष्मीः श्लाघनीयत्वम् । आरोपितभार क्षमस्कन्धश्च सुतस्त्वं जनितः ॥ ६४ ॥ निजवंश प्रसूतानां चिरपुरुषाणां क्रम-
श्चानुसरितः । इति कृतकृत्यः सांप्रति परलोकहितं करिष्याभि ॥ ६५ ॥ यत्पुनर्बलवीर्यपराक्रमाणां सफलत्वादिकं त्वया । पूर्व ममोपदिष्टं
तदपि न युक्तं यतो वत्स ? ॥ ६६ ॥ धर्मानुष्टानस्यापि कालः स चैव भवति पुरुषस्य । सामर्थ्य यत्र समस्तकार्यविषयं परिस्फुरति
॥ ६७ ॥ निरवद्येन्द्रियसामर्थ्य योगात् सति पराक्रमे चैव। सकलानामपि करणीयानां प्रत्यलो जायते पुरुषः ॥ ६८ ॥ यदा पुनः
सकलेम्द्रियवैकल्यवशेन निःसहशरीरः । इह उत्थातुमपि न शक्नोति तदा किं करोति कर्त्तव्यम् ॥ ६९ ॥

जे धम्म अत्थकामा नूणं तरुणत्तणंमि कीरंति। परिणयवयस्स ते चेव होंति गिरिणोव्व दुलंघा ॥ ७० ॥ जिणवयणमुणियतत्तस्स सयलकिरियाकलावसज्जम्मि। बलसमुद्यम्मि तम्हा नरस्स धम्मुज्जमो जुत्तो ॥७१॥ वीरियसज्झो जायइ तवो हि तणुमित्तसाहणी नेय। कुलिसो निद्दलइ गिरिं कयाइ नो मट्टियापिंडो ॥ ७२ ॥ परिवज्जिओ न सामत्थयाए काओ तरेज्ज किंपि नरो। इच्छामि सबलविरिओ काउं धम्मे मइं तेण तहा ॥७३॥ तं विन्नाणं सो बुद्धि–पयरिसो बलसमत्थया सा उ। जा उवओगं वचाति एगंतेणेव अप्पहिए ॥ ७४ ॥ ता पुत्त ममं हियइच्छियंमि अणुमन्निउं तुमं पि सयं। धम्मक्खणं कुणंतो करेज्ज इह लोगकज्जाइ ॥ ७५ ॥ सद्धम्मकरणरहिए अइकमंते खणे अप्पाणं। मुसियं मन्नइ धीरो पमाय दढ दंड चरडेहिं ॥ ७६ ॥

---

ये धर्मार्थकामान् नूनं तरुणत्वे क्रियन्ते । परिणतवयसस्ते चैव भवन्ति गिरय इव दुर्लंघ्याः ॥ ७० ॥ जिनवचनज्ञाततत्त्वस्य सकलक्रियाकलापसज्जे। बलसमुदये तस्मान्नरस्य धर्मोद्यमोयुक्तः ॥ ७१ ॥ वीर्यसाध्यं जायते तपो हि तनुमात्र साधनं नैव। कुलिशो निर्दलति गिरिं कदापि न मृत्तिकापिण्डः ॥ ७२ ॥ परिवर्जितो न सामर्थ्यतया कर्त्तुं शक्नोति किमपि नरः । इच्छामि सबलवीर्यः कर्त्तुं धर्मे मतिं तेन तथा ॥ ७३ ॥ तद् विज्ञानं सा बुद्धि प्रकर्षो बलसामर्थ्यता सा तु। या उपयोगं व्रजति एकान्तेनैव आत्महिते ॥७४॥ तत् पुत्र ? मम हितेष्टेऽनुमन्तुं त्वमपि स्वयम्। धर्मक्षणं कुर्वन् कुर्यारिह लोककार्याणि ॥ ७५ ॥ यतः सद्धर्मकरणरहितेऽतिक्रान्ते क्षणेऽप्यात्मानम्। मुषितं मन्यते धीरः प्रमाद दृढ दण्डचरटैः ॥ ७६ ॥

कुज्जा य मइं सुधम्मे जावज्जवि पभवई चिरं जीयं। संकिन्नीभूयम्मी तम्मी किं कीरए पच्छा ॥ ७७ ॥ जइयव्वं चिय धम्म-क्खणम्मि न पमाइयव्वयं तत्थ। सद्धम्म निरयनरे जं जायति जीवियं सहलं ॥७८॥ जे निच्चं धम्मरया अमय चिय ते जगमया वि नरा। जीवं ता वि मयच्चिय ते उण जे पावपडिबद्धा ॥ ७९ ॥ जाइजरामरणहरं सद्धम्मरसायणं पिवेज्जसया। पीएण जेण जायति पुत्तय मणनिव्वुईपरमा ॥ ८० ॥ तहा-धम्मज्झाणेण मणं तयणुट्ठाणेण मणुयजम्मंपि। पसमज्जणेण य सुयं पुत्त पयत्तेण सलहेज्जा ॥ ८१ ॥ इच्चाइ वयणेहिं पुत्तो पडिवोहिओ समाणो सो। अणुमन्नेज्जा पियरं परलोयहियत्थचित्तीए ॥ ८२ ॥ पुत्तपडिबोहदारं चउत्थमेत्थं मए समक्खायं। सुट्ठियघडणापडिदारमिण्हि पंचमगमक्खामि ॥ ८३ ॥

---

कुर्याच्च मतिं सुधर्मे यावदद्यापि प्रभवति चिरं जीवितम्। संकीर्णीभूते तस्मिन्किं क्रियते पश्चात् ॥ ७७ ॥ यतितव्यमेव धर्मक्षणे न प्रमादयितव्यं तत्र। सद्धर्मे निरतनरे यज्जायते जीवितं सफलम् ॥ ७८ ॥ ये नित्य धर्मरता अमृता एव ते जगति मृता अपिनराः। जीवन्तोऽपि मृता एव ते पुनर्ये पाप प्रतिबद्धा ॥ ७९ ॥ जातिजरामरणहरं सद्धर्मरसायनं पिबेत्सदा। पीतेन येन जायते। पुत्र ? मनोनिर्वृतिः परमा, तथा ॥ ८० ॥ धर्मध्यानेन मनस्तदनुष्ठानेन मनुज जन्ममपि। प्रशमार्जनेन च श्रुतं पुत्र ? प्रयत्नेन सफलय ॥८१॥ इत्यादि वचनैः पुत्रः प्रतिबोधितः समानं सः। अनुमन्येत पितरं परलोकहितार्थचिन्तायाम् ॥ ८२ ॥ पुत्र प्रतिबोध द्वारं चतुर्थमत्र मया समाख्यातम्। सुस्थितघटनाप्रतिद्वारमिदानीं पंचममाख्यामि ॥ ८३ ॥

अह सो अहिगयसत्तो कह कहवि तणुब्भवेणणुन्नातो। पइसमयमुत्तरोत्तर–वड्ढंतविसुद्धपरिणामो ॥ ८४ ॥ अप्पविणासासंकाए मुच्चमाणोव्व रागदोसेहिं। जोगोत्ति कलिय सहसा सरिज्जमाणो व्व पसमेण ॥ ८५ ॥ पुव्वकम्मकुलसेलदलण दंभोलिविब्भममदब्भं। चारित्ताराहणमुज्जएण चित्तेण पच्छित्तो ॥ ८६ ॥ संसारस-मुत्थसमत्थ–वत्थुविगुणत्तणं च भावेंतो। पेच्छंतो सुहसुमिणो य कम्मलाघववसेण जहा ॥ ८७ ॥ किर अज्ज-मए पत्तो पवित्तफलफुल्लसीयलच्छाओ। पवरतरूतच्छायाइएहिं आसासिओ य दढं ॥ ८८ ॥ उत्तारिओय केणवि पहाणपुरिसेण पयइभीमाओ। हत्थावलंबदाणेण सागराओ अपाराओ ॥ ८९ ॥ इच्चाइ सुमिणादंसण–पमोयवसपसरमाणरोमंचो। पडिबुद्धो वि समाणो स विम्हयं इय विचिंतेज्ज ॥ ९० ॥

---

अथ सोऽधिकृतसत्त्वः कथं कथमपि तनूद्भवेनानुज्ञातः। प्रतिसमयमुत्तरोत्तरवर्धमानविशुद्धपरिणामः ॥ ८४ ॥ आत्मविनाशाशंकया मुच्यमान इव रागद्वेषाभ्याम्। योग्य इति कलित्वा सहसा स्त्रियमाण इव प्रशमेन ॥ ८५ ॥ पूर्वकृतकर्मकुलशैलदलनदम्भोलिविभ्रममदभ्रं। चारित्राराधनमुद्यतेन चित्तेन प्रक्षिप्तः ॥ ८६ ॥ संसारसमुत्थसमस्तवस्तु विगुणत्वं च भावयन्। पश्यन् शुभस्वप्नांश्च कर्मलाघववशेन यथा ॥ ८७ ॥ किलाद्य मया प्राप्तः पवित्रफलपुष्पशीतलच्छायः। प्रवरतरुस्तच्छायादिकैराश्वासितश्च दृढम् ॥ ८८ ॥ उत्तारितश्च केनापि प्रधानपुरुषेण प्रकृतिभीमात्। हस्तावलम्बदानेन सागरादपारात् ॥ ८९ ॥ इत्यादि स्वप्नदर्शनप्रमोदवशप्रसरद्रोमाञ्चः। प्रतिबुद्धोऽपि समानः सविस्मयमिति विचिन्तेत् ॥ ९० ॥

एवं विहं न दिट्ठं न सुयं सुमिणं नया वि अणुभूयं । तामन्ने कल्लाणं भावि ममं किंपि अह कहवि ॥ ९१ ॥ तप्पुन्नपगरिसागरिसिएव्व कालकमेण विहरंते । पुव्वगविट्ठे सुट्ठिय मुणिवइणो आगए सोचा ॥ ९२ ॥ आगमणेणं एएसिं नूणं किं किं न भावि भद्दं मे । के वा निसामइस्सामि नेव सिद्धंतपरमत्थे ॥ ९३ ॥ पुव्विं निसुए थिरपरिचिए य काहामहंति चिंतंतो । गच्छेज्ज गुरुसमीवे पमोयभरभरियसव्वंगो ॥ ९४ ॥ काउं पयाहिणो तिय–माणंदजलाउलच्छिविच्छोहो । तो पाएसु पडेज्जा निडालताडिय धरावट्ठो ॥ ९५ ॥ अह पज्जुवासिऊणं सोउ च तदंतिए समयसारं । सो एस सुमिणदिट्ठो सुविसिट्ठमहाफलो साही ॥ ९६ ॥ सोच्चिय एसो हत्थावलंवदाया मम समुदंतो । एवं विचिंतयंतो पत्थावंम्मि भणेज्ज गुरुं ॥ ९७ ॥

---

एवं विधं न दृष्टं न श्रुतं स्वप्नं न चापि अनुभूतम् । तन्मन्ये कल्याणं भावि मम किमपि अथ कथमपि ॥ ९१ ॥ तत्पुण्य प्रकर्षाकर्पितानिव कालक्रमेण विहरतः । पूर्वगवेपितसुस्थितमुनिपतीनागतान् श्रुत्वा ॥ ९२ ॥ आगमनेनैतेषां नूनं किं किं न भाविभद्रं मे । कान् वा निशामयिष्यामि नैव सिद्धान्त परमार्थान् ॥ ९३ ॥ पूर्वनिश्रुतान्स्थिरपरिचितांश्च करिष्याम्यहमिति चिन्तन् । गच्छेद् गुरुसमीपे प्रमोदभार भरितसर्वांगः ॥ ९४ ॥ कृत्वा प्रदक्षिणात्रयमानन्दजलाकुलाक्षिविक्षोभः । ततः पादयोः पतेल्ललाटताडितधरापृष्ठः ॥ ९५ ॥ अथ पर्युपास्य श्रुत्वा च तदन्तिके समयसारम् । स एष स्वप्नदृष्टः सुविशिष्ट महाफलः सोऽऽख्यत् ॥ ९६ ॥ स एव एष हस्तावलम्बदाता मम समुद्रान्तः । एवं चिन्तयन् प्रस्तावे भणति गुरुम् ॥ ९७ ॥

भयवम तुच्छ विसप्पिर-मिच्छत्तजलप्पवाह पडिहत्थं । दीसंतमहाभीसण-मोहमहावत्तसयकिन्नं ॥ ९८॥ अणवरयमउणजम्मण-महल्लकल्लोलवाउलियपारं । पइसमयभमिरबहुरोगसोगमयरोरगाइन्नं ॥ ९९॥ पयईए गंभीरं अणोरपारं च पयइओ चेव । पयईए य रउद्दं अपत्तमुद्दं भवसमुद्दं ॥ ३००० ॥ पव्वज्जाणवत्तं समारुहित्ता विलंघिउं एयं । निज्जामगेण तुमए हत्थं वंछामि मुणिनाह ॥ १ ॥ अह धम्मगुरूपसरंत भूरिकारुन्नमंथरपुडाए । अंतो फुरंतणुग्गह वससवियासाए दिट्ठीए ॥ २ ॥ अणुगिण्हंतो व समत्थ तित्थजलण्हाणपूयपावंव । पकरिंतो महुरगिरए तं चेवं पडिभणेज्जा ॥ ३ ॥ हंभो देवाणुप्पिय चित्ताचिन्ता य समत्थभवसरूवस्स । पडिवक्खपक्ख निरिकत्तसव्वविसयाभिलासिस्स ॥ ४ ॥

---

भगवन्न तुच्छविसर्पिर्मिथ्यात्व जलप्रवाह प्रतिहस्तम् । दृश्यमानमहाभीषणमोहमहावर्त्तशतकीर्ण्णम् ॥ ९८ ॥ अनवरतमरणजन्ममहाकल्लोलव्याकुलितपारम् । प्रतिसमयभ्रमिरबहुरोगशोकमकरोरगा कीर्ण्णम् ॥ ९९ ॥ प्रकृत्या गम्भीर मनोरपारं च प्रकृत्या चैव । प्रकृत्या च रौद्रमप्राप्तमुद्रं भवसमुद्रम् ॥ ३००० ॥ प्रव्रज्यायानपात्रं समारुह्य विलंघितुमेतम् । निर्यामकेन त्वया हस्तं वांच्छामि मुनिनाथ ? ॥१॥ अथ धर्मगुरुः प्रसरद् भूरिकारुण्य मन्थर पुटया । अन्तःस्फुरदनुग्रहवशसविकाशया दृष्ट्या ॥२॥ अनुगृह्णन्निव समस्ततीर्थजलस्नानपूतपापमिव । प्रकुर्वन् मधुरगिरया तं चैवं प्रतिभणेत ॥ ३ ॥ भो भो देवानुप्रिय? चिन्ताच समस्तभवस्वरूपस्य । प्रतिपक्षपक्षनिक्षिप्तसर्वविषयाभिलाषिणः ॥ ४ ॥

आसंसापंकविमुक्क–चित्तवित्तिस्स जिणपमायस्स । पसमरसपाणपइ–खणपवड्ढमाणपिवासस्स ॥ ६ ॥ परमूस्सवट्ठाणट्ठवियसमयविहिसारम रणकालस्स । अच्चन्तं जुत्तमिमं तुह काओ एत्थ पत्थावे ॥ ७ ॥ आलोइऊण नवरं पडिवन्न गुणाइयारमुज्जुत्तो । मणवंछियं महायस करेसु निरवज्जपवज्जं ॥ ८ ॥ एवं चिय गिहिणो पाउणंति चिरचिन्नसुगिहिधम्मस्स । फलमहवा पज्जंते संथारगदिक्खगहणेण ॥ ९ ॥ तदसंपत्तीए पुण सामाइय भावपरिणया संता । सुमुणिव्व चत्तसंगा भत्तपरिण्णं पवज्जंति ॥ १० ॥ इच्छामो अणुसट्ठिं तिकट्टु वहुमन्निउं गुरुगिरं सो । चिरकालपुन्नवंछोत्ति किं पिइए जंपइ सखेयं ॥ ११ ॥

---

आशंसापङ्कविमुक्तचित्तवृत्तेर्जितप्रमादस्य । प्रशमरसपाने प्रतिक्षणं प्रवर्धमानपिपासस्य ॥ ६ ॥ परमोत्सवस्थानस्थापितसमयविधिसारमरणकालस्य । अत्यन्तं युक्तमिदं तव कर्तुमत्र प्रस्तावे ॥ ७ ॥ आलोच्य नवरं प्रतिपन्नगुणातिचारमुद्युक्तः । मनोवांछितां महायशः? कुरुस्व निरवद्यप्रव्रज्याम् ॥ ८ ॥ एवमेव गृहिणः प्राप्नुवन्ति चिरचीर्ण्णसुगृहिधर्मस्यफलमथवापर्यन्ते संस्तारकदीक्षा ग्रहणेन ॥ ९ ॥ तदसंप्राप्त्यां पुनः सामायिकभावपरिणताः सन्तः । सुमुनिरिवत्यक्तसंगा भक्तप्रतिज्ञां प्रपद्यन्ते ॥ १० ॥ इच्छामोऽनुशास्ति इतिकृत्वा वहुमत्वा गुरुगिरां सः । चिरकाल पूर्णवांछ इति किं प्रीत्या जल्पति सखेदम् ॥ ११ ॥

अहह न कहिंपि भयवं विन्नाओ वि हु मए अपुन्नेण । एत्तियमेत्तकालं अत्थओ ता दंसणं तुम्ह ॥ १२ ॥
अहवा चिठ्ठउ दंसणछायासेवाइसंभवो ताव । कह कप्पपायवं पइ विन्नाणं पिहु अपुन्नाण ॥ १३ ॥ सयलपुहवीपयाणं पयडपयावो वि जह सहस्सकरो । निच्चमविन्नाउच्चिय सहावतामसखगकुलस्स ॥ १४ ॥ एवं ममाविसामिय मोहमहातामसेकपयइस्स विगुणस्स य अच्चंतं कह व तुमं दंसणं एसि ॥ १५ ॥ एस पुण मोहमइलस्स मज्झदोसो न चेव पहु तुज्झ । पयडोच्चिय दिणनाहो उलुएण अदीसमाणो वि ॥ १६ ॥ अणुपयमक्खलिय-प्पसरंतसुकंतकित्तिकोस तुमं । इह कत्थ कत्थ तह केण केण भयवं न विन्नाओ ॥ १७ ॥
अवि य-वासावज्ज विहारी जइवियनविकत्थए गुणेनियए । अभणंतोच्चिय नज्जइ पयइच्चिय सा गुणगणाणं ॥१८॥

---

अहह न कथमपि भगवन्? विज्ञातोऽपि हि मया अपुण्येन । एतावन्मात्र कालमर्थतस्तद् दर्शनं युष्माकम् ॥१२॥ अथवा तिष्ठतु दर्शनच्छायासेवादिसंभवस्तावत् । कथं कल्पपादपं प्रति विज्ञानमपि ह्यपुण्यानाम् ॥ १३ ॥ सकलपृथवीप्रजानां प्रकटप्रतापोऽपि यथा सहस्रकरः । नित्यमविज्ञात एव स्वभाव तामसखगकुलस्य ॥ १४ ॥ एवं ममापि स्वामिन्? च मोहमहातामसैकप्रकृतेः । विगुणस्य चात्यन्तं कथं च तव दर्शनमिहास्ति ॥ १५ ॥ एष पुनर्मोहमलिनस्य मम दोषो न चैव प्रभो? तव । प्रकट एव दिननाथ उलुकेनादृश्यमानेऽपि ॥ १६ ॥ अनुपदमस्खलितप्रसरत्सुकान्तकीर्तिकोशस्त्वम् । इह कुत्र कुत्र तथा केन केन भगवन्न विज्ञातः ॥ १७ ॥ अपि च वर्षावर्ज्यविहारी यद्यपिचनविकथयति गुणान्निजकान् । अभणन्नेव ज्ञायते प्रकृतिरेव सा गुणगणानाम् ॥ १८ ॥

भमरेहिं महुयराहिं य सेविज्जइ जह विसिट्ठगंधेणं । पाउस कालकयंबो तह नाह तुमंपि लोगेण ॥ १९ ॥ कत्थ व न जलइ अग्गी कत्थ व चंदो न पायडो होति । कत्थ व न होंति पयडा सुगुणा तुम्हारिसा पुरिसा ॥ २० ॥ उदए न जलइ अग्गी मेहच्छइओ न दीसए चंदो । तुम्हारिसा पुण पहू सव्वत्थ सया पभासंति ॥ २१ ॥ अच्चंतमणहरो विहु नाणंदं जणइ कमलसंडाण । छणससहरो न सारय-रवीविरम्मो वि कुमुयाणं ॥ २२ ॥ भयवं तुमं पुण महा-पसमप्पमुहप्पहाणगुणजोगो । परमपरितोसकारी सव्वस्सवि जीवरासिस्स ॥ २३ ॥ किं बहुणा भणिएणं अज्जं मह सवसामिसम्माणो । अज्जं चिय अणुकूला जाया भवियव्वया मज्झ ॥ २४ ॥

---

भ्रमरैर्मधुकरीभिश्च सेव्यते यथा विशिष्टगन्धेन । प्रावृट्कालकदम्बस्तथा नाथ ? त्वमपि लोकेन ॥ १९ ॥ कुत्र वा न ज्वलत्यग्निः कुत्र वा चन्द्रो न प्रकटो भवति । कुत्र वा न भवन्ति प्रकटाः सुगुणा युष्मादृशः पुरुषाः ॥ २० ॥ उदये न ज्वलत्यग्निर्मेघाच्छादितो न दृश्यते चन्द्रः । युष्मादृशः पुनः प्रभवः सर्वत्र सदा प्रभाषन्ते ॥ २१ ॥ अत्यन्तमनोहरोऽपि हि नानन्दं जनयति कमलखण्डानाम् । छन्नशशधरो न शारदरविरपिरम्योऽपि कुमुदानाम् ॥ २२ ॥ भगवन् ! त्वं पुनर्महाप्रशमप्रमुखप्रधानगुणयोगः । परमप्रतोषकारी सर्वस्यापि जीवराशेः ॥ २३ ॥ किं बहुनाभणितेनाद्य मम सवस्वामिसन्मानम् । अद्यएवानुकूला जाता भवितव्यता मम ॥ २४ ॥

अज्जं वद्धावणयं अज्जं सयलूसवाण समवायो। दिणमवि अज्ज कयत्थं अज्जं चियसुप्पभायंति ॥ २५ ॥ अज्जं चिय चित्तरई अज्जं चिय परमबंधुसंबंधो । अज्जकयत्थो जम्मो साफल्लं लोयणाणज्ज ॥ २६ ॥ अज्ज समीहियलाभो अज्जं चिय पुन्नरासिणा फलियं । अज्ज सवंछं लच्छीए पेच्छियं किर ममाभिमुहं ॥ २७ ॥ निरवज्जं अज्जमए अणप्पपुन्नाण पावणिज्जं जं। तुह पावपंसुपसमण–मुणिंदपयपंकयं पत्तं ॥ २८ ॥ इय सुट्ठिय-घडणनाम–धेयपंचममिमं पडिद्दारं। वन्नियमेत्तो भन्नति छट्ठं आलोयणादारं ॥ २९ ॥ अह सो सुगुरुवदिट्ठं उवट्ठिओणुट्ठिउं महासत्तो। सुस्सावगो विसोत्तिय–वसेण एवं न चिंतेज्जा ॥ ३० ॥ भुज्जो भुज्जो बहुसो बहूण सुगुरूणमंतियम्मि मए। आलोयणा वि दिन्ना चरियाणिय पायच्छित्ताणि ॥ ३१ ॥

---

अद्य वद्धावनकमद्य सकलोत्सवानां समवायः दिनमप्यद्य कृतार्थमद्य एव सुप्रभातमिति ॥ २५ ॥ अद्य एव चित्तरतिरद्य एव परमबन्धु सम्बन्धः। अद्य कृतार्थं जन्म साफल्यं लोचनानामद्य ॥ २६ ॥ अद्य समीहितलाभोऽद्य एव पुण्यराशिना फलितम्। अद्य सवांछां लक्ष्म्या प्रेक्षितं किल ममाभिमुखम् ॥ २७ ॥ निरवद्यमद्य मयाऽनल्पपुण्यानां प्रापनीयं यत् । तव पापपांसुप्रशमनं मुनीन्द्र ? पदपंकजं प्राप्तम् ॥ २८ ॥ इति सुस्थितघटना नामधेयपञ्चममिदं प्रतिद्वारम् । वर्णितमितो भण्यते षष्ठमालोचना द्वारम् ॥ २९ ॥ अथ स सुगुरूपदिष्टमुपस्थितोऽनुष्ठातुं महासत्त्वः। सुश्रावकोऽपि शंका वशेनैवं न चिन्तयेत् ॥ ३० ॥ भूयो भूयो बहुशो बहूनां सुगुरूणामन्तिके मया। आलोचना वितीर्णा चरितानि च प्रायश्चित्तानि ॥ ३१ ॥

सव्वत्थ वि जयणासार-मेव किरियासु वट्टमाणस्स । थेवं पि महनेवत्थि किंपि आलोइयव्वंति ॥ ३२ ॥ किंतु दुक्खगम-सुहुमाइयारसंसोहणत्थमवि देज्जा। आलोयणं पडुच्च चारित्ताइयारमिह एक्कं ॥ ३३ ॥ नाणदंसणतववीरिय-गोयरालोयणं तु साहुव्व । उवरियवुत्तविहीए देज्जा ता देसचारित्तो ॥ ३४ ॥ पुढविदगागणिपवणे वणेयपत्तेयणंतरूवम्मि । बितिचउपंचिंदियगोयरंपि अइयार मालोए ॥ ३५ ॥ तत्थ पुढवाइपणगे सम्मं जयणापमायदोसेणं । जं न कया कहमवि तयं आलोएज्जा सुयविहीए ॥ ३६ ॥ बितिचउपणिंदियाणं परितावाईण करणओ जो य । अइयारो भंगोवा वियडेज्जातं च हियकंखी ॥ ३७ ॥ अलिए अब्भक्खाणाइ दिट्ठिवंचणमदत्तदाणंमि । तुरियवएसुमिणम्मि वि विवक्खकिड्डंगफासाइ ॥ ३८ ॥

---

सर्वत्रापि यतनासारमेव क्रियासुवर्त्तमानस्य । स्तोकमपि मम नैवास्ति किमप्यालोचितव्यमिति ॥ ३२ ॥ किन्तु दुःखगमसूक्ष्मातिचारसंशोधनार्थमपि दातव्या । आलोचनामाश्रित्य चारित्रातिचारमिहैकम् ॥ ३३ ॥ ज्ञानदर्शनतपोवीर्यगोचरालोचनं तु साधुरिव । उपरितनोक्तविधिना दातव्यातदा देशचारित्रम् ॥ ३४ ॥ पृथ्व्युदकाग्निपवने वने च प्रत्येकानन्तरूपे । द्वित्रिचतुःपञ्चेन्द्रियगोचरमप्यतिचारमालोचेत् ॥ ३५ ॥ तत्र पृथ्व्यादिपञ्चके सम्यग् यतनाप्रमाद दोषेण । यन्न कृता कथमपि तमालोचयेच्छ्रुतविधिना ॥ ३६ ॥ द्वित्रिचतुः पञ्चेन्द्रियाणां परितापादीनां करणाद् यश्च । अतिचारो भंगो वा वितरेत् तं च हितकांक्षी ॥ ३७ ॥ अलीकेऽभ्याख्यानादि दृष्टिवञ्चनमदत्तदाने । तुरियव्रते स्वप्नेऽपि विवक्षा क्रीडाङ्गस्पर्शादि ॥ ३८ ॥

तह सकलत्तादन्नत्थ–केलिगुज्झंगफासणाईयं । वीवाहपीइकरणाइ इत्थिपुरिसाणमविसेसा ॥ ३९ ॥ तह य परिग्गहमाणो खित्ताइअइकमं समालोए । दिसि माणानु परेणं सयंगमं अन्नपेसं च ॥४०॥ उवभोगपरीभोगे अणंतबहुवीयगाइभोयणओ । कम्मओयखरकम्मं इंगालाई तहालोए ॥ ४१ ॥ वियडेअणत्थदंडे तेल्लाईणं पमायकरणं तु । पावुवएसं हिंसप्पयाणमवज्झाणमवि सम्मं ॥ ४२ ॥ सामइए फुसणाई दुप्पणिहाणाइछिन्न-णाईय । दंडगचालणमविहाण–करणपमुहं समालोए ॥ ४३ ॥ देसावगासियम्मि वि पुढविकायाइसंवराकरणं । अजयणचीवरधुवाणाइयं च सव्वं समालोए ॥ ४४ ॥ पोसहविसए सेज्जाथंडिलपडिलेहणाइ जं न कयं । तप्पालणं च सम्मं जं न कयं तंपि वियडेज्जा ॥ ४५ ॥

---

तथा स्वकलत्रादन्यत्र केलिगुह्याङ्गस्पर्शनादिकम् । विवाहप्रीतिकरणादि स्त्रीपुरुषाणामविशेषात् ॥ ३९ ॥ तथा च परिग्रहमाने क्षेत्राद्यतिक्रमं समालोचयेत् । दिग्मानात् परेण स्वयंगममन्यप्रैष्यं च ॥ ४० ॥ उपभोगपरिभोगेऽनन्तबहुबीजकादिभोजनतः । कर्मतश्च खरकर्मंमंगारादि तथा आलोचयेत् ॥ ४१ ॥ विकटाननर्थदण्डान् तैलादीनां प्रमादकरणं तु । पापोपदेशं हिंस्रप्रदानमपध्यानमपि सम्यक् ॥ ४२ ॥ सामायिके स्पर्शनादि दुःप्रणिधानादि छेदनादि च । दण्डकचालनमविधानकरणप्रमुखं समालोचयेत् ॥ ४३ ॥ देशावकाशिकेऽपि पृथ्वीकायादि संवराकरणम् । अयतनचीवरधावनादिकं च सर्वं समालोचयेत् ॥ ४४ ॥ पौषधविषये शय्यास्थण्डिलप्रतिलेखनादियन्न कृतम् । तत्पालनं च सम्यग् यन्न कृतं तदपि वितरेत् ॥ ४५ ॥

अतिहिविभागो य कओ असुद्ध अमणुन्नभत्तपाणेहिं । इयरेहिं पुण न कओ जईणं जं तं पि वियडेज्जा ॥ ४६ ॥ नियमेण गिण्हियव्वा अभिग्गहा केइ धम्मियजणेणं । निरभिग्गहस्स जम्हा न वहए आसिउं तस्स ॥ ४७ ॥ एएसिं जमग्गहणं पमायओभंसणा व गहियाणं । एसो उ अइयारो भणितो आलोयणाविसओ ॥४८॥ इयदेसचरणविसए अइयारे वियडिउं अह जइव्व। तव विरियदंसणगए वि नूण वियडेज्ज अइयारे ॥४९॥ तहा–साहुसाहुणिवग्गे गिलाण ओसहनिरूवणं न कयं । जिणइंदमंदिराइसु पमज्जणाइय जं न कयं ॥ ५० ॥ चेइयभवणंतोजं सुत्तं भुत्तं च पीयमहजं च । जं पाणिपायपमुहं पक्खालणं तं च वियडेज्जा ॥ ५१ ॥ तंबूलभक्खणाविल खेलसिंधाणजल्लखिवणाई । तहा साहणाईयं वालविउरणं तह जिणगिहंतो ॥ ५२ ॥

---

अतिथिविभागश्च कृतोऽशुद्धामनोज्ञभक्तपानैः । इतरैः पुनर्न कृतो यतीनां तदपि वितरेत् ॥ ४६ ॥ नियमेन ग्रहितव्या अभिग्रहाः केऽपि धार्मिक जनेन । निरभिग्रहस्य यस्मान्न वर्त्तत आसितुं तस्य ॥ ४७ ॥ एतेषां यदग्रहणं प्रमादतो भ्रंसनावा गृहीतानाम् । एष त्वतिचारो भणित आलोचनाविषयः ॥ ४८ ॥ इति देशचरणविषयेऽतिचारान् वितरयित्वाथ यतिवत् । तपोवीर्य दर्शन गतानपिनूनं विनरेदतिचारान् ॥ ४९ ॥ तथा, साधु साध्वीवर्गे ग्लानौषधनिरूपणं न कृतम् । जिनेन्द्रमन्दिरादिषु प्रमार्जनादि च यन्न कृतम् ॥ ५० ॥ चैत्यभवनान्तर्यत् सुप्तं भुक्तं च पीतमथ यच्च । यत् पाणिपादप्रमुखाङ्गप्रक्षालणं तच्च वितरेत् ॥ ५१ ॥ तांबूलभक्षणाविलनिष्ठीवश्रृंघाणमलक्षिपनादि । तथा साधनादिकं वालविकर्तनं तथा जिनगृहान्तः ॥ ५२ ॥

जमणुचियासणगहणं असकहावियजिणिंदभवणंतो । विहिया तं सव्वं पिहु जिणभत्तिपरो उ वियडेज्जा ॥५३॥

यदनुचितासन ग्रहणमसत्कथापि च जिनेन्द्रभवनान्तः । विहितातत्सर्वमपिहि जिनभक्तिपरस्तु वितरेत् ( कथयेत् ) ॥ ५३ ॥

॥ इति प्रथम भागः ॥